देवानां परमो विष्णुरवमोऽग्निरिति श्रुतेः ॥
अयं विष्णुरजोऽनादिरनन्तो विश्वकारणः ॥ २ ॥

सूरयस्तत्पदं श्रेष्ठं सदा पश्यन्ति नेतरे ॥
वीर्याणि तस्य कोऽप्यत्र न वेदोरुक्रमस्य च ॥ ३ ॥

प्रागुत्पाद्य विधिं नाभेर्वेदान्दत्वा ततो जगत् ॥
उत्पादयत्यसावेव बुद्धिदीपो मुमुक्षुराट् ॥ ४ ॥

भीत्याप्यधिकृता यस्मा उद्वहन्ति बलिं सुराः ॥
माययाश्नन्त्यन्यदत्तं सम्राज इव भूमिपाः ॥ ५ ॥

यस्य भ्रूभङ्गमात्रेण त्रिलोकी नश्यति क्षणात् ॥
इच्छामात्रे पुनर्जाते सेश्वरोत्पद्यते च सा ॥ ६ ॥

आत्मभूतस्यास्य शत्रुः स क्रूरो यात्यधोगतिम् ॥
दुरत्ययामपि घ्नन्ति मायां यद्रूपचिन्तकाः ॥ ७ ॥

अर्वाचीनाः सुराः केऽपि न विदुर्यं तदुद्भवाः ॥
स सर्वज्ञोऽपि चात्मानं कात्स्न्यार्ज्ञो वेद वेद वा ॥ ८ ॥

यस्यैकपादियं माया त्रिपादस्यामृतं दिवि ॥
स देवदेवदेवेशः कथं नार्च्यस्त्रिविक्रमः ॥ ९ ॥

श्रीवैष्णवैशगाणेशसौर्यशाक्तादिरूपधृक् ॥
दत्तात्रेयोऽस्त्वजोऽनंतः सदा मे हृदि सद्गुरुः ॥ १० ॥

कृत्वैकदेशभक्तिं ये मात्सर्येण द्विषन्ति च ॥
अन्यदेवं च तद्भक्तं ते यान्ति नरकं ध्रुवम् ॥ ११ ॥

विष्णुः शिवो गणेशोऽर्कः शक्तिश्चेति पृथङ् न हि ॥
एकोऽजः पञ्चधा जातः कुतो भेदोऽस्ति दैवतैः ॥ १२ ॥

एतानीशाङ्गानि तृप्येदेकस्यापीह तर्पणात् ॥
यथास्याक्ष्यादितृप्त्यांगी चोद्विजेदेकनिन्दया ॥ १३ ॥

देवद्रोहस्ततस्त्याज्यस्तद्भक्तस्यापि सर्वदा ॥
यथारुचीश्वरः सेव्यो नान्यथा भेदमाचरेत् ॥ १४ ॥

इति पञ्चायतनमाहात्म्यम्

---

# श्रीशंकरस्तोत्राणि

## १३ अनादिकल्पेश्वरस्तोत्रम्

कर्पूरगौरो भुजगेंद्रहारो गंगाधरो लोकहितावतारः ॥
सर्वेश्वरो देववरोऽप्यघोरो योऽनादिकल्पेश्वर एव सोऽसौ ॥ १ ॥

कैलासवासी गिरिजाविलासी श्मशानवासी स्वमनोनिवासी ॥
काशीनिवासी विजयप्रकाशी योऽनादिकल्पेश्वर एव सोऽसौ ॥२॥

त्रिशूलधारी भवदुःखहारी कंदर्पवैरी रजनीशधारी ॥
कपर्दधारी भजकानुसारी योऽनादिकल्पेश्वर एव सोऽसौ ॥ ३ ॥

लोकाधिनाथः प्रमथाधिनाथः कैवल्यनाथः श्रुतिशास्त्रनाथः ॥
विद्याधिनाथः पुरुषार्थनाथो योऽनादिकल्पेश्वर एव सोऽसौ ॥ ४ ॥

लिंगं परिच्छेत्तुमधोगतोस्य नारायणश्चोपरि लोकनाथः ॥
बभूवतुस्तावपि नो समर्थौ योऽनादिकल्पेश्वर एव सोऽसौ ॥ ५ ॥

यं रावणस्तांडवकौशलेन गीतेन चातोषयदस्य सोत्र ॥
कृपाकटाक्षेण समृद्धिमाप योनादिकल्पेश्वर एव सोऽसौ ॥ ६ ॥

सकृच्च बाणोवनमय्य शीर्षं यस्याग्रतः सोऽप्यलभत्समृद्धिं ॥
देवेंद्रसंपत्त्यधिकां गरिष्ठां योनादिकल्पेश्वर एव सोऽसौ ॥ ७ ॥

गुणान्विमातुं न समर्थ एष शेषश्च जीवोऽपि विकुंठितोऽस्य ॥
श्रुतिश्च नूनं चकितं बभाषे योऽनादिकल्पेश्वर एव सोऽसौ ॥ ८ ॥

अनादिकल्पेश उमेश एतत्स्तवाष्टकं यः पठति त्रिकालं ॥
स धौतपापोऽखिललोकवंद्यं शैवं पदं यास्यति भक्तिमांश्चेत् ॥९॥

इति श्रीवासुदेवानंदसरस्वतीविरचितं अनादिकल्पेश्वर-
स्तोत्रं संपूर्णम् ॥

---

## १४ श्रीशंकरापराधस्तोत्रम्

जय शंकर पार्वतीपते कृपया पाहि परेश सत्पते ।
निजमन्युमिषुं तथेषुधिं परिहार्यैहि हरन्भवांबुधिम् ॥ १ ॥

पशुपाय नमः पिनाकिने वृषवाहाय सुगुप्तनाकिने ।
प्रमथाधिभुवे स्वयंभुवे परविद्याविभवेस्तु शंभवे ॥ २ ॥

प्रवरोस्म्यहमीश पापिनां प्रवरस्त्वं करुणोसि तापिनाम् ।
दयनीय इतः परः क्व ते वद शंभो जगतीह सद्व्रते ॥ ३ ॥

सचराचरविश्वहेतवे प्रभवे ते श्रुतिधर्मसेतवे ।
भिषजेस्तु नमोष्टमूर्तये निजभक्तेप्सितकामपूर्तये ॥ ४ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
शंकरस्तोत्रम् ॥

---

## १५ मृत्युंजयमंत्रगर्भितस्तोत्रम्

वा ण्या  ॐ कारूपिण्या    अ न्त  उ क्तोऽस्य नान्यथा ।
सु रस्  त्रि भुवनेशः स    न स्स  र्वा न्तः स्थितोऽवतु ॥ १ ॥
दे वो  यं सर्व देवाद्यः    सू रि  रु न्मत्तवत्स्थितः ।
वा हो  ब लीवर्दकोऽस्य    या च  क स्येष्टदः स तु ॥ २ ॥
नं दिम्  कं धाधिरूढोपि    त्रि प्र  मि त्यतिगः स्वभूः ।
द शा  य स्य न शंभु तं    सं तं  व न्देऽखिलात्मकम् ॥ ३ ॥
स द्यो  जा तोष्टमूर्तिः स    भू त  वं दिस्तुतोऽजितः ।
र क्ष  म न्मथहन्नाथ    तो क  ध र्माणमद्य माम् ॥ ४ ॥
स्व तोऽ  हे तोजगद्धेतो    द या  ना थांबिकापते ।
र्ती व्रा  सु हृत्त्रिविधहृ    त्ता पा  न्मृ त्योश्च मामव ॥ ५ ॥
कृ ता  ग समपि त्राह्य    त्रे र्मृ  त्यो स्त्वं भिषक्तमः ।
त त्स  न्धि भिंधि सर्वांक    यो ने  र्मु ञ्चस्व मां शिव ॥ ६ ॥
श्री द  पु ष्टिद ते व्याप्तं    दि क्षु  क्षी रनिभं यशः ।
रु ङ्मार्  ष्टि कृद्रक्ष मां त्वं    गं गा  य न्मूर्ध्नि चर्क्षराद् ॥ ७ ॥
द्र ष्टा  व ससि सर्वत्र    ब त  मा मीक्षसे न किं ।
स्तु ते  र्ध र्मेश शक्तिर्नि    र स्त  मृ त्यो न मेज ते ॥ ८ ॥
ति ष्ठा  नं दद चित्ते मे    स मं  ता त् परिपालय ॥ ९ ॥

इति मंत्रगर्भितस्तोत्रं संपूर्णम्

---

## १६ विश्वेश्वरादिस्तुतिः

नमः श्री वि श्वनाथाय देव    वं द्य पदाय ते ।
काशीशा श्वे वतारं मे देव    दे व ह्युपादिश ॥ १ ॥

मायाधी शं महात्मानं सर्व का र णकारणम् ।
वन्दे तं मा धवं देवं यः का शीं चा धितिष्ठति ॥ २ ॥
वन्दे तं ध र्मगोप्तारं सर्व गु ह्यार्थवेदिनम् ।
गणदे वं ढुंढिराजं तं म हां तं स्वविघ्नहम् ॥ ३ ॥
भारं वो ढुं स्वभक्तानां यो यो गं प्राप्त उत्तमम् ।
तं सढुं ढिं दंड पाणिं वंदे गां गतटस्थितम् ॥ ४ ॥
भैरवं दं ष्ट्राकरालं भक्ता भ यकरं भजे ।
दुष्टदं डं शूलशीर्षधरं वा माध्वचारिणम् ॥ ५ ॥
श्रीकाशीं पा पशमनीं दम नीं दुष्टचेतसः ।
स्वर्निःश्रे णिं चाविमुक्तपुरीं म र्त्यहितां भजे ॥ ६ ॥
नमामि च तुराराध्यां सदाऽ णि म्रस्थितिं गुहाम् ।
श्रीगंगे भै रवीं दूरिकुरु क ल्याणि यातनाम् ॥ ७ ॥
भवानि र क्षान्नपूर्णे सद्व र्णि त गुणेऽबिके ।
देवर्षि वं द्यांबुमणिकार्णि कां मोक्षदां भजे ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचिता
विश्वेश्वरादिस्तुतिः संपूर्णा ॥

---

## १७ श्रीकाशीविश्वेश्वरस्तोत्रम्

या षोडशकला काशी तनुरूपा प्रकाशते ॥
ज्ञानगंगान्विता यत्र शंभुरात्मा प्रतिष्ठितः ॥ १ ॥
विश्वनाथः सात्विकधीभवान्यालिंगितः सदा ॥
यद्दर्शनान्न पुनरावृत्तिः कल्पशतैरपि ॥ २ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
काशीविश्वेश्वरस्तोत्रं संपूर्णम् ॥

---

## १८ श्रीनागनाथस्तोत्रम् ॥

ॐ कारवाच्योऽवतु नोंधकारी स्मशानचारी भजकेष्टकारी ॥
न क्षत्रपालंकृतभाल ईशः प्रभुर्गणेशः सकलामरेशः ॥ १ ॥

मः केशवोप्यस्य हि वेद नांतं कुर्यात्स नोऽजो भववेदनांतम् ॥
शि वः स शंभुर्भगवानपायात् परावरेशो गिरिशोऽद्य पायात् ॥२॥

वा हो वृषो लेपनमस्य भूतिर्यत्पादलग्नापि महाविभूतिः ॥
य स्यास्ति चर्मांबरमीश स त्वं सत्वं विशोध्यार्पय मे
स्वतत्वम् ॥ ३ ॥

षडक्षरान्वितं स्तोत्रं यः पठेच्छिवसंनिधौ ॥
स सर्वपापनिर्मुक्तः शिवलोकमवाप्नुयात् ॥ ४ ॥

इति श्री. प. प. वासुदेवानंदसरस्वतीविरचितं
श्रीनागनाथस्तोत्रं संपूर्णम् ॥

---

## १९ शंकरस्तोत्रम् ॥

नमस्तुभ्यं भगवते शंकराय महात्मने ।
जगदुत्पत्तिनाशानां हेतवे मोक्षहेतवे ॥ १ ॥

सर्वदेवाधिदेवाय पार्वतीपतये नमः ।
ऋषियोगिमुनींद्राणां त्वमेव परमा गतिः ॥ २ ॥

ब्रह्मांडगोलके देव दयालूनां त्वमग्रणीः ।
अत एवोल्बणं पीतं त्वया हालाहलं विषम् ॥३॥

गंगाधर महादेव चंद्रालंकृतमस्तक ।
परमेश्वर मां पाहि भयं वारय वारय ॥ ४ ॥

सर्वपापं प्रशमय सर्वतापं निवारय ।
दुःखं हर हराशेषं मृत्युं विद्रावय द्रुतम् ॥ ५ ॥

स्तुतिं कर्तुं न मे शक्तिस्तव वाग्गत्यगोचर ।
देहि सत्संगतिं भक्तिं निश्चलां त्वयि शंकर ॥ ६ ॥

सर्वारिष्टं परिहर सर्वशत्रून्विनाशय ।
दारिद्र्यं हर सर्वेश सर्वान्कामान् प्रपूरय ॥ ७ ॥

मुखे नाम दृशो रूपं हृदये त्वत्पदांबुजम् ।
ममास्तु ते नमः सांब प्रसन्नो भव सर्वदा ॥ ८ ॥

त्वदर्चनविधिं जाने न भक्तिस्त्वयि मे हृदि ।
अथाप्यनुग्रहाणेश केवलं दययोद्धर ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
शंकरस्तोत्रं संपूर्णम् ॥

---

## २० श्रीशंकरस्तोत्रम्

ॐ कारवाच्य सकलार्चितपादपद्म
न ष्टस्वकष्ट तव नौमि सुभद्रसद्म ॥
म त्तारिहंतृचरणं शरणं सदाप्ता-
स्ते भूय ईश जननीजठरं न चाप्ताः ॥ १ ॥

अ हं त्वदर्चादिविधिं न जाने
स्तु तिं च कर्तुं गिरिसूनुजाने ॥
भ क्तिस्त्वयीशे न दृढा ममास्ति
ग रिष्ठसत्सङ्ग उतापि नास्ति ॥ २ ॥

वन् दे पदे ते भुवनाधिराज
वि द्याधिराजाप्यमृताधिराज ॥
श्वे तद्युते भक्तपते नमस्ते
श्व भ्राड्झटित्युद्धर मां भवाख्यात् ॥ ३ ॥

रा जा सुराणां त्वमभीष्टदाता
य द्यप्यहो सिद्धिनिधिप्रदाता ॥
म हाश्मशाने नृकरोटिमालां
हा र्देन धृत्वा प्रकरोषि लीलाम् ॥ ४ ॥

दे वाङ्गलेपनमुतापि चिताविभुतिर्
वा हो वृषः सहचरास्तव भूतवाराः ॥
य स्यांशुकं त्वगशिवापि शिवापि तेऽस्ति
त्रि ष्वीशितः पितृवने सवनेऽपि वासः ॥ ५ ॥

यं ताखिलस्येदृश ईश तेऽपि
ब लारिमुख्या अमरा हि तेऽपि ॥
का शीश जानन्ति परं न तत्त्वं
य स्येशमां चानुगृहाण स त्वम् ॥ ६ ॥

त्रि विक्रमोप्यब्जभवश्च लिंगं
पु रा परिच्छेत्तुमनीश्वरौ ते ॥
रु द्रेदृशस्ते गुणवर्णनाय
षा ण्मातुरे भास्य गुरो प्रभुः कः ॥ ७ ॥

य स्त ईश परिकीर्तयेद्गुणान्
त्रि ष्वपीह सवनेषु भक्तिमान् ॥
पु ण्यवानिह भवेत्तथा नरो
रां कवांबरधरोऽपि नापरः ॥ ८ ॥

त　पो जपो यज्ञमुखा क्रिया या
का चित्प्रमादाद्विकला यदि स्यात् ॥
य　न्नामसंकीर्तनतः सुपूर्णा
त्रि दृग्भवेत्त्वां तमजं गृणामि　　॥ ९ ॥

का लो मृकंडात्मजमर्कचन्द्रमो–
ग्नि नेत्र नेतुं समुपागतस्तदा ॥
का लान्तकागच्छ शिवेत्यहो तदा
ला पश्रुतेस्त्वं तमु मुक्तवानसि　　॥ १० ॥

य　स्मै सकृन्नमश्चक्रे बाणरावण आसुरः ॥
का मपूर्तिस्तयोरासीत्संपद्देवश्रियोऽधिका　॥ ११ ॥

ला भोपरो नश्वर एव कामोऽ
ग्नि वद्धृतेनेश न कामभोगैः ॥
रु　द्रोप्रशाम्यत्यत एव देहि
द्रा क् शांतिदां त्वय्यचलां सुभक्तिम्　　॥ १२ ॥

य　त्नं विना दुःखमुपैति यद्वत्
नी रागमप्येति सुखं च तद्वत् ॥
ल　ब्धुं यते तन्न वृणोमि चार्थं
कं　चित्त्वयीशार्पय भक्तिमेकाम्　　॥ १३ ॥

ठा ये विदा तानपि भक्तियोगो
य　थानुगृह्णाति तथा परो नो ॥
स　र्वेऽपि यस्मादिह पावनाः स्यु
र्वे　दाः प्रमाणं त्विह संशयो नो　　॥ १४ ॥

श्व　पाकमुख्या अपि यस्य भक्त्या
या　जन्त ईशान तवैव लोके ॥

य ज्ञेश चण्डालसुतापि याता
स तीं गतिं विश्रुतमेतदस्ति ॥ १५ ॥
दा रात्मजागारधनादि सर्वं
शि वेह संन्यस्य सदा भजन्ति ॥
वा मं परं त्वां मुहुरत्र ते किं
य मीश मृत्यूद्भवदुःखभाजः ॥ १६ ॥
श्री कंठ सूर्येन्दुपयोनभोग्नि–
म रुद्धरात्मान इमास्तनूस्ते ॥
हा लाहलादानिशमानतोऽस्मि
दे वाधिदेवेश्वर मे प्रसीद ॥ १७ ॥
वा ताशनोपवीतो
य उ पंचास्यस्त्रिलोचनो नग्नः ॥
न न्दिगतो दशहस्तो
मः केस्य स पातु मुन्मग्नः ॥ १८ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीशंकरस्तोत्रं संपूर्णम् ॥

---

## २१ प्रार्थनास्तोत्रम् ॥

शंकर सुखाकर गुरो परमदेव। देहि मयि तेदृश उरोरसकृदेव ॥
किङ्करवरामरतरो परमदेव। पात लवमद्य गतरोष जितदेव ॥ ध्रु ॥ १ ॥
पूर्णकरुणाञ्चितकटाक्षवरदृष्टया। तापशमनं कुरु ममार्य वरदृष्टया ॥
नैव तव तिष्ठति नमःसदनुशिष्टया। ज्ञातमिदमर्थितमिहेदमपि दिष्टया॥२॥
कर्मभिरपारभववारिधिनिरस्तं। काममुखघोरमकरार्तमपशस्तम् ॥
जन्ममुखवीचिभिरितस्तत उदस्तं।त्रस्तमित उद्धर गृहाण मम हस्तम्॥३॥

अस्तशरणार्थिकरुणोक्तमपि किं ते । न श्रुतमपीदृश उपेक्ष्य इह किं ते ॥
उद्धरणमस्य करुणाकर कियत्ते । ऽथापि न मनो द्रवति कोमलमहो
ते ॥ ४ ॥

प्रसीद मे सागस आर्तबन्धो । कारुण्यसिन्धोऽनुपमास्तबन्धो ॥
बन्धो मृषापि व्यथयत्ययं मां । स्वप्नोपमं छिन्ध्यव सर्वतो माम् ॥५॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
प्रार्थनास्तोत्रं संपूर्णम् ॥

---

## २२ द्रव्यर्थिरामेश्वरस्तोत्रम्

भागीरथीपुण्यजलाभिषिक्तो यो ब्रह्महत्याद्यघतः पुनाति ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ १ ॥

यद्दर्शनं कायिकवाचिकादिपापापहं तापहरं वरं च ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ २ ॥

त्रिकालसंदर्शनतोऽपि तृप्तो ददाति सिद्धीरुभयीर्महात्मा ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ३ ॥

रुद्राभिषेकप्रिय ईश्वरो यः सर्वार्थदो भाविककामपूरः ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ४ ॥

यो बिल्वपत्रैस्त्रिदलैर्भवारिः संपूजितो यच्छति भुक्तिमुक्ती ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ५ ॥

संपूजितो योप्यजितः प्रदोषे ददाति भुक्तिं सकलाधिशान्तिम् ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ६ ॥

यः शुद्धचित्तेन हि संस्मृतोऽजो भवत्यरं भक्तजितो जितारिः ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ७ ॥

न ज्ञायते वाङ्मनसातिदूरो देवादिभिर्यन्महिमानियत्तः ॥
रामेश्वरोऽसौ भरताग्रजन्मसंस्थापितः पातु सदा विपद्भ्यः ॥ ८ ॥

रामेश्वराष्टकमिदं सुखदं विखेदं तापत्रयोपशमदं मदमत्सरादम् ॥
भक्तेष्टदं जननमृत्युगदागदं यो भक्त्या पठेत्स परमं पदमेति
शंभोः ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं भरताख्यद्विज-
स्थापितरामेश्वरस्तोत्रं संपूर्णम् ।

---

## २३ व्यर्थिषडाननस्तोत्रम् ॥

दक्षेण हस्तेन गदां दधानः क्रौंचघ्न वामेन सुसावधानः ॥
स शुक्रजो वोऽवतु कार्तिकेयः षाण्मातुरः साम्बसुतोऽर्यजेयः॥१॥

षट्शिरो द्वादशकरो द्विगुणोत्रिज एव किं ॥
सोंऽबासुतो द्विहस्तोऽत्र सुब्रह्मण्यो मयेक्षितः ॥ २ ॥

हत्वा बलात्संपदमाश्वदैवीं पुष्णाति गोपायति वैश्वदेवीम् ॥
सुपूजितस्त्वं सुमनःस्वभक्तगते नमस्तेस्तु सदा विरक्तम् ॥ ३ ॥

विशेषतस्त्वां भुवि दाक्षिणात्या भजन्ति भक्त्या परयाज तेषाम् ॥
अनुग्रहार्थं द्विभुजस्वरूपं प्रकाश्य चास्से दिशि दाक्षिणस्याम् ॥४॥

स्त्रीसंगतिर्दुर्गतिरेव साक्षादित्थं समाख्यापयितुं वधूनाम् ॥
सुस्पर्शगन्धोऽपि सुदूरतस्ते समुज्झितो देव पदे नमस्ते ॥ ५ ॥

स्वामिन्नंबास्नेहलतां विततामपि तां क्षणात् ॥
मायामयीं निरस्याऽजो विजहार नमामि तम् ॥ ६ ॥

एकान्तसेविनमपि स्वामिनं त्वोपतस्थिरे ॥
एकान्तभक्ता यच्चित्ते नैव कामोद्गतिः स्थिरे ॥ ७ ॥

स्वामिंस्तारकजित्सर्वलोककारकशक्तिधृक् ॥
अंबासुत नमस्तेऽस्तु प्रसीद परिपाहि नः ॥ ८ ॥
योगापेक्षा मे न ते दर्शनार्थं नापेक्षा मे भाविपूज्योद्भवार्थम् ॥
भक्त्या भूयाद्दर्शनं ते कदापि स्यात्साफल्यं जन्मनो मे ततोऽपि ॥९॥
स्मृर्तृगामी कलौ योऽबातनयो द्विशयो मतः ॥
चक्रे व्यर्थां तस्य नुतिं वासुदेवसरस्वती ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
कार्तिकस्वामीस्तोत्रम् ॥

---

## २४ श्रीशंकराचार्यस्तुतिः

श्रीमद्भगवत्पूज्यपदेश्वर । वैदिकमार्गस्थापक शंकर ॥
शिवावतार श्रीमच्छंकर । किंकर हरहर त्राहि यतीश्वर ॥ १ ॥
शिवगुरुसद्गृहावतीर्ण मोहांतक जनशिक्षक तारक दान्त ।
खण्डितपण्डितसंहतिमण्डित । मण्डनपण्डितदुर्मतशान्त ॥
श्रीम० ॥ २ ॥
विजितासंगतशास्त्रासंमतसौगतबौद्धादिकराद्धांत ॥
प्रस्थानत्रयभाष्यकृदद्वयमतसंस्थापक दृढसिद्धान्त ॥ ३ ॥
वृषभूकमठान्यो दिक्षु मठान् । कृत्वा चतुरस्तत्र चतुरः ॥
सुरेश्वरार्यप्रमुखान् चतुरानयोजयद्यो शिष्यांश्चतुरः ॥ ४ ॥
श्रीमत्परमहंसपरिव्राजकश्रीमच्छंकराचार्यमशोकं ॥
वासुदेवयतिर्भक्त्या नमति । स्तुत्वा यथामति पावितलोकम् ॥५॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
श्रीशंकराचार्य–स्तुतिः संपूर्णा ।

---

## २५ श्रीखण्डराजस्तोत्रम् ॥

शिङ्करावतारोऽयं खण्डराजो महामतिः ।
तस्मै महालसेशाय मणिमल्लारये नमः ॥ १ ॥

ऋषीणां यस्तपःसिद्ध्या अवतीर्य महीतले ।
दैत्यानन्नाशयत्तस्मै मणिमल्लारये नमः ॥ २ ॥

यो वेदमयमास्थाय महाश्वमपराजितम् ।
जघ्ने दैत्यरिपून्तस्मै मणिमल्लारये नमः ॥ ३ ॥

पीतवस्त्रपरीधानः पीताभरणभूषितः ।
त्रैलोक्यवन्दितस्तस्मै मणिमल्लारये नमः ॥ ४ ॥

मार्गशीर्षे महामासे प्रत्यब्दं यन्महोत्सवः ।
योऽभीष्टदो विभुस्तस्मै मणिमल्लारये नमः ॥ ५ ॥

देवः प्रतापमार्तण्डभैरवः शत्रुकृन्तनः ।
सर्वापत्तिहरस्तस्मै मणिमल्लारये नमः ॥ ६ ॥

खण्डराज प्रसीद त्वं सर्वापत्तिमपाकुरु ।
पाहि मां त्वं प्रभो तुभ्यं मणिमल्लारये नमः ॥ ७ ॥

कायेन मनसा वाचा येऽपराधा मया कृताः ।
तान्क्षमस्व प्रभो तुभ्यं मणिमल्लारये नमः ॥ ८ ॥

खण्डराजस्तुतिमिमां त्रिसंध्यं यः पठेद्द्विजः ।
सर्वान्कामान्स आप्त्वेह शिवलोके महीयते ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीखण्डराजस्तोत्रं सपूर्णम् ।

## २६ श्रीचिदम्बरदीक्षितस्तोत्रम् ॥

शि वः स्वयं भूमितलेऽवतीर्णः स्वयं हि धर्मः खलु येन चीर्णः ॥
व श्री द्विभार्योऽप्यभवद्विदीर्णरागो यदिष्टैस्तु भवोऽपि तीर्णः ॥१॥
चि दंबराख्यो भुवि दीक्षितो यः सदाज्यतासादितसिंधुतोयः ॥
दं भादिहीनान्भजकान्प्रपन्नानतारयद्वै विपदो विपन्नान् ॥ २ ॥
ब भूव यो लौकिककर्मकर्ता भर्ता द्विजानां खलगर्वहर्ता ॥
र रक्ष धर्मं स हरावतारो मलापहातीरविहार्युदारः ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीचिदम्बरदीक्षितस्तोत्रम् ॥

---

## २७ श्रीसदाशिवेन्द्रस्तोत्रम्

स्वानन्दरसोन्मत्तः स्वाङ्गं विस्मृत्य यो नरीनर्ति ।
स यतिः सदाशिवेन्द्रो विदेहमुक्तस्थितौ वरीवर्ति ॥ १ ॥
सदाशिवाभाषणमन्यवीक्षया सदाशिवाचारमचिन्त्यदीक्षया ।
सदाशिवाभं प्रणमामि सद्गतिं सदाशिवार्येन्द्रसरस्वतीयतिम् ॥२॥
भूत्या छन्नो जातवेदा इवाष्टभूत्या छन्नो योऽपि चोन्मत्तचेष्टः ॥
काष्ठां काञ्चित् प्राप्य रेमे स्वतन्त्रः काष्ठा काचिद्या विमुक्तेरमंत्रः॥३॥
मुक्त्याश्लिष्टो भाति बाहूपधानः क्ष्मातल्पोऽसौ दिक्पटःसावधानः॥
धाम्नि स्वीये योगविश्वक्रवर्ती जूर्तिघ्नो दिक्शालिनी यस्य कीर्तिः॥४॥

नग्नं दृष्ट्वा निजदयितया नोदितो म्लेच्छ एतं
शान्तं दान्तं प्रसभमसिनाऽहन् ततो विव्यथे न ॥
कृत्तांसोऽपि व्यथितमनसे सैनसे भुग्नबाहुं
मंदाक्रान्तान्वयनगतयेऽदर्शयत् पूर्व आहुः ॥ ५ ॥

म्लेच्छो विरक्तः शरणं जगाम न्यूनोऽप्यनुग्राह्य उतापि तामसः ॥
इत्थं विचार्यावददे परेन्त्यज श्रद्धस्त्व नित्यं हृदयेप्सितं त्यज ॥ ६ ॥

तथेति कत्राणमपास्य सोऽनमत्तथाचरन् सोऽपि गतिं बतागमत् ॥
यदा कुवंशस्थनरोऽप्यगाद्गतिं तदा सुवंशस्थ इयान्न किं गतिम् ॥७॥

ईदृक्प्रभावोऽत्र सदाशिवेन्द्रो जागत्यर्यतोऽत्रापि शिवोऽप्युपेन्द्रः ॥
विशुद्धसत्वं ननु भूतिकाम आत्मज्ञमर्चेत्तमु मुक्तिकामः ॥ ८ ॥

नामादिभ्यः परतरं भूमानं यो निरंतरम् ॥
अभेदेनाप स ब्रह्म न ब्रह्मज्ञः श्रुतीरणात् ॥ ९ ॥
गुरोरपीहोत्तममुक्तिकाष्ठां गतस्ततोऽत्रास्य जनः प्रतिष्ठाम् ॥
चक्रे वदेत्तं किमु वासुदेवः आत्मज्ञमित्याहृतसाधुभावः ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीसदाशिवेन्द्रस्तोत्रं संपूर्णम् ॥

---

## २८ अमरेश्वरस्तोत्रम् ॥

कृष्णावेणीतटावास तृष्णाहृत्तुष्टमानस ॥
त्रासहारिमहावीर त्राहि माममरेश्वर ॥ १ ॥

आन्ध्रदेशकृतावास चान्तरस्थमहारस ॥
दुःखान्महाशक्तिधर त्राहि माममरेश्वर ॥ २ ॥

श्रीधान्यवाटिकाक्षेत्ररंजनानर्थभंजन ॥
जननान्तत्रासहर त्राहि माममरेश्वर ॥ ३ ॥

नानोत्पातप्रशमन मनःशान्तिदचिन्तन ॥
अधिष्ठितामरपुर त्राहि माममरेश्वर ॥ ४ ॥

चामुण्डाशक्तिसहित पराजितनिजाहित ॥
हितकारिन् महाधीर त्राहि माममरेश्वर ॥ ५ ॥

प्रणवेशादिभिः पंचलिंगैस्त्वां सहितं न च ॥
पश्यतां भीरिरिहर त्राहि माममरेश्वर ॥ ६ ॥
अमरावत्यधिष्ठानममरारिनिषूदनम् ॥
वन्दे त्वामखिलाधार त्राहि माममरेश्वर ॥ ७ ॥
सदा ममास्तु योगस्ते त्वदर्थे मेपि सद्व्रते ॥
देहोऽयं तिष्ठतु हर त्राहि माममरेश्वर ॥ ८ ॥
प्रसीद पार्वतीजाने न जानेहं शुभाशुभम् ॥
स्मरामि त्वां स्मरहरे त्राहि माममरेश्वर ॥ ९ ॥
अपराधान्मानसिकान्कायिकानपि वाचिकान् ॥
क्षमस्व स्वजनाधार त्राहि माममरेश्वर ॥ १० ॥
दोषा अशेषा मम ये ते नश्यन्तु सदाऽभये ॥
त्वय्यस्तु हृदयं तार त्राहि माममरेश्वर ॥ ११ ॥

इति श्रीमदमरेश्वरस्तोत्रं संपूर्णम् ॥

## २९ धान्यवाडिकाक्षेत्रमाहात्म्यम् ॥

देशे महाराष्ट्रसमाह्वये भुवि ख्याता यथा श्रीनरसिंहवाटिका ।
कृष्णानदीपश्चिमकूल आन्ध्रके देशे तथा पूरपि धान्यवाडिका ॥ १ ॥
दिवि यथाप्यमरास्त्यमरावती भुवि तथा ह्यपराप्यमरावती ।
दिवि तु सास्त्यमरेश्वरमण्डिता भुवि तथाप्यमरेश्वरमण्डिता ॥ २ ॥
चामुण्डिकेशार्पितसाधुमानं काशीसमानं भुवि भासमानम् ।
क्षेत्रं त्विदं पातकशोकहन्तृ श्रीकृष्णया मण्डितमिष्टदातृ ॥ ३ ॥
कृष्णोत्तुंगतरंगसंगवशतो वातोतिपूतो यतो
धावन्छान्त इतस्ततः स्वगतितः प्राप्तं त्रिधा दुष्कृतम् ।

दूरादेव निवारयत्यविरतं जातं यदंगादित-
स्तद्भूत्क्ययात्र सतां सदा निवसतां पापस्य वार्ता कुतः ॥४॥

भक्तेष्टदोत्र प्रणवेश्वरः स्थितः श्रीमानगस्त्येश्वर इष्टदः स्थितः ।
सोमेश्वरो यत्र च कोसलेश्वरः श्रीवीरभद्रेश्वर आस्तिकादरः ॥ ५ ॥

लिंगैर्युतं पंचभिरेवमुच्चमुच्चंडकालान्तकमाशु यच्च ।
सकृत्प्रणामात्सकलार्थदातृ तदामरं लिंगमनिष्टहन्तृ ॥ ६ ॥

यद्वेणुनादश्रवणादचेतनाः सचेतनाः स्युः सजवास्तथाजवाः ।
क्षेत्रं त्विदं तेन सदास्त्यधिष्ठितं गोपालकृष्णेन ददात्यभीप्सितम् ॥७॥

भूतेश पाहि भवतारक तारकघ्न
तातेशतः परमुदर्पकदर्पकघ्न ।
कोस्माकमत्रभवतो भवतोषदोन्यो
मान्यो विपत्तिवनपावकपावकाक्ष ॥ ८ ॥

चामुण्डेश सगोपालपालकोस्यमरेश्वर ।
लोकशोकहर श्लोकाष्टकं शृणु महेश्वर ॥ ९ ॥

---

## ३० वरदानदीतत्तीरस्थमधुकेश्वरस्तुतिः

वरदानपरा मनोहरा वरदारिद्र्यहरा सदादरा ।
वरदाख्यनदी विशुद्धये वरदा मेस्त्वपि मुक्तिसिद्धये ॥ १ ॥

कृष्णासखी या सह तुंगभद्रया कृष्णां गता कृष्णातनुं सुभद्रया ।
सैषा धुनीयं वरदाह्वयाभया भयानकात्पातु रिपोरघाह्वयात् ॥ २ ॥

यत्तीरे विहिताः सवाश्च मुनिभिः प्राज्ञैर्वसिष्ठादिभि-
र्यन्नीरेक्षणतोप्यशुद्धमतिभिर्लब्धा गतिः पापिभिः ।
सेयं सद्गतिदाख्ययापि वरदा श्रेयस्तपोवृद्धिदा
मन्दानामपि पारदास्तु वरदा मोदास्पदा नः सदा ॥ ३ ॥

जयन्त्याख्या शुभा तस्या वरीवर्ति तटे पुरी ।
जयन्तीह महेन्द्राद्या मधुकेशपुरःसराः ॥ ४ ॥

शक्तिं मधुं हन्तुमदादुमाधवः पुरात्र यस्मै खलु चाद्य माधवः ।
संस्थापयामास वसन्पुरः स्वयं लिंगं मनोहृन्मधुकेश्वराह्वयम् ॥ ५ ॥

इन्द्रादयः स्वस्वहरित्सु संस्थिता यत्रावताराश्च मधुद्विषः स्थिताः ।
शम्भोर्गणाश्चाखिललोकमंगला वामप्रदेशेपि च सर्वमंगला ॥ ६ ॥

प्रत्याह्निका यत्र वरार्चनोत्सवा यानादयो यत्र च मासिकोत्सवाः ।
चैत्रे रथाद्या अपि वार्षिकोत्सवा भवन्ति चोर्जे वरदीपकोत्सवाः ॥७॥

एवंभूतो महादेवो नाम्ना यो मधुकेश्वरः ।
त्रिकालमर्चितो भक्तानभीष्टार्थं प्रयच्छति ॥ ८ ॥

(गोमूत्रिकाबंधः) भवो मारहरः सोमप्रियोवतु सुराघहा ।
शिवो वरकरः सामगेयो जन्तुदरापहा ॥ ९ ॥

(हारबंधः) हर सुरवर भो समस्तमघं मम
स्मरहर हर मामव प्रवरावर ।
वरकर गरलाद शर्वशमीश शं-
करधरवर जडजद्विजभृज्जय ॥ १० ॥

---

## ३१ शबरप्रसादवर्णनम् ॥

गीतिः

विभूतिभर्त्रेन्वहमर्पयन् चिताविभूतिमाप्यैकदिने स नोचिताम् ।
गात्रार्धभस्म प्रददौ धनंजयच्छात्रस्तदाभूद्वरदः पुरंजयः ॥ १ ॥

शंकरभजनं संसृतिभंजनं किंकररंजनं मायातमोंजनम् ॥ ध्रु. ॥
भाविकजीवनं पावनपावनं आर्तपरावनं शान्तिमहावनम् ॥ १ ॥
मत्वा धनंजयभूपानुशासनं शबरोप्यकरोल्लिंगसमर्चनम् ॥ २ ॥

नवचितिभूर्ति शबरोनुदिनं भूतिवरायाददनुसवनम् ॥ ३ ॥
एकदिने स काप्यलभन्न भस्म स ऐच्छच्छबरो निधनम् ॥ ४ ॥
आह तदा स्त्रीः कुरु सदनेन सहदयितार्धस्ववपुर्दहनम् ॥ ५ ॥
स तथा दग्ध्वा भसितेन तेन शंकरपूजनमकरोद्दीनः ॥ ६ ॥
आव्हयदंगनामर्चनावसान ईशस्तुष्टोदर्शयदंगनाम् ॥ ७ ॥
प्रादुर्भूत्वा स्वयमीशानस्ताभ्यां प्रददौ स निजस्थानम् ॥ ८ ॥
यस्य न मानं तव महिमानं तमजानुदिनं स्मरामि नूनम् ॥ ९ ॥
श्रद्धा भक्तिर्मे न न तेर्चनं जाने क्षमस्वापराधमीशान ॥ १० ॥
इति वासुदेवानन्दसरस्वतीयतिकृतविनतिं शृण्वीशान ॥ ११ ॥

इति गीतिः

---

# विष्णुस्तोत्राणि

## ३१ लक्ष्मीनारायणस्तोत्रम् ॥

श्रीनिवास जगन्नाथ श्रीहरे भक्तवत्सल ।
लक्ष्मीपते नमस्तुभ्यं त्राहि मां भवसागरात् ॥ १ ॥
राधारमण गोविंद भक्तकामप्रपूरक ।
नारायण नमस्तुभ्यं त्राहि मां भवसागरात् ॥ २ ॥
दामोदर महोदार सर्वापत्तिनिवारण ।
हृषीकेश नमस्तुभ्यं त्राहि मां भवसागरात् ॥ ३ ॥
गरुडध्वज वैकुंठनिवासिन्केशवाच्युत ।
जनार्दन नमस्तुभ्यं त्राहि मां भवसागरात् ॥ ४ ॥
शंखचक्रगदापद्मधर श्रीवत्सलांछन ।
मेघश्याम नमस्तुभ्यं त्राहि मां भवसागरात् ॥ ५ ॥

त्वं माता त्वं पिता बंधुः सद्गुरुस्त्वं दयानिधिः।
त्वत्तोऽन्यो न परो देवस्त्राहि मां भवसागरात् ॥ ६ ॥
न जाने दानधर्मादि योगं यागं तपो जपम्।
त्वं केवलं कुरु दयां त्राहि मां भवसागरात् ॥ ७ ॥
न मत्समो यद्यपि पापकर्ता न त्वत्समोऽथापि हि पापहर्ता ॥
विज्ञापितं त्वेतदशेषसाक्षिन् मामुद्धरार्तं पतितं तवाग्रे ॥८॥

इति श्री. प. प. श्री. वा. स. वि. श्रीलक्ष्मीनारायणस्तोत्रं संपूर्णम् ॥

---

## ३३ श्रीकेशवराजाष्टकम् ॥

कशब्दवाच्यो कथितो विधाता-स्यादीशशब्देन हरो विकर्ता ॥
तौ द्वौ स्वशक्त्या वशयत्यतंद्रः स केशवोऽत्र प्रथितोऽस्त्युपेंद्रः ॥१॥
चतुर्भुजैः सायुधभूषणाढ्यैर्यो लोकपालैरिव युक् प्रभाढ्यैः ॥
जयत्यजस्रं निजपा विनिद्रः स केशवोत्र प्रथितोस्त्युपेंद्रः ॥ २ ॥
पीतांबरालंकृतचारुदेहः किरीटकेयूरधरो विमोहः ॥
भृत्यावने योनिशमस्ततंद्रः स केशवोत्र प्रथितोस्त्युपेंद्रः ॥ ३ ॥
कल्पांतमेघद्युतिगर्वहर्त्री यस्य द्युतिः स्वांतरहर्षदात्री ॥
विभाति लावण्यनिधिः सुधीर्यः स केशवोऽत्र प्रथितोस्त्युपेंद्रः॥४॥
महाविभूतिर्जगतीह दासी—भूतामरस्त्रीरपि यस्य दासी ॥
पदस्य नित्यं धृतहासमुद्रः स केशवोत्र प्रथितोस्त्युपेंद्रः ॥ ५ ॥
यो नामदेवस्य दृष्ट्वां सुभक्तिं ज्ञात्वापि बालस्य मुदे हि दुग्धं ॥
शिलात्मनापीह पपौ सुभद्रः स केशवोत्र प्रथितोस्त्युपेंद्रः ॥ ६ ॥
यो दोशिकस्यापि वरां सुभक्त्या तुष्टो महात्मा तदधीन आस ॥
तद्वंशजेभ्योप्यधुना वितंद्रः स केशवोत्र प्रथितोस्त्युपेंद्रः ॥ ७ ॥

प्रसीद मे केशव दीनबंधो प्रसीद मे केशव चार्तबंधो ॥
बंधोच्छिदार्योऽसि कृपासमुद्रः स केशवोत्र प्रथितोस्त्युपेंद्रः ॥ ८ ॥

एवं स्तुतोऽष्टभिर्हृद्यैः पद्यैः पातु न आर्तिहा ॥
महात्मा वासुदेवेन यतिनास्तु भवार्तिहा ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
केशवराजाष्टकं संपूर्णम् ॥

---

## ३४ दशावतारस्तोत्रम् ॥

मत्स्योऽब्धिविहारः पूर्वो ह्यवतारः ॥
जातः श्रुतिहारः पूज्यो मनुतारः ॥ १ ॥

नष्टामरबाधः कूर्मोऽथ धराधः ॥
गत्वा वहतीशः क्ष्मां योऽप्यमृतेशः ॥ २ ॥

भूभृत्स हिरण्याक्षघ्नोऽत्र तृतीयः ॥
भूदार उदारो यज्ञो भजनीयः ॥ ३ ॥

भृत्योक्त्यनुसारी पूर्वोऽसुरवैरी ॥
नाम्नापि नृसिंहः साक्षाच्च नृसिंहः ॥ ४ ॥

यो वामनवेषः सन् पञ्चम एषः ॥
याञ्चोपधिबद्धस्तेनो बलिरद्धा ॥ ५ ॥

दूराद्क्षयकामः स्याद्भार्गवरामः ॥
क्ष्मादो गुरुदासः षष्ठोऽब्धिनिवासः ॥ ६ ॥

राट्सप्तम आसीद्रामो वनवासी ॥
पित्रुक्त्यनुसारी रक्षोलयकारी ॥ ७ ॥

वर्ण्योष्टम इष्टः कृष्णो हतदुष्टः ॥
यः षोडशनारीसाहस्रविहारी ॥ ८ ॥

बुद्धो नवमोऽयं विस्तारितमायम् ॥
यं कोऽपि न वेद सोऽप्यावृतिमर्दः ॥ ९ ॥
म्लेच्छक्षयकर्ता कल्की वृषभर्ता ॥
विप्रो भविताऽर्थ्यः शूरो दशमोऽचर्यः ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
दशावतारस्तोत्रं संपूर्णम् ॥

---

## ३५ दशावतारस्तोत्रपद्यम्

धरणीनौकावितमनुरेकाधीश्वरः स त्वं ह्यसि ॥
शंखासुरहा यो निजमोहाऽघाधिहा स त्वं ह्यसि ॥ १ ॥
शान्तैकमठो भोऽभूत्कमठो योऽशठ स त्वं ह्यसि ॥ २ ॥
यो भूदारोपि सभूदारोऽभूदुदारस्त्वं ह्यसि ॥
स्तब्धरोमा भुवदुद्धारे स्तब्धरोमास्त्वं ह्यसि ॥ ३ ॥
नरसिंहतनूर्हृतभक्तजनुः स्वेष्टदः स त्वं ह्यसि ॥
भजकार्तिहरो दैत्यासुहरो भीहरः स त्वं ह्यसि ॥ ४ ॥
यो व्याजपटुर्बालिमार्षबटुश्चाग्रहीत्स त्वं ह्यसि ॥
द्वारि बलेर्यस्तिष्ठत्यभयः कीर्तिकृत्स त्वं ह्यसि ॥ ५ ॥
दुर्नृपहन्ता ब्राह्मणगोप्ता स्वाविता सत्वं ह्यसि ॥
पूरितकामो भार्गवरामो विभ्रमः स त्वं ह्यसि ॥ ६ ॥
सीतारामो भजकारामो वैरिहृत् स त्वं ह्यसि ॥
एकशरस्त्रीवाग्वरमन्त्री रावणारिस्त्वं ह्यसि ॥ ७ ॥
षोडशनारीसहस्रभोगी योगीराट् स त्वं ह्यसि ॥
भूभारहरो हृतसंसारो योऽष्टमः स त्वं ह्यसि ॥ ८ ॥

अपापविद्धो युवसंशुद्धो बुद्ध एषस्त्वं ह्यसि ॥
विठ्ठलनाम्ना यः शुभधाम्ना तारकः स त्वं ह्यसि ॥ ९ ॥
कल्किर्भविता दुर्जनहन्ता योऽन्ततः स त्वं ह्यसि ॥
गन्धर्वस्थो द्विभुजः स्वस्थो यो गुरुः स त्वं ह्यसि ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
दशावतारस्तोत्रं संपूर्णम् ॥

---

## ३६ श्रीनरसिंहस्तोत्रम्

जय जय भयहारिन् भक्तचित्ताब्जचारिन्
जय जय नयचारिन्दृप्तमत्तारिमारिन् ॥
जय जय जयशालिन्पाहि नः शूरसिंह
जय जय दययार्द्र त्राहि नः श्रीनृसिंह ॥ १ ॥

असुरसमरधीरस्त्वं महात्मासि जिष्णो
अमरविसरवीरस्त्वं परात्मासि विष्णो ॥
सदयहृदय गोप्ता त्वन्न चान्यो विमोह
जय जय दययार्द्र त्राहि नः श्रीनृसिंह ॥ २ ॥

खरतरनखरास्त्रं स्वारिहत्यै विधत्से
परतरवरहस्तं स्वावनायैव धत्से ॥
भवभयभयकर्ता कोऽपरस्तार्क्ष्यवाह
जय जय दययार्द्र त्राहि नः श्रीनृसिंह ॥ ३ ॥

असुरकुलबलारिः स्वेष्टचेतस्तमोऽरिः
सकलखलबलारिस्त्वं स्वभक्तारिवैरी ॥
त्वदित स इनदृक् सत्पक्षपाती न चेह
जय जय दययार्द्र त्राहि नः श्रीनृसिंह ॥ ४ ॥

सकलसुरबलारिः प्राणिमात्रापकारी
तव भजकवरारिर्धर्मविध्वंसकारी ॥
सुरवरवरदघ्नः सोप्यरिस्ते हतो ह
जय जय दययार्द्र त्राहि नः श्रीनृसिंह ॥ ५ ॥

दहनादहह्याब्धिपातनाद्गरदानाद्भृगुपातनादपि
निजभक्त इहावितो यथा नरसिंहापि सदाव नस्तथा ॥ ६ ॥

निजभृत्यविभाषितं मितं खलु कर्तुं त्वमृतं दयाकर ॥
प्रकटीकृतमिध्ममध्यतो निजरूपं नरसिंह धीश्वर ॥ ७ ॥

नाराधनं न हवनं न तपो जपो वा
तीर्थं व्रतं न च कृतं श्रवणादि नो वा ॥
सेवा कुटुंबभरणाय कृतातिदीना
दीनार्तिहन् नरहरेऽघहरे ह नोऽव ॥ ८ ॥

इति श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीनरसिंहस्तोत्रं संपूर्णम् ॥

## ३७ श्रीनृसिंहस्तोत्रम्

वरदात्रुदितावरोधतः सहसा येन महासुरो हतः ॥
निजभृत्यवरतरामृतं विहितं तं नृहरिं भजे हितम् ॥ १ ॥

नृत्यंति कर्मभिर्ये ते नरो जीवा निहंति यः ॥
तत्संबंधमविद्याख्यं नरसिंहः स नोऽवतु ॥ २ ॥

यदुरोवक्त्रहृत्संस्था लक्ष्मीवाक्संविदः सदा ॥
अविरोधितया पायादपायान्नृहरिः स नः ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीनृसिंहस्तोत्रं संपूर्णम् ॥ .

---

१. निजभृत्यवचस्तरामृतं

## ३८ श्रीनृसिंहाष्टकम्

यं ध्यायसे स क्व तवास्ति देव इत्युक्त ऊचे पितरं सशस्त्रम् ।
प्रल्हाद आस्तेऽखिलगो हरिः स लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥ १ ॥

तदा पदाताडयदादिदैत्यः स्तंभं ततोऽन्हाय घुरूरुशब्दम् ।
चकार यो लोकभयंकरं स लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥ २ ॥

स्तम्भं विनिर्भिद्य विनिर्गतो यो भयंकराकार उदस्तमेघः ।
जटानिपातैः स च तुंगकर्णो लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥ ३ ॥

पंचाननास्यो मनुजाकृतिर्यो भयंकरस्तीक्ष्णनखायुधोऽरिम् ।
धृत्वा निजोर्वोर्विददार सोऽसौ लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥ ४ ॥

वरप्रदोक्तेरविरोधतोऽरिं जघान भृत्योक्तमृतं हि कुर्वन् ।
स्रग्वत्तदंत्रं निदधौ स्वकण्ठे लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥ ५ ॥

विचित्रदेहोऽपि विचित्रकर्मा विचित्रशक्तिः स च केसरीह ।
पापं च तापं विनिवार्य दुःखं लक्ष्मीनृसिंहोऽवतु मां समन्तात् ॥ ६ ॥

प्रल्हादः कृतकृत्योऽभूद्यत्कृपालेशतोऽमराः ।
निष्कण्टकं स्वधामापुः श्रीनृसिंहः स पातु माम् ॥ ७ ॥

दंष्ट्राकरालवदनो रिपूणां भयकृद्भयम् ।
इष्टदो हरति स्वस्य वासुदेवः स पातु माम् ॥ ८ ॥

इति श्रीमत्प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीलक्ष्मीनृसिंहाष्टकं समाप्तम् ।

---

## ३९ परशुरामस्तोत्रम्

कराभ्यां परशुं चापं दधानं रेणुकात्मजम् ।
जामदग्न्यं भजे रामं भार्गवं क्षत्रियान्तकम् ॥ १ ॥

नमामि भार्गवं रामं रेणुकाचित्तनन्दनम् ।
मोचिताम्बार्तिमुत्पातनाशनं क्षत्रनाशनम् ॥ २ ।

भयार्तस्वजनत्राणतत्परं धर्मतत्परम् ।
गतगर्वप्रियं शूरं जमदग्निसुतं मतम् ॥ ३ ।

वशीकृतमहादेवं दृप्तभूपकुलान्तकम् ।
तेजस्विनं कार्तवीर्यनाशनं भवनाशनम् ॥ ४ ।

परशुं दक्षिणे हस्ते वामे च दधतं धनुः ।
रम्यं भृगुकुलोत्तंसं घनश्यामं मनोहरम् ॥ ५ ।

शुद्धं बुद्धं महाप्रज्ञामंडितं रणपण्डितम् ।
रामं श्रीदत्तकरुणाभाजनं विप्ररंजनम् ॥ ६

मार्गणाशोषिताब्ध्यंशं पावनं चिरजीविनम् ।
य एतानि जपेद्रामनामानि स कृती भवेत् ॥ ७

---

## ४० श्रीरामचंद्रस्तोत्रम्

श्री रामचंद्रः सहितास्ततंद्रः ॐकारवाच्योऽवतु मां सुभद्रः ॥
रा जाधिराजोऽखिललोकभर्ता न तावनात्तव्रत आधिहर्ता ॥ १ ।
म हामहिम्ने परमार्थधाम्ने मो हांतकायाद्य नमोऽस्तु भूम्ने ॥
ज गद्धितायात्तसुविग्रहाय भ क्तेष्टदायाहितनिग्रहाय ॥ २ ।
य ज्ञेश्वरायाखिलधर्मगोप्त्रे ग तिप्रदायासुरदुष्टहंत्रे ॥
रा म प्रसीदाखिलतापहारिन् व रेण्य कारुण्यनिधेपहारिन् ॥ ३ ।
म मापराधानखिलान्क्षमस्व ते जोमय श्रीश विभो दयस्व ॥
ज न्मादिहेतोः कृतभूरिमंतोर् द त्ताभय त्वं परमा गतिर्मे ॥ ४

य मादियोगं न च यागमाप त्ता पन्न जाने विहितार्थभोगम् ॥
ज गन्निवासेश्वर मामवाद्य त्रे धाद्यतापान् हर मे भवाद्य ॥ ५ ॥

य शःप्रपूर्णं श्रवणं कुरुष्व या याद्रतिं येन खलोऽपि सद्यः ॥
रा गादिविद्धोऽपि तमर्पयाद्य यु तोश सत्संगमजानवद्य ॥ ६ ॥

म हाघकर्ता हि तवेक्षणेन या याद्विमुक्तिं परमक्षणेन ॥
सी तापते तेस्तु नमः प्रसीद प्र सीद रामाखिलद प्रसीद ॥ ७ ॥

कौसल्यालसदालवालजनितः सीतालतालिंगितः
सिक्तः पंक्तिरथेन सोदरमहाशाखाभिरभ्युन्नतः ॥
रक्षस्तीक्ष्णनिदाघपाटनपटुच्छायाश्रितानंदकृ-
द्युष्मद्वांछितसत्फलानि फलतु श्रीरामकल्पद्रुमः ॥ ८ ॥

इति श्रीरामचंद्रस्तोत्रं संपूर्णम् ॥

---

## ४१ पद्यात्मकश्रीरामस्तोत्रम्

राममाश्रय राममाश्रय राममाश्रय भद्रदं ॥
राममाश्रयतां कुतोऽपि भवेत्कुदैवमभद्रम् ॥ ध्रु० ॥

यस्य पादसरोजलग्नरजःकणादपि तत्क्षणं ॥
गौतमर्षिवधूध्दतिः किल यत्कटाक्षनिरीक्षणं ॥
आरवींदु बिभीषणाय सुराज्यमर्पयदाशु तं ॥
चित्त चिन्तय विश्रुतं न च हन्ति कोऽपि यदाश्रितम् ॥ १ ॥

माययापि यदाश्रितस्त्विह कोऽपि नो परिभूयते ।
राममार्तिविराममाश्रय कं यतो ह्यनुभूयते ॥
यस्य नामवशाच्छिला अपि सिन्धुना हि समुध्दताः ।
ते जडा अजडा भवन्ति न किं वदाऽत्र समुध्दताः ॥ २ ॥

सर्वदैवतकिंशरोऽखिलशंकरोऽपि हि शंकरो ।
यस्य नाम विमुक्तिधाम जपत्यकामहितादरः ॥
वासुदेवसरस्वती यमगायताऽखिलकामदम् ।
राममाश्रय तं सतां मतमाशु शाश्वतधामदम् ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वती-
विरचिता श्रीरामस्तुतिः ॥

---

## ४२ श्रीमारुतिस्तोत्रम्

ॐ नमो वायुपुत्राय भीमरूपाय धीमते ।
न मस्ते रामदूताय कामरूपाय श्रीमते ॥ १ ॥
मो ह शोकविनाशाय सीताशोकविनाशिने ।
भ ग्नाशोकवनायास्तु दग्धलंकाय वाग्मिने ॥ २ ॥
ग तिनिर्जितवाताय लक्ष्मणप्राणदाय च ।
व नौकसां वरिष्ठाय वशिने वनवासिने ॥ ३ ॥
त त्वज्ञानसुधासिंधुनिमग्नाय महीयसे ।
आं जनेयाय शूराय सुग्रीवसचिवाय ते ॥ ४ ॥
ज न्ममृत्युभयघ्नाय सर्वक्लेशहराय च ।
ने दिष्ठाय प्रेतभूतपिशाचभयहारिणे ॥ ५ ॥
या तनानाशनायास्तु नमो मर्कटरूपिणे ।
य क्षराक्षसशार्दूलसर्पवृश्चिकभीहृते ॥ ६ ॥
म हाबलाय वीराय चिरंजीविन उद्धृते ।
हा रिणे वज्रदेहाय चोल्लंघितमहाब्धये ॥ ७ ॥
ब लिनामग्रगण्याय नमो नः पाहि मारुते ।
ला भदोऽसि त्वमेवाशु हनूमन् राक्षसान्तक ॥ ८ ॥

यशो जयं च मे देहि शत्रून्नाशय नाशय ।
स्वाश्रितानामभयदं य एवं स्तौति मारुतिम् ॥
हानिः कुतो भवेत्तस्य सर्वत्र विजयी भवेत् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीमारुतिस्तोत्रं संपूर्णम् ॥

---

## ४३ श्रीव्यंकटेशस्तोत्रम् ॥

यो लोकरक्षार्थमिहावतीर्य वैकुंठलोकात्सुरवर्यवर्यः ॥
शेषाचले तिष्ठति योनवद्ये तं व्यंकटेशं शरणं प्रपद्ये ॥ १ ॥

पद्मावतीमानसराजहंसः कृपाकटाक्षानुगृहीतहंसः ॥
हंसात्मनादिष्टनिजस्वभावः तं व्यंकटेशं शरणं प्रपद्ये ॥ २ ॥

महाविभूतिः स्वयमेव यस्य पदारविंदं भजते चिरस्य ॥
तथापि योऽर्थं भुवि संचिनोति तं व्यंकटेशं शरणं प्रपद्ये ॥ ३ ॥

य आश्विने मासि महोत्सवार्थं शेषाद्रिमारुह्य मुदातितुंगं ॥
यत्पादमीक्षंति तरंति ते वै तं व्यंकटेशं शरणं प्रपद्ये ॥ ४ ॥

यद्दर्शनेन त्रिविधाघनाशस्तापत्रयस्यापि भवेद्विनाशः ॥
स्मृत्यापि यस्येह च दैन्यनाशः तं व्यंकटेशं शरणं प्रपद्ये ॥ ५ ॥

प्रसीद लक्ष्मीरमण प्रसीद प्रसीद शेषाद्रिशय प्रसीद ॥
दारिद्र्यदुःखादिभयं हरस्व तं व्यंकटेशं शरणं प्रपद्ये ॥ ६ ॥

यदि प्रमादेन कृतोऽपराधः श्रीव्यंकटेशाच्छितलोकबाधः ॥
स मामव त्वं प्रणमामि भूयस्तं व्यंकटेशं शरणं प्रपद्ये ॥ ७ ॥

न मत्समो यद्यपि पातकीह न त्वत्समः कारुणिकोऽपि चेह ॥
विज्ञापितं मे श्रृणु शेषशायिन् तं व्यंकटेशं शरणं प्रपद्ये ॥ ८ ॥

व्यंकटेशाष्टकमिदं त्रिकालं यः पठेन्नरः ॥
स सर्वपापनिर्मुक्तो व्यंकटेशप्रियो भवेत् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीव्यंकटेशस्तोत्रं संपूर्णम् ॥

---

## ४४ श्रीवेंकटेशस्तोत्रम् ॥

व्येमित्यव्ययमाख्यातं मुनिभिः पापवाचकम् ॥
कटतेर्नाशनार्थत्वात्पापहा वेंकटेश्वरः ॥ १ ॥

यो भक्तरक्षणार्थाय विष्णुर्वैकुंठवास्ययं ॥
शेषाचले महालक्ष्म्या सह तिष्ठति वेंकटः ॥ २ ॥

चतुर्बाहुरुदारांगो निजलांछनलांछितः ॥
वेंकटेश इति ख्यातो देवः पद्मावतीप्रियः ॥ ३ ॥

शेषाचलं महोत्तुंगं सर्वसंपत्समन्वितम् ॥
वैकुंठकल्पमकरोच्छ्रीनिवासः स नोऽवतु ॥ ४ ॥

यद्दर्शनार्थमखिला ऋषियोगिसुरादयः ॥
आयांति परया भक्त्या सपत्नीकाश्च सानुगाः ॥ ५ ॥

विशेषादाश्विने मासे महोत्सवदिदृक्षवः ॥
भक्तानुकंपी भगवान्वेंकटेशः स नोऽवतु ॥ ६ ॥

स त्वं मां पाहि देवेश लक्ष्मीश गरुडध्वज ॥
सर्वापत्तिविनाशाय प्रसन्नो भव सर्वदा ॥ ७ ॥

प्रसीद लक्ष्मीरमण प्रसीद प्रसीद शेषाद्रिशय प्रसीद ॥
दारिद्र्यदुःखौघभयं हरंतं तं वेंकटेशं शरणं प्रपद्ये ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीवेंकटेशस्तोत्रं संपूर्णम् ॥

---

## ४५ गद्यपद्यात्मकं रामकृष्णचरितम्

पृथिवीभरपरिहृत्यै सुरवरसंप्रार्थितोऽत्र भूमितले ॥
नृरूपेण तमोनुद्वंशे सकलोऽप्यवातरद्विमले ॥ १ ॥

पितृबन्धमोचकोभूद्यः स्वोत्पत्त्या प्रदर्श्य निजरूपम् ॥
प्राक्स्मृत्यै स पितृभ्यां तदनुमतं स्वचिकार सद्रूपम् ॥ २ ॥

नीता गुरुणान्यत्र च देवरिपून्हन्तुकाम एव पुरा ॥
स्त्रीवधरूपां गणपतिपूजां चक्रे बभूव सापि वरा ॥ ३ ॥

शेषसहायो हतवानसुरान्यज्ञद्रुहो महावीरः ॥
स्वमतं ततान यज्ञं द्विजदारानुद्दधार वरधीरः ॥ ४ ॥

(गद्यम्) अथ स भगवान् क्षत्ररूपेणावतीर्णस्तमोनुत्कुलभूषणो विप्रवरेण नीतो निजपूर्वपत्नीपरिणयं चिकीर्षुर्न केनाप्युत्थापितं न नमितं च राजाभिमानचापं लीलयैवादाय सहसैव बभंज ॥ ५ ॥

कुमारशापेन वैकुण्ठादपि पतितं नीचतां गतमात्मानं वृणानं राजानं समागतमालोच्य पूर्वं म्लायितवदनापि पद्मसदना हृष्टवदना सती स्वयमेव स्वपतिं वृतवती ॥ ६ ॥

वव्रे श्रियं स विजयश्रिया स्वभागं जहार मृगप इव ॥
हृष्टभ्रातृयुतः स प्रतस्थ ईशः प्रभुः कृतार्थ इव ॥ ७ ॥

(गद्यम्) अथ ससैन्यकः सभ्रातृकः सपरिग्रहो भगवान् स्वराष्ट्रं प्रयास्यन्मेघगम्भीरया वाचा गर्जन्तं पृष्ठत आगतं द्विषन्तं निर्जित्य विजयी सन्स्वनगरं प्राविशत् ॥ ८ ॥

ईदृग्गुणा यस्य न वर्णितुं यान् शेषोऽपि शक्तः क्व कथा परेषाम् ॥
स बद्धसेतुर्जितदेववैरिर्नाथो रघूणामथवा यदूनाम् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीरामकृष्णचरितं सपूर्णम् ॥

## ४६ श्रीमुरलीधरगोपालाष्टकम्

नमामि गोपिकाकान्तं द्विभुजं मुरलीधरम् ।
शोणाधरं गिरिधरं भक्तदुःखहरं हरिम् ॥ १ ॥

सतोयमेघद्युतिगर्वहारि-
स्फुरद्युतिः स्मर्तृभयापहारि ॥
कृष्णाय भूम्ने कमलावराय
नमोऽस्तु तस्मै मुरलीधराय ॥ २ ॥

यो भूमिभारव्यपनुत्तयेऽत्र
ब्रह्मादिदेवार्थित एव पुत्रः ॥
बभूव भुव्यानकदुन्दुभेर्यो
नमोऽस्तु तस्मै मुरलीधराय ॥ ३ ॥

अपाययत्स्तन्यमिषाद्विषं या
तस्यै ददौ मातृुचितां गतिं यः ॥
कारुण्यसिन्धुर्निहतासुराय
नमोऽस्तु तस्मै मुरलीधराय ॥ ४ ॥

गाश्चारयन्गोपकुमारयुक्तः
सुरद्विषोऽहन्निजकार्यसक्तः ॥
भक्तप्रियो यो दिविषद्वराय
नमोऽस्तु तस्मै मुरलीधराय ॥ ५ ॥

यद्वेणुशब्दश्रवणेन सद्यो
ह्यचेतनं चेतनतां परं च ॥
तथान्यभावं प्रगतं पराय
नमोऽस्तु तस्मै मुरलीधराय ॥ ६ ॥

व्याजेन भर्तृत्वमितं विवर्णं
त्यक्त्वा सती दग्धतनुर्बभूव ॥
वेणुर्यदोष्ठामृतभाक्पराय
नमोऽस्तु तस्मै मुरलीधराय ॥ ७ ॥

गोपालाय नमस्तुभ्यमपराधान्क्षमस्व मे ।
कृपां कुरु दयासिन्धो सर्वान्कामान्प्रपूरय ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीमुरलीधरगोपालाष्टकं संपूर्णम् ॥

---

# देवीस्तोत्राणि

## ४७ श्रीरेणुकास्तोत्रम्

ऐंद्र्यादिवंदितपदे वरदेऽभीष्टकामदे ॥
कामदेवार्चितेऽनंते रेणुकेंब नमोऽस्तु ते ॥ १ ॥

एकवीरे निजाधारे रुचिरे सज्जनादरे ॥
उदारे रेणुसंजाते रेणुकेंब नमोऽस्तु ते ॥ २ ॥

करुणारससंपूर्णे नयने सुस्मितानने ॥
शोभने पाहि नोभीते रेणुकेंब नमोऽस्तुते ॥ ३ ॥

वीरमातर्महादेवि त्वदन्या कापरा भुवि ॥
तारिणी दुर्गतोऽनंते रेणुकेंब नमोऽस्तु ते ॥ ४ ॥

राममातर्महामाये जमदग्निप्रियेऽभये ॥
विजये वेदविनुते रेणुकेंब नमोऽस्तुते ॥ ५ ॥

यैरर्चिते तव पदे ते धन्याः परमे पदे ॥
निर्हितास्ते सुरनुते रेणुकेंब नमोऽस्तुते ॥ ६ ॥
न त्वदन्या गतिर्देवि परमा खलु शांभवि ॥
भुक्तिमुक्तिप्रदे शांते रेणुकेंब नमोऽस्तु ते ॥ ७ ॥
मः केशवेश्वराश्चापि सृष्टिस्थित्यंतकारिणः ॥
प्रसादादेव तेऽनंते रेणुकेंब नमोऽस्तु ते ॥ ८ ॥
जगदंब नमोऽस्तु रेणुके परिपाहीश्वरि नः सुभावुके ॥
जयलाभयशःप्रदे मुदे स्तुतिरेषास्तु तवाखिलार्थदे ॥ ९ ॥
नावाहनं नार्चनपद्धतिं ते जाने न भक्तिं त्वयि मे भवांतके ॥
अथापि मां त्वं कुलदेवि भक्तकुलोद्भवं पाह्यपि चार्थसक्तम् ॥ १० ॥
मावापुरनिवासिन्याः श्रीदेव्याः स्तोत्रमुत्तमम् ॥
यः पठेत्प्रयतो भक्त्या सर्वान्कामान्स आप्नुयात् ॥ ११ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीरेणुकास्तोत्र संपूर्णम् ॥

---

## ४८ तुलजापुरवासिनीस्तोत्रम्

नमोऽस्तु ते महादेवि शिवे कल्याणि शांभवि ॥
प्रसीद वेदविनुते जगदंब नमोऽस्तु ते ॥ १ ॥
जगतामादिभूता त्वं जगत्त्वं जगदाश्रया ॥
एकाऽप्यनेकरूपासि जगदंब नमोऽस्तु ते ॥ २ ॥
सृष्टिस्थितिविनाशानां हेतुभूते मुनिस्तुते ॥
प्रसीद देवविनुते जगदंब नमोऽस्तु ते ॥ ३ ॥
सर्वेश्वरि नमस्तुभ्यं सर्वसौभाग्यदायिनि ॥
सर्वशक्तियुतेऽनंते जगदंब नमोऽस्तु ते ॥ ४ ॥

विविधारिष्टशमनि त्रिविधोत्पातनाशिनि ॥
प्रसीद देवि ललिते जगदंब नमोऽस्तु ते ॥ ५ ॥

प्रसीद करुणासिंधो त्वत्तः कारुणिका परा ॥
यतो नास्ति महादेवि जगदंब नमोऽस्तु ते ॥ ६ ॥

शत्रून्जहि जयं देहि सर्वान्कामांश्च देहि मे ॥
भयं नाशय रोगांश्च जगदंब नमोऽस्तु ते ॥ ७ ॥

जगदंब नमोऽस्तु ते हिते जय शंभोर्दयिते महामते ॥
कुलदेवि नमोऽस्तु ते सदा हृदि मे तिष्ठ यतोऽसि सर्वदा ॥८॥

तुळजापुरवासिन्या देव्याः स्तोत्रमिदं परम् ॥
यः पठेत्प्रयतो भक्त्या सर्वान्कामान्स आप्नुयात् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं श्री-
तुळजापुरवासिन्या देव्याः स्तोत्रं संपूर्णम् ॥

---

## ४९ श्रीदेवीस्तोत्रम्

शुम्भनिशुम्भलुलायमुखघ्नी
या मघवन्मुखलेखभयघ्नी ॥
सन्मतिदे निजभीतिविनिघ्नी
सद्गतिदेशकला भवनिघ्नी ॥ १ ॥

सा त्वमधीश्वरि शर्म विधेहि
स्वे मयि धीश्वरि वर्म च देहि ॥
स्वीयकटाक्षनिरीक्षणरूपं
येन भवेदवितं निजरूपम् ॥ २ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
देवीस्तोत्रं संपूर्णम् ॥

## ५० श्रीअन्नपूर्णास्तोत्रम्

श्री देवि दर्शनीयेंऽशा ऐं द्याद्या अं बिके तव ॥
भ व्ये द त्ता भये ताभिर् न्हीं बीजे न नतानव ॥ १ ॥
ग त्यै मा त्रे नमस्तेऽस्तु श्रीं गायै पू र्ण संविदे ॥
व स मे यो गिनि स्वांते क्लीं मये ऽर्णे श्वरेश्वरि ॥ २ ॥
द क्षे स ह स्रवक्त्रस्ते न वेत्ति स कलान्गुणान् ॥
व देत्को रिः ष्टदे सर्वान् मो क्ष सं दा त्रि ते गुणान् ॥३॥
धू ताद्ये कृ पया पाहि भ गवत् पू ज्य पादुके ॥
त मः पू ष्ण इवाविद्या ग ता प र्णे तवेक्षणात् ॥ ४ ॥
प तिता उ ध्द्रता स्ते हि व रदे शं कर प्रिये ॥
द या ज न्म हरा चेत्ते ति ष्ठेद्धि क थमावृतिः ॥ ५ ॥
क स्ते ।चि त्ता तिंहे वेत्ता मा न्येऽ मऽ र मनोतिगे ॥
म म ज्ञा नं क्रियत्प्राज्ञि हे शंभु प्रा णवल्लभे ॥ ६ ॥
ल सद्वे द नुते द्वास्थ श्व वद्र ण य मासुमे ॥
भ्र म प्र दा र्थ वादा ऽ ये रि प्राया व ञ्चितोस्मि तैः॥ ७॥
म र्त्योर्भो य इहांब्राया अं के सं ल भतेर्थितम् ॥
र क्षिता कः च मे ह्यार्ये न तेर्भो भे द दर्शिनि ॥ ८ ॥
वा सना मु क्तिकृद्देवि पू र्ण वि ज्ञा नदायिनि ॥
सु खदे नि त्य मांगल्ये ऽ र्णे शेध्या न मुपाविश ॥ ९ ॥
दे वा अ र्दि त शांत्यर्थ म लंते वै त्वदीरिताः ॥
वा सना गं धो मे माग्तु मा नादे रा र्तिदोत्र यः ॥ १० ॥
नं दिनी व लिनी ब्राह्मी भि क्षा भा ग्य विवर्धिनी ॥
द या ऽिध रो जस्विनीद्ध्या ल क्ष्मीस्त्वं सि द्धिरूपिणी ॥ ११ ॥

स त्येऽस्यंऽबा कृपां भोभि षि श्चात्र ध्य धि पालके ॥
र क्ष्यो बा लः स्वको मात्रा त त्वतो र्थं वदामि ते ॥ १२ ॥
स्व ल्पज्ञो पि शठोऽदांतो मं दो वा भि मतोऽपिवा ॥
ती व्र मा शा परो वायं न चोपे क्षां शिवेर्हति ॥ १३ ॥
भि या न चो क्तवान्शद्धा न्दें वेडथे दे हि कांक्षितम् ॥
क्षु च्छांत्यै ज्ञा न भिक्षान्नं हि तज्ञे हि तमर्पय ॥ १४ ॥
कृ पया ऽ न स्त मितया दे हि ते च रणे रतिम् ॥
त पोदे सा दरं याचे हि तं मे पा रदे कुरु ॥ १५ ॥
स्त वे तें ग ह्यशक्तं मां स्वा न्ते श र्वप्रिये स्मर ॥
व र्ये व रः स एवार्थ्यो हा र्दज्ञेऽ ति थिवल्लभे ॥ १६ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
अन्नपूर्णास्तोत्रं संपूर्णम् ॥

---

## ५१ अनसूयास्तोत्रम् ॥

पतिव्रताशिरोरत्नभूता सुंदरविग्रहा ॥
सुचरित्रा दिव्यतेजा सर्वलोकनमस्कृता ॥ १ ॥
विष्णुप्रपौत्री कपौत्री सती कर्दमपुत्रिका ॥
देवहूतिसमुत्पन्ना सुमुखी कपिलस्वसा ॥ २ ॥
अत्रिपत्नी महाभागा दयाक्षांत्यादिभूषिता ॥
अनसूया वेदगेया निजधर्मजिताखिला ॥ ३ ॥
श्रीदत्तात्रेयजननी चंद्रमाता मनस्विनी ॥
दुर्वासोजनयित्रीशा जगत्संकटवारिणी ॥ ४ ॥
चतुर्विंशतिनामानि मंगलानि पराणि च ॥
पावनान्यनसूयाया दत्तमातुः पठेन्नरः ॥ ५ ॥

त्रिकालमेककालं वा श्रद्धाभक्तिसमन्वितः ॥
तस्य धर्मे रुचिर्दत्ते भक्तिमुक्ति क्रमाद्भवेत् ॥ ६ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
अनसूयास्तोत्रं संपूर्णम् ॥

---

## ५२ सरस्वतीस्तोत्रम्

वाञ्छाधिकेष्टफलदाननिबद्धदीक्षा
वाक्चातुरीविधुतकेलिकुलाभिमाना ।
वागीशविष्णुभवपूजितपादपद्मा
वाग्जाड्यदास्तु भवतां वचसां सवित्री ॥ १ ॥

शृंगाद्रिवासनिरता वरतुंगभद्रा-
तीरप्रचाररसिका कलिकल्मषघ्नी ।
कीलालजातभवमोदसुखाब्धिराका
वाग्जाड्यदास्तु भवतां वचसां सवित्री ॥ २ ॥

कल्याणशैलधनुषः सहजा कृपाब्धि-
र्हस्ताम्बुजात्तकजपुस्तककीटमाला ।
पद्मोद्भवादिमवृषालिरूपात्तदेहा
वाग्जाड्यदास्तु भवतां वचसां सवित्री ॥ ३ ॥

वैराग्यदाननिरता नतमस्करीशा
भोगीन्द्रगर्वविनिवारणदक्षवेणी ।
आम्नायशीर्षततिगेयनिजापदाना
वाग्जाड्यदास्तु भवतां वचसां सवित्री ॥ ४ ॥

स्वान्तानन्दनिमग्नस्वान्तां प्रकरोतु सन्ततं कृपया ।
यदुनन्दन[2]सुख[3]वाणी वाणी वीणालसत्कराम्भोजा ॥ ५ ॥

---

१ वासुदेव, २ आनन्द ३ सरस्वती.

# गंगादितीर्थक्षेत्रस्तोत्राणि

## ५३ गंगास्तोत्रम्

गं गे द र्शय ते रूपं मु क्तिदं मु नि चिंतितम् ॥

गा य त्ता रिणि ते दृष्ट्या च्य वेत्को नि ज रूपतः ॥ १ ॥

गं गे त्रे धाघहंत्रीति ते कीर्तिं दिं क्षु विस्तृता ॥

गे या यो गिमुनिध्येया स दा त्वं गं ग आधिहे ॥ २ ॥

ति ष्ठेंऽ ह स्तरणं मात र्व रिष्ठे ब त नान्यतः ॥

यो वै रिः कामसंज्ञो मे पा ह्यतो रो ष हेतुतः ॥ ३ ॥

श्रू ते क्र त्स्नश्रुतं त्रात्री पे योदा बा त्मिकेति यत् ॥

या तृ ष्ण या मतिर्भ्रष्टाऽऽ भ्यो भ्द्योवा लः पुनातु ताम् ॥ ४ ॥

द्यो त उ त्कृष्ट एवास्तु विष्णुजेऽ पि हितांतरे ॥

ज ग न्म ति क्षालके भू ष्णु स्सन्त्वां शा न्तिदेर्थये ॥ ५ ॥

ना स्म त्ता रक एवान्यो लो के वा चो मृषा न मे ॥

नां तो नं ते त्र मेऽघस्य कं ब्रूयां ज्ञा न देत्र तु ॥ ६ ॥

श त्रू न्द मय मे देवि स कला न मृतप्रदे ॥

तै र्हि दा न्तो विमुक्तःस्यां ग तैनाः सा ध्व्यसंशयं ॥ ७ ॥

र क्ष य द्यपि पापोहं च्छ न्दोच्चर्ये ग वि जाह्नवि ॥

पि ता कः कापरांबा मे ति ष्ये ता रः परश्च कः ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं

गंगास्तोत्रं संपूर्णम् ॥

## ५४ यमुनास्तोत्रम्

यमुना शमनामरस्वसा व्रजतीत्रास्ति यतो निजस्वसा ॥
गुरुधाम दिदृक्षुगायनेत्र मयालोकि हि दक्षिणायने ॥ १ ॥
कृष्णभर्तृपरिरम्भणेन या कृष्णभा किमभवत्तथापि या ॥
कृष्णतां गतमघेन मानवं कृष्णतां नयति रातु साऽभवम् ॥ २ ॥
आदित्यपुत्री तुहिनाद्रिपुत्री कलिन्दपुत्रीति जगत्प्रतीता ।
स्वानुद्धारापि यमेन नीतान् सा पातु भक्तान् यमुनाघभीतान् ॥ ३ ॥
प्रालेयाद्रेर्निर्गता कृष्णकान्ता नानादेशान् या पुनानाप्यकान्ता ।
सस्नौ तोये विष्णुपद्या विशुद्धा तन्माहात्म्यं दर्शयन्ती किमद्धा ॥ ४ ॥
यस्यास्तटे संनिकटे सदैवः श्रीकृष्ण आस्ते रतिकृत्सदैव ।
तत्कंठगश्रीतुलसीसुगन्धिसुवासिता सावतु सूर्यजाता ॥ ५ ॥
पराशरात्सत्यवत्यां जातो यत्र महायशाः ।
पाराशर्यो वासुदेवपाराशर्योजसान्वितः ॥ ६ ॥
मार्गे कृष्णचतुर्थ्यां तु मार्गे कृष्णप्रियां तु ताम् ।
ददर्श सार्कतनया विनयान्पातु संनया ॥ ७ ॥

इति यमुनास्तोत्रम्

---

## ५५ सरस्वतीनदीस्तोत्रम्

वा गत्रादिनी पापहरासि भेदचोद्यादिकं मद्धर दिव्यमूर्ते ॥
सु शर्मदे वन्द्यपदेस्तुवित्तादयाचतेहो मयि पुण्यकीर्ते ॥ १ ॥
दे व्यै नमः कालजितेस्तु मात्रेऽयि सर्वभा अस्याखिलार्थदे त्वं ॥
वा सोत्र ते नः स्थितये शिवाया त्रीशस्य पूर्णस्य कलासि सा त्वं ॥ २ ॥
नं दप्रदे सत्यसुतेऽभवाय सूक्ष्मां धियं सम्प्रति मे विधेहि ॥
द यस्व सारस्वजलाधिसेविनृलोकपेरम्मयि सांनिधेहि ॥ ३ ॥

स त्यं सरस्वत्यसि मोक्षसद्म तारिण्यसि स्वस्य जनस्य भर्म ॥
र म्यं हि ते तीरमिदं शिवाहे नांगीकरोतीह पतेत्स मोहे ॥४॥

स्व भूतदे वाधिहरेऽस्मि वा अचेता अपि प्रज्ञ उपासनात्ते ॥
ती व्रव्रतैर्जेतुमशक्यमेव तं निश्चलं चेत इदं कृतं ते ॥५॥

वि चित्रवाग्भिर्ज्ञगुरूनसाधू तीर्थाश्रयां तत्वत एव गातुं ॥
र जस्तनुर्वा क्षमतेऽध्यतीता सुकीर्तिरायच्छतु मे धियं सा ॥६॥

चि त्रांगि वाजिन्यघनाशिनीयमसौ सुमूर्तिस्तव चाम्मयीह ॥
त मोघहं नीरमिदं यदाधीतीतिघ्नमे केऽपि न ते त्यजन्ति ॥७॥

स द्योगिभावप्रतिमं सुधाम नांदीमुखं तुष्टिदमेव नाम ॥
मं त्रो व्रतं तीर्थमितोऽधिकं हि यन्मे मतं नास्त्यत एव पाहि ॥८॥

त्र यीतपोयज्ञमुखा नितांतं ज्ञं पांति ना धिघ्न इमेऽज्ञमार्ये ॥
क स्त्वल्पसंज्ञं हि दयेत यो नो दयार्हयार्योऽझ्झित ईश्वर्ये ॥९॥

स मस्तदेवर्षिनुते प्रसीद धेह्यस्य के विश्वगते करं ते ॥
र क्षस्व सुष्टुत्युदिते प्रमत्तः सत्यं न विश्वान्तर एष मत्तः ॥१०॥

स्वज्ञं हि मां धिक्कृतमत्र विप्रैर्नैवरं विप्रतरं विधेहि ॥
ती क्ष्णश्रुतेर्व्याधिरुगिष्टवाचो स्वस्थाय मे रात्विति ते रिरीहि ॥११॥

स्तो तुं न चैव प्रभुरस्मि वेदतीर्थाधिपे जन्महरे प्रसीद ॥
त्र पैव यत् सुष्टुतयेऽस्त्यपायात् सा जाड्यहातिप्रियदा विपद्भ्यः॥१२॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीसरस्वतीनदीस्तोत्रं संपूर्णम् ॥

## ५६ श्रीगोदावरीस्तोत्रम् ॥

वासुदेवमहेशात्मकृष्णात्रेणीधुनीस्वसा ॥
स्वसाराद्या जनोद्धर्त्री पुत्री सह्यस्य गौतमी ॥ १ ॥

सुरर्षिवंद्या भुवनेनवद्या याद्यात्र नद्याश्रितपापहंत्री ॥
देवेन या कृत्रिमगोवधोत्थदोषापनुत्यै मुनये प्रदत्ता ॥ २ ॥

वार्युत्तमं ये प्रपिबंति मर्त्या-यस्याः सकृत्तेऽपि भवंत्यमर्त्याः ॥
नंदंत उर्ध्वं च यदाप्लवेन नरा दृढेनेव सवप्लवेन ॥ ३ ॥

दर्शनमात्रेण मुदा गतिदा गोदावरी वरीवर्ति ॥
समवर्तिविहायद्रोधासी मुक्तिः सती नरीनार्ति ॥ ४ ॥

रम्ये वसतामसतामपि यत्तीरे हि सा गतिर्भवति ॥
स्वच्छांतरोर्ध्वरेतोयोगिमुनीनां हि सा गतिर्भवति ॥ ५ ॥

तीव्रतापप्रशमनी सा पुनातु महाधुनी ॥
मुनीढ्या धर्मजननी पावनी नोद्यताशिनी ॥ ६ ॥

सदा गोदार्तिहा गंगा जंतुतापापहारिणी ॥
मोदास्पदा महाभंगा पातु पापापहारिणी ॥ ७ ॥

गोदा मोदास्पदा मे भवतु वरवता देवदेवर्षिवन्द्या ।
पारावाराग्र्यरामा जयति यतियमीट्सेविता विश्वचित्ता ॥
पापाद्या पात्यपापा धृतिमतिगतिदा कोपतापाभ्यपघ्नी ।
वंदे तां देवदेहां मलकुलदलनीं पावनीं वंद्यवन्द्यां ॥ ८ ॥

गोदाष्टकं संपूर्णम्

## ५७ गोदावरीस्तोत्रम् ॥

या स्नातमात्राय नराय गोदा गोदानपुण्याधिदृशिः कुगोदा ॥
गोदासरैदा भुवि सौभगोदा गोदावरी सावतु नः सुगोदा ॥ १ ॥

या गौपवस्तैर्मुनिना हृतात्र या गौतमेन प्रथिता ततोत्र ॥
या गौतमीत्यर्थनराश्वगोदा गोदावरी सावतु नः सुगोदा ॥ २ ॥

विनिर्गता त्र्यंबकमस्तकाद्या स्नातुं समायान्ति यतोपि काद्याः ॥
काऽऽद्याधुनी दृक्सततप्रमोदा गोदावरी सावतु नः सुगोदा ॥ ३ ॥

गङ्गोद्गतिं राति मृताय रेवा तपःफलं दानफलं तथैव ॥
वरं कुरुक्षेत्रमपि त्रयं या गोदावरी सावतु नः सुगोदा ॥ ४ ॥

सिंहे स्थिते वागधिपे पुरोधःसिंहे समायान्त्यखिलानि यत्र ॥
तीर्थानि नष्टाखिललोकखेदा गोदावरी सावतु नः सुगोदा ॥ ५ ॥

यदूर्ध्वरेतोमुनिवर्गलभ्यं तद्यत्तटस्थैरपि धाम लभ्यम् ॥
अभ्यन्तरक्षालनपाटवोदा गोदावरी सावतु नः सुगोदा ॥ ६ ॥

यस्याः सुधास्पर्धि पयः पिबन्ति न ते पुनर्मातृपयः पिबन्ति ॥
यस्याः पिबन्तोम्ब्वमृतं हसन्ति गोदावरी सावतु नः सुगोदा॥७॥

सौभाग्यदा भारतवर्षधात्री सौभाग्यभूता जगतो विधात्री ॥
धात्री प्रबोधस्य महामहोदा गोदावरी सावतु नः सुगोदा ॥ ८ ॥

समाप्लुता मया सा या सिषेवे पूर्वसागरम् ॥
सप्तवक्त्रैस्तपःकृष्णसप्तम्यां सति वासरे ॥ ९ ॥

सप्तसुप्तेरसुप्ता सा गुप्ता सागरमध्यतः ॥
गोदावरी वरीवर्ति न निद्राति कदाचन ॥ १० ॥

इति गोदावरीस्तोत्रम् ॥

## ५८ श्रीनर्मदालहरी

नर्मदे हरसंभूते हरलिङ्गार्चनादृते ॥
हरलिङ्गाञ्चिततटे जयार्घं नर्मदे हर ॥
नमः प्रातर्मातर्गिरिशदुहितर्नर्मद उत ।
क्षपायां रेवे ते नम इतमते मेकलसुते ॥
नमो नित्यं सत्यं हि त उदकमत्यंतकमकं ।
हरत्याधिं सा त्वमखिलविषहे मेऽर्पय सुखम् ॥ १ ॥

महेशाङ्गोद्भूता सुरवरनराणामभिमता ।
युता सिद्धैर्याता प्रसभमिव पाश्चात्यजलधिम् ॥
वृता भीमेनैषा हृतभजकदोषा वरवृषा ।
सुभूषा सद्वेषा रुचिरवपुषा भात्यतिरुषा ॥ २ ॥

तटे यस्यास्तप्त्वा तप उपरिगैर्दुश्चरमरं ।
वरं ह्यत्रेः पत्नी परममनसूया गतभया ॥
स्वपुत्रत्वेनैव त्रिभुवनसमाराध्यमभवं ।
समापास्मद्दैवं क इह सरितं तां तु न नमेत् ॥ ३ ॥

प्रयान्तीं सिन्धुं या प्रतिहतगतिर्विन्ध्यपदतो ।
महावेगाऽभङ्गा सकलमलभङ्गा वरभगा ॥
नगान्भित्वानेकानपि विविधलोकान्स्वबलतः ।
पुनातीयं रेवा जगति वरभावाऽहृतभवा ॥ ४ ॥

प्रसिद्धाऽऽस्ते यस्याजनिरमरकण्ठेऽमरवृते ।
मते नाभिः सिद्धेश्वरपुर उतासौ भृगुपुरे ॥
परे सिन्धौ लीना जगति मलिनानां सुमतिदा ।
समुद्धर्त्री भर्त्री निजभजकलोकस्य गतिदा ॥ ५ ॥

सरस्वत्याः सत्या जलमिह पुनाति त्रिदिनतः ।
स्म कालिन्द्या नद्या अपि च सलिलं सप्तदिनतः ॥
महाभङ्गा गङ्गाखिलदुरितभङ्गा सपदि सा ।
महाभावा रेवा कथमपि हि दृष्ट्वैव सहसा ॥ ६ ॥

स्वभावाद्यासिन्धोरियमचलजाभास्ति सुलभा ।
त्रिषु स्थानेष्वेषा हृतमलिनदोषा न सुलभा ॥
नगर्यामोङ्काराभिधपशुपतेरुत्तरगति-
र्युता वौराभिख्येऽपि च भृगुमुनेः क्षेत्र उशति ॥ ७ ॥

पुनन्त्यन्या मान्या अपि जगति गङ्गादिसरितः ।
प्रयागादिस्थाने महति न हि सर्वत्र दुरितात् ॥
इयं रेवा देवाधिपतिशिवसेव्योभयतटा ।
तटे यत्र क्वापि स्वकमिह पुनात्याजलनिधेः ॥ ८ ॥

त्रिशूलांकान्यच्छान्यगणितविमानानि त उप-
र्युपर्यस्याः कूलं सुविमलमुपादाय सततम् ॥
स्थिताः शंभोर्दूता मृतमिह तु नेतुं शिवपुरं ।
वरं तेषामुच्चैरहमहमिकाशब्द उदितः ॥ ९ ॥

बहिःशब्दात्तस्मात्प्रविगलितधैर्या यमभटाः ।
मृतान्नेतुं प्राप्ता अपि सपदि ते वेपितहृदः ॥
अधीरा धीरा द्राक् तत उत परावृत्य सजवाः ।
स्ववासं संजग्मुः खलु तत इतः को नरकभाक् ॥ १० ॥

प्रभावोऽस्या मृत्युञ्जयदुहितुरेवं हि सरितो ।
यतोऽतोऽसौ रेवा नृमरणभवान्तास्ति विदिता ॥
न तां कः सेवेतानुपदमृतभीतिर्हतमतिः ।
समानां तापानामपि च दुरितानां प्रशमनीम् ॥ ११ ॥

यदीयांबुस्पृष्टः स्पृशति गतियोगेन पवनो ।।
मनोहृद्यं यं तं तमपि स पुनातीति महिमा ।।
प्रतीतो यस्याः सा जगति गतिदासावभयदा ।
सदा सक्तान्युक्तान्किमुत भजतामुद्धरति नो ॥ १२ ॥

यदीयं पानीयं सदमृतमयं चित्सुखमयं
सुपेयं चायुष्यं मतिदमुत वर्चस्यमभयम् ॥
यशस्यं चक्षुष्यं विहितविजयं स्वर्ग्यमलयं ।
सुभव्यं सद्गेयं सकलजगदारोग्यविजयम् ॥ १३ ॥

सुरप्रार्थ्यं पथ्यं स्वयमिह च पूज्यं विजयते
जगन्मान्यं धन्यं मलहृदिह लभ्यं तु नियतेः ॥
नियोगात्सा रेवा नृभवदवदावार्तिशमनी ।
मनीषीडथा पायादविरतमपायाद्वरधुनी ॥ १४ ॥

नियम्यात्मानं ये विहितनियमाः सन्ततपरि-
क्रमं कुर्वन्त्यस्या अमलजलसेवैकनियमाः ॥
सुपूतास्ते धन्या जगति बहुमान्याः परगतिं ।
व्रजन्त्येवं रेवा जयति खलु शर्वाङ्गजनिता ॥ १५ ॥

अये रेवे देवेडितगुणगणे मर्त्यतरणे ।
क्षणेनापि स्नानात्परमगतिदाभीष्टवरदा ॥
त्वमेवातो देवा अपि तव न चेच्छन्ति हि तटं ।
परित्यक्तुं वक्तुं तव गुणगणान्कः प्रभुरिह ॥ १६ ॥

यदीये सत्तोये हिमनगसुतागर्भगगणा-
धिपस्योत्कृत्यारं शिर इह सुरारिः स्वहितकृत् ॥
महामायावी प्राक्षिपदपभयोऽतर्क्यमहिमे-
श्वरस्यात्माच्छीर्षाद्गतरुधिरसंस्पर्शवशतः ॥ १७ ॥

ततोऽनन्ता आब्धेः स्मरहरसुतायास्तु सलिले-
मलेऽनन्ता जाता इह रुधिरभासः खलु शिलाः ॥
अभूवन्गाणेशा अखिलमलसंक्षालनपरा ।
वरापूज्या विघ्नक्षपणपटवस्तेऽपि वरदाः ॥ १८ ॥

यदीये पानीये भृशममृतसंस्पर्धिजननि ।
क्षपायां ते चोङ्कारेश्वरवरपुरात्पूर्वत उत ॥
महोत्तुङ्गस्थानात्पतित उपलास्ते पशुपते-
र्भवन्त्याहो बाणाभिधपरमलिङ्गानि बहुशः ॥ १९ ॥

महान्तस्ते बाणा अपि परमसूक्ष्माः कतिपयाः ।
शुभाः कर्पूराभाः शशधरकलाढयाः कतिपयाः ॥
परे केचिच्चित्रा अपि च निखिलास्तेऽत्र भजनात् ।
गजारेः सायुज्यं ददत इति रेवांबुमहिमा ॥ २० ॥

एवंप्रभावे जय देवि रेवे, प्रसीद मे तेंबु सदैव सेवे ॥
श्रीनर्मदे देवि नमो नमस्ते, श्रीशर्मदे सोमसुते नमस्ते॥२१॥

अवतु विगतरोषास्मान्महासिन्धुयोषा ।
परिहृतनतदोषा या नमोमात्रतोषा ॥
जयतु भजकपोषा सा स्रवन्ती विशेषा ।
निरुपमतमभूषा मालिनी दिव्यवेषा ॥ २२ ॥

सन्मानसस्वच्छसुदिव्यनीरा ।
नीरागयोग्याश्रितरम्यतीरा ॥
धीरार्चिता नित्यमखण्डपूरा ।
सा रातु रेवेष्टमनंतसारा ॥ २३ ॥

स्वभक्तवरदे सुरद्विषदभेद्यसद्वर्मदे।
सुदुर्गतिदकर्मदे हृतगदेऽपि सद्धर्मदे॥
अये नदि न दीनतां व्रजसि कर्हिचिच्छर्मदे।
प्रसीद जनकामदे जय नमोऽस्तु ते नर्मदे ॥ २४ ॥

यन्मूलेऽस्त्यमरेश्वरो विजयते श्रीसिद्धनाथस्तथा।
कावेरीपरिवेष्टितो गतिद ओंकारोऽपरे चामिताः॥
मध्येऽन्येऽपि च शूलपाणिसहिताः पाश्चात्यभागे स्थिताः।
सर्वे ते भजतामभीष्टफलदा वर्वर्ति सा नर्मदा॥ २५॥

हरपरमरये समस्तमघं मम
(हारबन्ध) कुरु गुरुकरुणां समस्तमते मयि॥
खलबलदलने समस्तमनोमलम्।
हर दरमरमप्यमर्त्यमतेऽमले ॥ २६ ॥

यस्य स्मृत्या च सद्यः कलिमलविलयो जायते भावुकानां।
यत्स्मृत्या स्मर्तृगामी भवभयहृदुपेत्यात्मदो भावुकानाम्॥
दत्तात्रेयस्य तस्य प्रशमितमनसः सद्वरीवर्ति मातुः।
स्थानं यस्यास्तटे सा विजयत उशती नर्मदा शर्मदा नः॥२७॥

(अलंकारः)कुष्ठाद्यार्तोऽप्यरोगो भवति सदनसूयाश्रमे यत्तटे यन्॥
मध्ये शुक्लादितीर्थान्यपि झटिति पुनन्त्युद्धरत्याशु या च॥
प्रेतश्राद्धेन नारायणबलित इतं दुर्गतिं मुक्तिदां तां॥
रेवामस्तौदखेदां परमसुहितदां नर्मदां वासुदेवः ॥ १ ॥

(गोमूत्रिकाबन्ध) भवान्तकेऽभयं देहि तापं मे हर नर्मदे॥
भवात्मके नयं देहि पापं मे हर नर्मदे॥

जय जय शिवकन्ये नर्मदे शर्मदे त्वम् ।
जय जय जनमान्ये धर्मदेऽधर्मदे त्वम् ॥
जय जय सुवदान्ये धर्मदे कर्मदे त्वम् ।
जय जय भुवि धन्ये भर्मदे वर्मदे त्वम् ॥

इति श्री. प. प. वासुदेवानंदसरस्वतीविरचिता
श्रीनर्मदालहरी संपूर्णा ॥

---

## ५९ मन्त्रगर्भश्रीनर्मदास्तोत्रम्

वा रिता न र्थसंघा या अ नन्य न तमुक्तये ॥
सु ष्टु श र्म निदानायै न र्दै पुं मो हसंहृते ॥ १ ॥
दे वर्षि दा नवेड्यायै सू क्ष्मव स्तु दृशे नमः ॥
वा क्यार्था यै सोमपुत्र्यै या तना न लशान्तये ॥ २ ॥
नं दायै न र्मदायै ते त्रि धाऽ र्म विशुद्धये ॥
द या द मः स्थैर्यकर्त्र्यै सं सिद्ध्यै दे वतात्मने ॥ ३ ॥
स त्य सं प्रा प्तिकारिण्यै भू त्यै सं तु ष्टिहेतवे ॥
र म्यायै त त्त्वरूपिण्यै त पस्य र्थ्यं तरात्मने ॥ ४ ॥
स्व च्छस्व र्ण द्यधिस्वांबु द मि त त्रा सिभीतये ॥
ती व्रश र्म हृते पुंह त्तापघ्न्यै हि तकीर्तये ॥ ५ ॥
कृ ताप दा विमोक्षायै त्रे धाधर् मां गमूर्तये ॥
त पो दा यै तपःसिध्यै य ज्ञांग्यै त्रिषभीहृते ॥ ६ ॥
रे वायै न रतापघ्न्यै दि व्यायै षड्द्विषध्दृते ॥
वा सना मो क्षदक्षायै गं गायै सत्यकीर्तये ॥ ७ ॥

स्तु तायै नि त्यदीप्तायै ब लिस पंददुध्दते ॥
ति तिक्षु शिवसंधात्र्यै र त्यै चे तःसमाधये ॥ ८ ॥

जय जय शिवकन्ये नर्मदे शर्मदे त्वम् ।
जय जय जनमान्ये धर्मदेऽधर्मदे त्वम् ॥
जय जय सुवदान्ये धर्मदे कर्मदे त्वम् ।
जय जय भुवि धन्ये भर्मदे वर्मदे त्वम् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीनर्मदास्तोत्रं संपूर्णम् ॥

---

## ६० श्रीक्षिप्रात्रिकम्

क्षिप्रामक्षिप्रदां क्षीप्राभीष्टदां क्षीप्रतारिणीं ॥
क्षिप्रप्रसादनार्थं तां प्रपद्ये सुरवन्दिताम् ॥ १ ॥

यत्तीरेऽवन्तिकाख्याऽऽस्ते महाकालाभिधेशितुः ॥
राजधान्यधिका काश्या मृता यत्रामृतं गताः ॥ २ ॥

चर्मण्वत्या युता यागात्पूर्वसागरमादरात् ॥
प्रणता संमता देवैः क्षिप्रा देवी पुनातु माम् ॥ ३ ॥

इति. श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचित–
श्रीक्षिप्रात्रिकं संपूर्णम्

---

## ६१ श्रीवेत्रवतीस्तोत्रम्

वे त्रवत्या महानद्या गु णान्वक्तुं क ईशिरे ॥
त्र पामवाप देवार्षि रु क्तये यत्स्तुतेरलम् ॥ १ ॥
व रदा वेत्रवत्येषा दे वर्षिनरसेविता ॥
ती व्रतापाघशमनी व न्द्या नः पातु सर्वदा ॥ २ ॥
स्तु तिं कर्तुमनीशोहं द याब्धेऽत्र कलौ युगे ॥
ति मिरघ्नि नमस्ते हृ-त्ता पं हर सरिद्वरे ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीवेत्रवतीस्तोत्रं संपूर्णम्

---

## ६२ पयोष्णीत्रिकम्

पयोष्णिका पातु पयोधिमिष्टक्षीरा वरा सिन्धुषु याश्वभीष्टम् ॥
फलं सकृत्स्नानत एव राति त्वां तां प्रपद्येवहि नानवद्ये ॥ १ ॥
यत्रार्णमोचनकमस्ति हि तीर्थवर्यं यत्सेवनेन सकलर्णनिवृत्तिरेव ॥
यत्स्नानतो गतिमवापुरहो पिशाचाः सर्वाघतोऽवतु सदात्र पयोष्णिका सा ॥ २ ॥
ताप्यन्विता हि सरिता प्रययौ समुद्रं पाश्चात्यमिष्टफलदा सकलार्तिहन्त्री॥
त्रात्री समस्तदुरितादपि कामदात्री सर्वाघतोऽवतु सदात्र पयोष्णिका सा ॥ ३ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
पयोष्णीत्रिकं संपूर्णम ॥

---

## ६३ तापीस्तोत्रम्

छाया विवस्वद्दुहिता हितार्था पुरातनी त्वत्र धुनी कृतार्था ॥
यथाऽऽस भूरन्यविभूषितापि तापीसरित्सावतु मां स्मृतापि ॥१॥

तपती पतिमाप्तुमुद्गता वरविंध्याद्रिपदान्महोन्नता ॥
प्रययौ नवयौवनांचिता जलधिं पश्चिमकं ह्यवंचिता ॥ २ ॥

पुनानापि नानाजनानंहसोऽत्र पदं राति याति प्रशस्तं परत्र ॥
यदीये प्रतीरेत्र पापी न तापी न कोपीयमस्मानवत्वत्र तापी ॥३॥

भुजंगप्रयातोपमा यद्गतिर्या मतिं नः पुनाना ददाना गतिं या ॥
वरं पश्चिमाब्धिं सुखेनोपयेमे हरत्वद्य तान् पाप्मनः संति ये मे ॥४॥

अवरजा वरजातिसुपूजिता द्युमणिजा मणिजातिविभूषिता ॥
सुतपती तपती पतितान्नतानवति सा यशसा पयसान्विता ॥५॥

या वारयत्याशु यदिंद्रवज्रालेपोपमं पातकमाप्लवेन ॥
प्लवेन यज्ञेन तथागतिर्न यथा नदी राति सहाप्लवेन ॥ ६ ॥

जगति तपनशीला याहि तापी सुशीला,
चलति भुवि विशाला मुक्तिपानीयशाला ॥
परिहृतजनकाला खेलदुच्चोर्मिमाला,
निखिलसुकृतपाला पातु नः सूर्यबाला ॥ ७ ॥

अये तापीहापि प्रशमितभये ते सुखमये,
सदा दत्तात्रेयो निवसति सतिप्रार्पितनये ॥
न ये त्वां सेवंते त इह जनिभाजोऽत्र भजते
गतिः सद्यो रासीत्यत ऋषिगणस्त्वां हि भजते ॥ ८ ॥

दत्तात्रेयाद्दतां तापीं पापिनिर्मुक्तिमष्टभिः ॥
पद्यैस्तुष्टाव मुक्तती वासुदेवसरस्वती ॥ ९ ॥

इति श्रीवासुदेवानंदसरस्वतीविरचितं
तापीस्तोत्रं संपूर्णम् ॥

---

## ६४ श्रीवैन्यास्तोत्रम्

वैन्यार्तिहाभया सिन्धुः पातु पापविनाशिनी ॥
दैन्याधिहा दयासिन्धुर्जंतुतापविनाशिनी ॥ १ ॥

वैन्याख्यभक्तेन समाहृतेयं
वैन्या नदी यद्वश ईशमेयम् ॥
ध्येयं महद्भिः कविभिश्च गेयं
पेयं पयोऽस्याः प्रपुनातु सेयम् ॥ २ ॥

अये वैन्ये धन्ये सुकृतिजनमान्ये जय महा-
रयेऽजन्ये दैन्येर्तिहृदसि वदान्ये त्वमघहा ॥
महाभंगे गङ्गेव नृदुरितभङ्गेह भवती
सती मर्त्योऽमर्त्योऽपि यदमृतपानेन भवति ॥ ३ ॥

वैन्याख्यगङ्गे जनतापभङ्गे प्रसीद मे देवि महातरङ्गे ॥
पुनीहि मां सागस आर्तबन्धो बन्धोच्छिदे ते सरिते नमोऽस्तु ॥४॥

वैन्ये दैन्यहृते नमोऽस्तु सरिते वेनाहृते सन्मते ॥
सर्वं मानसिकं च वाचिकमघं द्राक्कायिकं मे हर ॥
बाह्याभ्यन्तरशुद्धिकृत्त्वमसि यत्तन्मेम्ब दुर्वासना-
मुन्मूल्यार्पय पापतापशमनी श्रीदेवि सद्वासनाम् ॥ ५ ॥

वेणुवादनरताच्युतांचिता
या पुरी पुरजिताऽपि रञ्जिता ॥
सन्ति यत्र विबुधा अनेकशः
सन्ति विप्रसदनानि भूरिशः ॥ ६ ॥

तस्यां पद्मावतीपुर्यां वैन्यासंज्ञा महाधुनी ॥
मधुर्नीरा विजयते जयतेजोयशःप्रदा ॥ ७ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीवैन्यास्तोत्रं संपूर्णम् ॥

---

## ६५ श्रीतुङ्गाष्टकम् ॥

तुङ्गा तुङ्गतरङ्गवेगसुभगा गङ्गासमा निम्नगा
रोगान्ताऽवतु सह्यसंज्ञितनगाज्जातापि पूर्वाब्धिगा ॥
रागाद्यान्तरदोषहृद्वरभगा वागादिमार्गातिगा
योगादीष्टसुसिद्धिदा हृतभगा स्वङ्गा सुवेगापगा ॥ १ ॥

स्वसा कृष्णावेणीसरित उत वेणीवसुमणि-
प्रभापूतक्षोणीचकितवरवाणीसुसरणिः ॥
अशेषाघश्रेणीहृदखिलमनोध्वान्ततरणि-
र्दृढा स्वर्निश्रेणिर्जयति धरणीवरमणी ॥ २ ॥

दृढं बध्वा क्षिप्ता भवजलनिधौ भद्रविधुता
भ्रमच्चित्तास्त्रस्ता उपगतसुपोता अपि गताः ॥
अधोधस्तान्भ्रान्तान्परमकृपया वीक्ष्य तरणिः
स्वयं तुङ्गा गङ्गाभवदशुभभङ्गापहरणी ॥ ३ ॥

वर्धा सधर्मा मिलितात्र पूर्वतो भद्रा कुमुद्वत्यपि वारुणीतः ॥
तन्मध्यदेशेऽखिलपापहारिणी व्यालोकि तुङ्गाखिलतापहारिणी ॥ ४ ॥

भद्रया राजते कीर्त्या या तुङ्गा सह भद्रया ॥
संनिधिं सा करोत्वेतं श्रीदत्तं लघुसंनिधिम् ॥ ५ ॥

गङ्गास्नानं तुङ्गापानं भीमातीरे यस्य ध्यानम् ।
लक्ष्मीपुर्यां भिक्षादानं कृष्णातीरे चानुष्ठानम् ॥

सिंहाख्याद्रौ निद्रास्थानं सेवा यस्य प्रीत्या ध्यानम् ।
सद्भक्तायाक्षय्यं दानं श्रीदत्तस्यास्यास्तु ध्यानम् ॥ ६ ॥

(गोमूत्रिकाबंधः) तुंगापगा महाभंगा पातु पापविनाशिनी ॥
रागातिगा महागंगा जंतुतापविनाशिनी ॥ ७ ॥

(हारबंधः)हर परमरये समस्तमदामयान् खलबलदलनेऽघमप्यमले मम॥
हरसि रसरसे समस्तमनामलं कुरु गुरुकरुणां समस्तमते
मयि ॥ ८ ॥

वेगातुङ्गापगाघं हरतु रथरया देवदेवर्षिवन्द्या
वारं वारं वरं यज्जलमलमलघुप्राशने शस्तशर्म ॥
श्रीदत्तो दत्तदक्षः पिबति बत बहु स्याः पयः पद्मपत्रा-
क्षीं तामेतामितार्थां भज भज भजतां तारकां रम्यरम्याम्॥९॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
तुङ्गाष्टकं संपूर्णम् ॥

---

## ६६ चन्द्रभागास्तुतित्रिकम्

पूर्वं नदी या प्रथितात्र भीमा भूमावलोकात्समभूदभीमा ।
यस्यास्तटे रक्षति चन्द्रभा गा हरिर्धुनी सावतु चन्द्रभागा ॥ १ ॥

या पाण्डुरङ्गस्य पुरीं वरिष्ठामावृत्य पूर्वाब्धिमगाद्गरिष्ठा ।
सा चन्द्रभागा त्रिविधाघहन्त्री भवत्वजस्रं मम कामदात्री ॥ २ ॥
यथा हि पक्षार्धगचन्द्रभागास्तद्वद्धृताङ्गा खलु चद्रभागा ।
रागादिदोषान्विनिवर्त्य दान्ति ददातु मे चोपरतिं च शान्तिम् ॥ ३ ॥

## ६७ ज्ञानतीर्थस्तोत्रषट्पदी

विशुद्धविज्ञानमहावाक्यार्थालोचनस्रुतम् ॥
अन्त्यात्माकारवृत्त्यात्मज्ञानतीर्थं पुनातु माम् ॥ १ ॥
रागद्वेषमुखानात्मगतदोषान्विधूय यत् ॥
सत्वशुद्धिं विधत्तेन्तज्ज्ञानतीर्थं पुनातु माम् ॥ २ ॥
यत्केवलं सजातीयात्मप्रवाहोपबृंहितम् ॥
उत्पाटयत्यविद्याद्रून्ज्ञानतीर्थं पुनातु माम् ॥ ३ ॥
श्रद्धावति विसंदेहे तत्परे विजितेन्द्रिये
उदेति शान्तिदं यत्तज्ज्ञानतीर्थं पुनातु माम् ॥ ४ ॥
यत्स्वयं योगसंसिद्धे कालेनोदेति निर्मलम् ॥
पवित्राणां पवित्रं तज्ज्ञानतीर्थं पुनातु माम् ॥ ५ ॥
हृदयग्रन्थिभित्सर्वसंशयच्छिच्च कर्महृत् ॥
शोकमोहनुदास्त्वेतज्ज्ञानतीर्थं पुनातु माम् ॥ ६ ॥
षट्पदीयं मदीयास्यपद्मे तिष्ठतु सर्वदा ॥
गुर्वभिन्नेशभक्त्याभज्ञानतीर्थसमाह्वया ॥ ७ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
ज्ञानतीर्थषट्पदीस्तोत्रं संपूर्णम् ॥

## ६८ सद्गुरुतीर्थस्तोत्रम्

वाक्याऽऽविवेचनाद्युतथा द्वैतद्रुन्मूलनोचिता ।
प्रत्यक्परात्मैक्यसिन्धौ याखण्डैकरसप्रदा ॥ १ ॥
संगता ज्ञानगङ्गात्र संकल्पत्यागपूर्वकम् ।
दयया केवलं शिष्यं यः स्नापयति बुद्धिमान् ॥ २ ॥
पापेच्छाविर्भवो भूयो नैव यत्करुणेक्षणात् ।
पुनरावृत्तिरहितदेवप्राप्तिकरश्च यः ॥ ३ ॥
तदेव सद्गुर्वभिधमहातीर्थं सतां मतम् ।
तीर्यतेऽस्मान्महापापस्तत्तीर्थं सद्गुरुः परम् ॥ ४ ॥
यस्मात्तीर्थात्परं तीर्थं न भूतं न भविष्यति ।
स्मरणाद्दर्शनाद्यस्य सेवनाच्च कृतार्थता ॥ ५ ॥
तीर्थानि दिग्देशकालपरिच्छिन्नानि यान्यतः ।
विलक्षणं ज्ञानतीर्थं कृपया तद्ददाति यत् ॥ ६ ॥
तीर्थानां परमं तीर्थं तारकाणां च तारकम् ।
सद्गुर्वाख्यं महातीर्थं भजामि परमार्थदम् ॥ ७ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं सद्गुरुतीर्थस्तोत्रं संपूर्णम् ।

---

## ६९ श्रीकृष्णालहरी

चतुर्बाहुः श्रीमत्सजलजलदश्यामलतनुः
प्रकाशद्वक्त्रेन्दुः सदुडुगणमुक्तावलिरपि ॥
तडिद्वासा भास्वत्सुतिलकलसन्मौलिरघहृत्
क्षमाध्रस्य ह्यत्रेरपि जयति सूनुः स्वहितकृत् ॥ १ ॥

अपि श्रीकृष्णे ते महिमपरपारं व्रजति को
न शेषोऽशेषास्यैरपि कथयितुं वा प्रभवति ॥
अतो ह्रीतो वाचः शुचय इह वच्म्यल्पकमिदं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २ ॥

अलक्ष्यं ते रूपं वचनहृदयाध्वातिगमतो
नतोऽहं ते लक्ष्यं कथमपि च विज्ञाय वरदे ॥
प्रवृत्तस्त्वां स्तोतुं स्वमतिगतितस्ते वरमुदे
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३ ॥

कृता साहित्यज्ञैरपि सुगुणसंपत्सुललिता –
मितार्थास्तानर्थान् न च तव मुदे सापि कविता ॥
समर्थाथापि त्वं शिशुवचनवन्मे शृणु मुदा
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४ ॥

रसज्ञा मे दत्ता मुनिनामितदत्तात्रिजपदे
मुदे तस्यापीयं प्रभवति न किं साधुलहरी ॥
हरीशात्मा कृष्णा यत इयमभूद्दत्तदयिता
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ५ ॥

न च प्राज्यं राज्यं न च विबुधपूज्यं सुरपदं
पदं पूष्णो जिष्णोरपि मम न विष्णोरभिमतम् ॥
मतं दत्तात्रेयप्रपदपरिपूतं तव तटं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ६ ॥

न भोगं नो योगं न च दुरितभङ्गं लषति मे
मनोऽरोगं गाङ्गं जलमपि न साङ्गं श्रतिगणम् ॥
न यागं न स्वर्गं तव सततयोगं लषति मे
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ७ ॥

मनो मे श्रीकृष्णे त्वदपसरति क्वापि न कलौ
मलौघघ्नीतिघ्नी भवति भवतीहेति सततम् ॥
सुविश्वस्तं स्वस्तं जगति गतिदे साधनचया-
न्नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ८ ॥

महाभङ्गा गङ्गा यदि दुरितभङ्गात्र कथिता
मतापीह त्वत्तः कथमधिकतामेति विमता ॥
हरेः सांघ्र्युद्भूता त्वमिह ननु मूर्ता हरितनु-
र्नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ९ ॥

हरेर्गङ्गांघ्र्यब्जाभिनवबिसवल्ली भवतु वा-
ऽधितिष्ठत्वीट्शीर्षं स्रगिव च पताकेव सुतराम् ॥
प्रकामं मुक्तेर्न त्वमिव भवति श्रीहरितनु-
र्नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १० ॥

गते जीवे कन्यां जगति बहुमान्यां शिखरिणी-
ह सह्ये त्वां धन्यां जननि भगिनीवामरसरित् ॥
समागत्याप्यब्दं परमानियमात्तिष्ठति मुदा
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ११ ॥

महाजंबुद्वीपे वृजिनहरतीर्थानि वरदे
समायान्ति त्वान्तु त्रिविधमलदे तानि परदे ॥
तदा त्वत्स्नानादेः फलमपि न वक्तुं प्रभुरजो
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १२ ॥

पितृनुद्दिश्यैको वितरति निवापाञ्जलिमये
मनुष्यस्त्वय्यग्रे सकलपितरोऽस्य द्रुतरये ॥
गतिं यान्ति श्राद्धादपि च पुनरावृत्तिरहितां
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १३ ॥

महापाप्याकल्पं यदि विधिवशाद्दुर्गतिमितो
वृषोत्सर्गात्सोऽपि द्रुतमिह हि नारायणबलेः ॥
त्रिपिण्डीश्राद्धाद्वा व्रजति सुगतिं दुर्लभतरां
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १४ ॥

सुतं लेभे वन्ध्या ऋणहृतिमृणी दुःख्यपि सुखं
नरो यो यो यं यं स्मरति हृदि कामं स स च तम् ॥
अवापेति ज्ञात्वा जननि पतितस्तेऽद्य पुरतो
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १५ ॥

अहो माहात्म्यं ते शुकजनक आहात्र हि महा-
बलेशादासिन्धोरुभयतटसंस्थेषु बहुषु ॥
महातीर्थेष्वग्र्यं नृहरिपुरि तीर्थाष्टकमिदं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १६ ॥

मुखं ते सह्याधः सदयहृदयं ते नरहरेः
पुरेऽप्यान्ध्रे नाभिः प्रपदयुगलं प्राच्यविषये ॥
अये श्रीकृष्णे ते प्रथितमिह रूपं मुनिमते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १७ ॥

नरः श्रीकृष्णे ते सुलभममृतस्पर्धि मधुरं
वरं नाम ब्रूयात्कथमपि स निःश्रेयसमियात् ॥
सुदूरस्थो स्वस्थोऽप्यथ किमुत साक्षाद्भजति यो
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १८ ॥

पुरेष्टं दत्तं वा विहितमपि पूर्तं च सुकृतं
स्वधीतं वा जप्तं श्रुतमपि यशोऽजस्य हि तदा ॥
भवद्दृष्टिः कृष्णे भवति भवभीहृत्खलु नृणां
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १९ ॥

प्रकृत्यैक्याद्भेदो न हरिहरयोः प्रत्ययवशात्
पृथग्वद्भातीति प्रथयितुमहो शंभुवपुषा ॥
युता वेण्यापि त्वं भगवति पृथक्त्वं न भजसे
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २० ॥

अये योगिध्येये निगमगणगेयेऽब्धिनिलयेऽ
नपाये दत्ताये कलुषविलये सह्यतनये ॥
त्वदन्यन्नो वीक्षे सुलभशरणं लीढमरणं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २१ ॥

परिक्रान्ता देशा भगवति चतस्रोऽपि च दिशा
न शान्ता दुष्टाशाप्यजनि वपुषो मेऽन्तिमदशा ॥
प्रशान्ताद्यैवाशा तव दृशिवशादास सुदशा
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २२ ॥

त्वदीये सत्तोये जलचरगणा ये गतभया
वयांसीशे वान्ये पशुमृगगणाः कीटकगणाः ॥
अपि स्नाताः पीताः कथमपि ततस्ते दिवमिता
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २३ ॥

गतः क्रूरो जारो दिवमपि च चोरो वनचरो
वरोदे ते स्नानात्कथमपि नरो यः श्रुतपरः ॥
स किं स्नानात्ते न व्रजति गतिमंब श्रुतमते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २४ ॥

अपि स्नातं तीर्थं सकलमखिलं दैवतमिहा-
र्चितं सर्वं दत्तं हुतमपि च पूर्तं खलु कृतम् ॥
तव स्नातं मातर्विधिवदिह येनांबु सुगते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २५ ॥

अवज्ञातं तीर्थं सकलमपि देवा अवमता
न दत्तं मे नेष्टं मतमपि च पूर्तं किमपि नो ॥
श्रितं त्वत्सामर्थ्यादरभरवशाद्देवि सरिते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २६ ॥

क्षमः कस्याप्यग्रे क्षणमपि न च स्थातुमभवे
भवेयं तूर्ध्वास्योभवमिह हि हास्यास्पदमतः ॥
तवेयं लज्जास्तामयि सपदि मामुद्धर हिते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २७ ॥

त्वया प्रत्याख्यातो यदि भवति भीतोयमभवे
भवेदज्ञस्यास्य त्रिजगदुदरे किं नु शरणम् ॥
रणन्नुच्चैरुच्चैस्तदिह मरणं यामि महिते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २८ ॥

महापापं तापं गतमपि सकंपं गतकृपं
सशापं लोको मां हसतु तमु तापं न गणये ॥
बिभेम्यंहोपाये तव बिरुदभङ्गाद्भगनुते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २९ ॥

त्रितापघ्नीतिघ्नी भुवि पतितपावन्यघहरा
त्रितापघ्नी भीघ्नी विविधवरदात्री ऋणहरा ॥
वरा सिन्धुष्वेतद्बिरुदनिचयो जीवतु चिरम्
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३० ॥

यदास्याविर्भूता त्वमिह तत आरभ्य पतिता
विशोध्याप्युन्नीता अधिकतम एभ्योऽस्म्यत इमम् ॥
यदोद्धर्तुं शक्ता त्वमसि तत उत्तिष्ठ सरिते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३१ ॥

अयं सामान्योऽस्तीत्यपि मनसि मा स्थापय यतः
समस्ताघौघास्ते जननि मयि तिष्ठन्ति सुचिरम् ॥
अतो बध्वोत्तिष्ठेश्वरि परिकरं त्वं दृढतरं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३२ ॥

ममोद्धारेणाद्य त्रिजगति सुकीर्तिर्भवतु तेऽ
ऽसितेऽतीते काले न खलु विमले त्वीदृगभवत् ॥
प्रसङ्गोसङ्गोऽहं तत उपरि यास्येऽभयपदं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३३ ॥

अतः प्रादुर्भूत्वा परमनिजरूपेण सहसा
ममाघाद्रीन्भित्वा सकलमलहन्त्रीह सहसा ॥
कृपाक्षीरं धृत्वाङ्कमुपरि च मे देहि सहसा
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३४ ॥

कुतस्त्वय्येतावद्दुरितमिति शङ्कास्तु न यतो-
ऽन्यथात्मानं संतं तत इतरथा वेद्मि हि मया ॥
निजात्मस्तेनेन प्रतिपदमघं किं न विहितं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३५ ॥

समं साक्षात्पश्यस्यखिलहृदयस्थे भगवति
त्वदग्रे वक्तव्यं न हि न हि तथापीह वदति ॥
प्रभोरग्रे लोकास्तदनुसरणं मेऽस्तु शरणं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३६ ॥

स्वभूरूपेण त्वं सृजसि हरिधाम्नावसि हरा-
त्मना हंसीन्द्राद्या विसृजसि विभूतीः स्वकलया ॥
लयान्ते ते कुक्षिं विशति सकलं मङ्गलगते
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३७ ॥

इहापि त्वं पापिप्रचयमलसंक्षालनपटू-
दकात्मा भूराभूरपि सुरगणाः शापमिषतः ॥
स्वतन्त्रे सन्मन्त्रे सरित इह भूत्वा तव गता
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३८ ॥

तमोनुत्ते भासा जगति खलु भास्वान्न भवति
स्वयंज्योतिः स त्वां तपनमिव भं भासयत इत् ॥
अये भातां त्वानु द्युमणिसहितं भाति सकलं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३९ ॥

गणी वेणी भूत्वाप्यसुरसुरवाराद्दतपदो
मदोद्धृत्यै यद्दृग्भुवनजयिनोऽलं कुसुमगोः ॥
स गोवाहोऽपि त्वां परममाखिवत्सङ्गत उत
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४० ॥

स्वयंभूर्ब्रह्मायं भुवनरचनाभिज्ञधिषणः
ककुद्मत्याभिख्या सरिदिह हि भूत्वापि सुतवत् ॥
समायातस्त्वां संमुखमु करहाटाख्यविषये
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४१ ॥

द्विजाः काले काले शुचिषु च चतुर्भिः फलदश-
श्चतुर्भिर्द्वाभ्यां पञ्चभिरपि बुधा जुह्वति सति ॥
पुनर्द्वाभ्यां स्नानादपि नयसि नाकं त्वमखिलान्
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४२ ॥

प्रभावस्तेऽपीदृग्दहति दहनो वाति पवनो
मनोल्हादे भीतस्तपति तपनो धावति मृतिः ॥
वृषा वर्षत्यन्ये त इह बलिमुञ्जन्ति नियतं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४३ ॥

क्व शक्तिस्तेऽनन्ते विविधकुकृताद्रिप्रहरण-
क्षमा सामान्यं मे त्रिविधमपि पापं क्व नु कियत् ॥
तवाग्रे वह्न्यग्रे विरसबहुशष्पाद्रिवदहो
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४४ ॥

न कृच्छ्राद्याः शक्ता यदघहरणायापि बहुशो
न च प्रायश्चित्तं हवनजपनाद्यं क्षममभूत् ॥
स कृष्णे त्वत्स्नानाद् व्रजति सुशुचिः सन्दिवमहो
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४५ ॥

कुसङ्गान्यात्त्यर्थापहरणमुखं कायिकमघं
हरेज्यार्योन्निन्दाकदशनमुखं वाचिकमघम् ॥
कुचिन्ताम्यानर्थस्मरणमुखरं मानसमघं
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४६ ॥

त्वदीयात्मस्पृष्टः स्पृशतु गतिदे स्पर्शन उत
त्वदीयं पानीयं पततु वदनाब्जे मम बत ॥
उताहो त्वन्नीरे तुहिनशिशिरेऽङ्गं पततु मे
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४७ ॥

नुतां तीर्थैः सर्वैरपि जगति सर्वाभिरमले
सरिद्भिर्देवेन्द्रैरपि मुनिभिरत्यादृततटाम् ॥
न कस्त्वां सेवेत प्रवरसरिदत्राधिमथने
नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४८ ॥

धरेन्द्रतनयेऽभयेऽभ्युपगतोऽनुकम्पोदये
जयेश्वरि हरीशरूपिणि मणिद्युते त्वार्थये ॥
अये नदि न दीनतां व्रजतु हृन्मदीयं स्वये
क्षये वपुषि तेऽसिते भवतु दृक्त्वदीयेऽम्मये ॥ ४९ ॥

काचित्क्षालयति प्रभोः पदयुगं काचित्कमारोहति
स्वेदात्कापि जटादितः प्रकटिता बद्धापरोद्वाहिता ॥
उच्चैः काचन मानिनीह पतिता जाता गता काप्यध-
स्त्यक्तं ते न च नाम रूपमपि सत्कृष्णे दशायामिह ॥५०॥

(हारबन्धः) देवेडये वेदवेद्ये जय जय भयहृत्त्वं कृपाकृष्टकृष्णे
त्राहि त्राहि प्रर्हीतृंस्तव भवहृवराख्यां सदा सत्यसन्धे ॥
भूयो भूयोऽभयोक्तीर्वितर तव तनुर्येह मोहप्रहर्त्री
सा मे कामेश मेध्या मनसि नयनयोरादरादस्तु दत्त ॥५१॥

(गोमूत्रिकाबन्धः) कृष्णां यो वृणुते भक्तः पदं यायान्निरन्तरम् ॥
तृष्णां यो वृणुते भक्तः खेदं यायान्निरन्तरम् ॥५२॥

कृष्णास्थप्रेरितमतिर्वासुदेवसरस्वती ॥
कृष्णामस्तौदतः प्रीयान्नरसिंहसरस्वती ॥ ५३ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
श्रीकृष्णालहरी संपूर्णा ॥

---

## ७० श्रीकृष्णापंचकस्तोत्रम्

कृष्णा नः पातु तृष्णाहरमधुररसा चिद्रसासारसाक्षी
साक्षीभूता नतानां निखिलमलहरा या हरानंतमूर्तिः ॥
जूर्तिघ्नी भीतिनिघ्नी सकलहितरता तारतम्यव्यतीता-
तीता वाक्चित्तमार्गं जगति गतिदयत्ख्यातिरेषा विशेषा ॥१॥

कृष्णावेणी सततरुणी वीक्षिता मध्यनीवृद्
योषा वेषा सुषमवपुषा भासमाना समाना ॥
मानातीतापि खलु भजतां दृश्यतां याति माता
माता पादेरित उपरि परिक्रांतिवार्ता मयीह ॥ २ ॥

तव गुणगणं वारं वारं सुधारुचिरं चिरं
भगवति सति स्मारं स्मारं परं त्ववरं वरं ॥
न लषति मतिः सारं सारं विचार्य परावरं
लषति म इतो दूरं दूरं प्रदर्शय तं परम् ॥ ३ ॥

कृष्णे कृष्णतनो मनोहरकथे नाथेश्वरि प्रार्थये
दत्तं दत्तपदं प्रदर्शय परं नातो वरं त्वर्थये ॥
अन्यं योटति ते तटे नट इवानेकांगधारी हरिः
संसाराररिरिंदमः शमपरः साक्षाद्य आत्मा विभुः ॥ ४ ॥

प्रत्यक्प्रवाहितखहृत्सु महत्सु देव
उद्यन्स्वयं हरति हार्दतमः स एव ॥
तीरे भ्रमत्यनुदिनं तव भावगम्य-
स्तं दर्शयाद्य कृपयाप्यनुपाधिगम्यम् ॥ ५ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीकृष्णापंचकं संपूर्णम्

---

## ७१ श्रीकृष्णावेणीपंचगंगास्तोत्रम्

शिवा शिवा शिवप्रेष्ठा शिवायास्तु हताशिवा ॥
सर्वदा शेरते यस्यां सद्गुणाः सर्वदा हि सा ॥ १ ॥

नमामि सर्वतोभद्रां सुभद्राश्रयदां नदीं ॥
भद्राय सास्तु मे भद्रा सर्वाभद्रहरा वरा ॥ २ ॥

स्रोतस्वती भोगवती या सौभाग्यवती सती ॥
आभोगतायै सा मेऽस्तु ख्याता भोगवतीह या ॥ ३ ॥

कलुषाणीह सर्वाणि या कुंभयति सत्वरम् ॥
परशक्त्या स्रवन्ती सा भूयात्कुंभी शिवाय मे ॥ ४ ॥
स्रवन्ती या हतापाया पापहारिसरस्वती ॥
पुनातु सा ह्यवाग्वासा पापहन्त्री सरस्वती ॥ ५ ॥
कृष्णा विष्णुतनुः साक्षान्महापापापहारिणी ॥
तारिणी दुर्गसंसारात्सा कृष्णा मुक्तयेऽस्तु नः ॥ ६ ॥
महेश्वरस्वरूपा या कृष्णया सङ्गता नदी ॥
सा वेणी सकलाघघ्नी तापघ्नी मुक्तयेऽस्तु नः ॥ ७ ॥
कृष्णावेणीपंचगङ्गास्तोत्रं सर्वाघहारि यः ॥
त्रिसंध्यं प्रपठेद्धीमान्स पवित्रो भविष्यति ॥ ८ ॥

इति श्री. प. प. श्रीवासु. कृष्णापंचगंगास्तोत्रं संपूर्णम् ॥

---

## ७२ कृष्णापञ्चगङ्गासंगमस्तोत्रम्

कृष्णाप्रवाहेऽत्र तु पञ्चगङ्गायुजिः प्रतीताखिलपापभङ्गा ॥
गङ्गार्कजायुत्यधिपुण्यदात्री श्रेयोविधात्री सकलाघहन्त्री ॥ १ ॥
तीर्थं प्रयागेन समं मनोहरं क्षेत्रं कुरुक्षेत्रसमं यतो वरं ॥
सद्यः कुरुक्षेत्रवराधिपुण्यदं तं सङ्गमाग्र्यं प्रणमामि कामदम् ॥२॥
उदुम्बरः कल्पतरुर्यत्रास्ते चामरेश्वरः ॥
विश्वेश्वरसमो यत्र शक्तितीर्थं च यत्र हि ॥ ३ ॥
यत्र श्रीसद्गुरोर्वासः सर्वाभीष्टार्थपूरकः ॥
सुतरां भ्राजतेऽनेन संगमोऽस्मै नमो नमः ॥ ४ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं कृष्णापञ्चगङ्गासङ्गम-
स्तोत्रं संपूर्णम् ॥

---

## ७३ श्रीकृष्णाष्टकम्

स्वैनोवृन्दापहृदिह मुदा वारिताशेषखेदा
शीघ्रं मन्दानपि खलु सदा यानुगृह्णात्यभेदा ॥
कृष्णावेणी सरिदभयदा सच्चिदानन्दकन्दा
पूर्णानंदामृतसुपददा पातु सा नो यशोदा ॥ १ ॥

स्वर्निश्रेणिर्या वराभीतिपाणिः
पापश्रेणीहारिणी या पुराणी ॥
कृष्णावेणी सिंधुरुग्यात्कमूर्तिः
सा हृद्वाणीसृत्यतीताऽच्छकीर्तिः ॥ २ ॥

कृष्णासिन्धो दुर्गतानाथबन्धो
मां पङ्काधोराशु कारुण्यसिन्धो ॥
उध्दृत्याधो यान्तमंबास्तबन्धो
मायासिन्धोस्तारय त्रातसाधो ॥ ३ ॥

स्मारं स्मारं तेम्ब माहात्म्यमिष्टं
जल्पं जल्पं ते यशो नष्टकष्टम् ॥
भ्रामं भ्रामं ते तटे वर्त आर्ये
मज्जं मज्जं तेऽमृते सिन्धुवर्ये ॥ ४ ॥

श्रीकृष्णे त्वं सर्वपापापहन्त्री
श्रेयोदात्री सर्वतापापहर्त्री ॥
भर्त्री स्वेषां पाहि षड्वैरिभीते-
र्मां सद्गीते त्राहि संसारभीतेः ॥ ५ ॥

कृष्णे साक्षात्कृष्णमूर्तिस्त्वमेव
कृष्णे साक्षात्त्वं परं तत्वमेव ॥
भावग्राह्ये मे प्रसीदाधिहन्त्रि
त्राहि त्राहि प्राज्ञि मोक्षप्रदात्रि ॥ ६ ॥

हरिहरदूता यत्र प्रेतान्नेतुं निजं निजं लोकम् ।
कलहायन्तेऽन्योन्यं सा नो हरतूभयात्मिका शोकम् ॥७॥
विभिद्यते प्रत्ययतोऽपि रूप-
मेकप्रकृत्योर्न हरेर्हरस्य ॥
भिदेति वा दर्शयितुं गतैक्यं
वेण्याऽजतन्वाऽजतनुर्हि कृष्णा ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीकृष्णाष्टकं संपूर्णम् ॥

## ७४ नृसिंहवाटिकास्थशुक्लाद्यष्टतीर्थस्तोत्रम्

ब्रह्महत्याहरं तीर्थं कृष्णा पश्चिमवाहिनी ॥
यत्र तत्रैव शुक्लाख्यं स्नानाच्छुक्लीकरोति यत् ॥ १ ॥
ततोग्रतः पापविनाशि काम्यतीर्थं वरोदुम्बरसंनिधौ च ॥
सिद्धाख्यतीर्थं वरदं तथैवामरेश्वरस्याऽमरतीर्थमग्रे ॥ २ ॥
स्यात्कोटितीर्थं त्वथ शक्तितीर्थं प्रयागतीर्थं च ततस्ततोऽग्रे ।
षट्कूल एतानि परप्रतीरे महाष्टतीर्थानि महाघहन्ति ॥ ३ ॥
न ब्रह्महत्यादिमहाघसंघो यद्दर्शनादेव निमेषमात्रम् ॥
स्थास्यत्यशेषाघहराष्टतीर्थस्नानादिपुण्यं किमु वाच्यमत्र ॥४॥
नमोऽस्तु तीर्थाष्टक ते म आशु श्रीपादपादेक्षणविघ्नकारि ॥
निवार्य पापं त्रिविधं समस्तं विज्ञानपात्रं कुरु मामिहैव ॥ ५ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
शुक्लाद्यष्टतीर्थस्तोत्रं संपूर्णम् ॥

## ७५ नरसिंहवाटिकावर्णनम् ॥

मङ्गलायतन तेऽस्तु मंगला मङ्गलाय तनुरात्तमङ्गला ॥
मङ्गलायतनसर्वमङ्गलामङ्गला यत इनाः सुमङ्गलाः ॥ १ ॥

पांसुलं व्याप्तलोकं सद्विक्रमत्रातपांसुलम् ॥
भद्रदं पदमेतत्ते मम भूयादभद्रदम् ॥ २ ॥

अग्रजन्मासि भूतेश विश्वभृन्मानवोप्यहं ॥
अग्रजन्मास्यतो भूयाद्ब्रह्मन्संबंध आवयोः ॥ ३ ॥

नरसिंह इहाद्वैतनरसिंहः प्रभुर्यतिः ॥
कृष्णापञ्चनदीयोगे तृष्णाहारी कलौ युगे ॥ ४ ॥

धन्या वदान्याश्रितसारतीरा मान्यास्तदैन्यामृतसारनीरा ॥
कृष्णा वितृष्णान्हि विधाय भक्तान्पुष्णाति कृष्णाच्युतमूर्तिरेषा ॥ ५ ॥

मन्येत्र धन्येयमनन्तमूर्तिः स्वस्पर्शनालोकनकीर्तनाद्यैः ॥
दीनानिमान्पावयितुं स्वभक्तान्कृष्णात्र कृष्णाभिधनिम्नगाभूत् ॥ ६ ॥

यदात्मनोः प्रत्ययमीदभिन्नमेकप्रकृत्योः प्रथितं स्वरूपम् ॥
हरिर्हरो दर्शयितुं ह्यभिन्नं गतौ द्विनद्यैक्यमियं तु कृष्णा ॥ ७ ॥

अष्टाङ्गयोगसिद्धिः कष्टा मिष्टाशिनां कलौ स्पष्टा ॥
तत्सिद्धिदानि तीर्थान्यष्टातोसौ दधौ स्वभक्तेष्टा ॥ ८ ॥

(गद्यम्) भगवती श्रीकृष्णेयमेव भगवच्चरणावनेजनशोभन-जीवनोत्तमकलेवरामरेश्वराधिष्ठितप्रतीरामरपुरसंयोगपरमरुचिराभितः प्रचुरसुंदरमंदिरालंकृतामितामरभूरुहमण्डितासादितमनोहरनिर्जरापरामरनिम्नगेव बभौ ॥ ९ ॥

या किल स्वीयजीवनाचिन्तनकीर्तनदर्शनस्पर्शनसेवनादिना पवित्रीकृतबाह्याभ्यन्तरात्मन उच्चावचस्वभक्तानज्ञानतः स्वलोकं प्रापयितुमुद्युक्तान्याम्यान्दूतान्निवारयितुं तद्दिशं जिगमिषतीव ॥१०॥

सह्याद्रिकन्येयमसह्यवीर्या सुधाधिकस्वादुरसा पवित्रा ॥
स्निग्धातिमुग्धा महिषी वृषैः कैर्जानेभवत्प्राग्लवणांबुधेर्नो ॥ ११ ॥

तस्यास्तटे श्रीभगवान्नृसिंहसरस्वती तत्र पवित्रदेशे ॥
तिष्ठत्यजस्रं खलु तन्निवासः स्वर्वासिवासाधिसुखं तनोति ॥ १२ ॥

मद्याः सकाशाद्विपुलाचलामला रेजेत्र सोपानपरंपरा वरा ॥
रौद्रप्रयत्नै रचिताश्वमेधसत्पङ्क्तिर्यथैन्द्रं पदमारुरुक्षुभिः ॥ १३ ॥

यत्र ब्रह्मानन्दसंज्ञा मठास्ते दातुं ब्रह्मानन्दहीनामरेभ्यः ॥
ब्रह्मानन्दं केवलं सत्कृपातो गच्छन्तीवोर्ध्वं सतां वाद्धि युक्तम् ॥ १४ ॥

(गद्यम्) सर्वदा खिल जागरूकाखिलवरदामरनिकरकल्पतरुवर-जान्हव्यन्नपूर्णाद्यलंकृतेऽस्मिन्सुगमापावृतकान्तपथे दैन्यपापतापा एवा-लब्धमार्गा अन्तः प्रवेष्टुं नो इतर इत्येतदेवात्र वैषम्यं व्यालोकि॥ १५॥

अत्र त्वखिला अपि भूसुराः अज्ञानध्वान्तध्वंसना इना इव, भवतापहराश्चन्द्रा इव, भौमा अपि सर्वमङ्गला इव, बुधा अपि निसर्गसौम्या इव, सुभाषितभूषिताः सर्वगुरवो गुरव इव, वशकाव्याः कवयः कवय इवातिपीनस्तनजघनललनामण्डलाक्रमणमन्दा मन्दा इव स्थिता अत एवैकैकग्रहमण्डितं ग्रहमण्डलं स्फीताभ्यसूयं स्वस्थ-मप्यस्वस्थमिवालक्ष्यते ॥ १६ ॥

सार्थको नाकलोकोऽयं नाकवार्तः परस्य तु ॥
नाकसंज्ञैव यत्रास्ते स्पर्धासूयात्ययाद्यकम् ॥ १७ ॥

यत्र स्मरस्मेरनराः सुरा इव प्रीताः स्थिताः सेवितकामितामृताः ॥
संगीतयुक्ते सुधियः स्वया स्त्रियः साध्व्योऽपि सच्छीलजिता-
मृतांगनाः ॥ १८ ॥

यत्रायमात्मा सुखसच्चिदात्मा सन्दृश्यतेऽजः शतसूर्यतेजाः ॥
सत्वप्रधाने हृदि सावधाने ब्रह्मेव भिक्षोः श्रुतिभिस्तितिक्षोः ॥ १९ ॥

देवोऽमरः सहस्राक्षः परितो निर्जरैर्वृतः ॥
त्रिलोकार्चितपादाब्जो मघवेवापरोस्त्ययम् ॥ २० ॥

धर्मराजो दण्डधरः समवर्ती यमेश्वरः ॥
सर्वदा ज्ञातदेवात्मा जयत्यत्रापरो यमः ॥ २१ ॥

पश्यन्सत्यानृते कर्मयन्त्रितानां नृणां स्फुटम् ॥
नारायणोयं जयति प्रचेता इव पात्रधृक् ॥ २२ ॥

मनुष्यधर्मा देवोऽपि श्रीदः पुण्यजनेश्वरः ॥
राजराजो जयत्यत्र नरवाह इवापरः ॥ २३ ॥

मालाकमण्डलुधरो विभुर्वेदपरायणः ॥
सदानन्दो गतच्छन्दो ब्रह्मेवात्र तपस्थितः ॥ २४ ॥

नारायण इवाशेषसेतुहेतुरयं हरिः ॥
विश्वरूपो हतखलः सदा भक्तमतानुगः ॥ २५ ॥

मृत्युंजयोऽमृतमयः शंकरस्त्रिपुरान्तकः ॥
सर्वज्ञो जितकामोयं वशी शंभुरिवापरः ॥ २६ ॥

सृष्ट्वात्मेदं प्रविश्यांतर्मायया क्रीडतीह सः ॥
पदाभ्यामेष पाति स्वान्प्रज्ञानब्रह्मवाचकः ॥ २७ ॥

पादपत्वं स्वार्थसिध्यै द्रुमाणामितरे विदुः ॥
पादपत्वं स्वर्थसिध्यै सत्पतेर्नेतरे विदुः ॥ २८ ॥

( गद्यम् ) स एष परमकारुणिको भगवान् जगद्गुरुः केवलयुक्त्या मुक्त्या इह हि परस्परं विवदतामसतां शास्त्रिणां मतानि निराकुर्वन् स्वभक्तानां विमलदृष्ट्यैव स्वपदपर्यालोचनान्मुक्तिरिति श्रुतितात्पर्यमुपदेष्टुमिव सच्चिदानन्दं पदमिह प्रकटीचकार ॥ २९ ॥

परमात्मन इवास्य श्रीगुरोः, प्रबोधसमय इव शिबिकोत्सवसमये, विशुद्धज्ञानदीपैरिव प्रदीपैः प्रकाशिते सत्वप्रधानान्तर इव शिबिकान्तर

उपविष्टं स्वप्रकाशापरोक्षात्मानमिव सर्वात्मानं षड्विधलिंगतात्पर्यावधारणरूपश्रवणमनननिदिध्यासनसमाधिक्रमगतचरमवृत्त्येव केवलामलदृष्ट्यापरोक्षीकुर्वंत इव पश्यन्तो, यतय इवोच्चावचजन्तवो विस्मृतबाह्याभ्यन्तरव्यवहाराः सन्तो ब्राह्मीं स्थितिमिव परमानन्दस्थितिं प्राप्नुवन्त्यहो महदाश्चर्यमिदम् ॥ ३० ॥

किंचित्स्वप्नेऽपि यैर्नाप्तं योगसाधनकारणम् ॥
समाधेस्ते पराकाष्ठां प्रापुर्ध्येयैकगोचराः ॥ ३१ ॥

पेशलैः कापिलालापैः किं शेषाशेषभाषितैः ॥
किं चान्यैर्मन्य एवैका तारिका वाटिका हरेः ॥ ३२ ॥

(गद्यम्) भगवत्पददिदृक्षया परमवाटिगमाश्रित्यानित्यवस्तुविवेकस्तत्र यदृच्छयाप्रमाधुरान्नमेवनादिहामुत्रार्थफलभोगविरागस्त्रिषवणमघहरणकार्ष्णोणोनिषेवणाच्छमादिसंपत् संपन्नजनसेवितकान्तानन्तायतनालोकनान्मुमुक्षुत्वं नारायणार्हणप्रेक्षणात्परोक्षज्ञानमज्ञानध्वान्तध्वंसनजनार्दनपदालोकनमपरोक्षज्ञानमिति किमतः परं परं साधनम् ॥ ३३ ॥

अध्वैष यदिदं कर्म कार्यं सत्पददर्शनम् ॥
विमनोवासनस्तज्ज्ञो न प्रमाद्येदतोऽनिशम् ॥ ३४ ॥

कुतो मोहः कुतः शोकः कुतः कामः कुतो भ्रमः ॥
कुतः संशय एतस्मिन्पदे दृष्टे परावरे ॥ ३५ ॥

कन्दर्पदर्पदलिताललिताङ्गनाङ्ग–
सम्बन्धबन्धनवशा अवशास्त आपुः ॥
नेदं पदं परमया रमयापि येन्धा–
स्ते हन्त हन्त कुधिया विधियान्त्यधोधः ॥ ३६ ॥

लुलल्लालं लीलालिलतललनालोललपनं
क्व कीलालेद्बालो ललदमललीलोलितिलकः ॥
क्व लोलालिप्रालिर्लेलितकलिभालः क्व मललं
त्रिलं लोलन्मूत्रं क्व कनकघटौ मांसलकुचौ ॥ ३७ ॥

(गद्यम्) अहह मूर्खप्रतारणेयं पश्य पश्य सरन्ध्रघटकल्पं संघाणपिञ्जूषादिलिप्तं श्लेष्मलमलङ्काराद्यानीतशोभं मलीमसं लपनं निष्कलंककलानिधिरिति, मांसलौ मुक्तावल्यादिरञ्जितौ स्तनगोलौ स्वर्णकलशाविति, चर्मशकलं द्विधा भिन्नं गलन्मूत्रमपानोद्गारधूपितममूल्यचैलतिरोहितं कृमिकुलस्थलकल्पं गलन्मदकरिगण्डस्थलमिति, हिंस्रवञ्चनार्थं त्वगावृता रक्तमांसास्थिघटितात्यमङ्गला मङ्गलमात्रपवित्रा ममताहन्तावृता स्वपरमूर्तिरियमासेचनककनकमूर्तिरिति, भ्रान्त्यैव-पश्यन्त एतान् भ्रष्टपथानसतो धिग्धिगहो हर हर हरिमायेयं किल ज्ञानिनामपि चेञ्छतीति महर्षिवाक्याय शतशो नमो नमः ॥ ३८ ॥

त्यक्तानित्याशुचिदुःखमयोभयलोकभोगसाधनसंगा दुस्तरैषणापारगा परावृतखरतरासुरस्मरशरविसरवर्गा भगवद्दर्शनमात्रकामाश्रितवाटिकायोगा अश्रान्तमाप्तभगवत्पादाभोगा उदितपरमार्थभागा निःसङ्गा अमी नरसिंहवाटिकास्थिताः सर्वेऽपि नरसिंहसरस्वतीयतिगुरुप्रसादेनैव कृतकृत्याः स्युः ॥ ३९ ॥

प्रेतेऽस्ति नास्तीति यथास्य संशयस्तथा यदन्तस्य च निर्गुणाद्गतैः ॥
तद्भ्रूशरासाद्धि कटाक्षमार्गणैर्विद्धा न चाद्धा यतयो नमोऽस्तु वः ॥४०॥

धन्या हि संन्यासिन एव यद्दृढवर्माण एतैरसुरैर्न विद्धाः ॥
विद्धा हरीशाजमुखाः किलैतैः पुनर्मृतप्रायनृणां कथा का ॥ ४१ ॥

तस्मान्न चास्मात्प्रपदाच्छरण्यान्न कायनं नास्य शरण्यमीश ॥
नियोजयानेन पदा सदा मां तवान्तिकस्थेन सुदुर्लभेन ॥ ४२ ॥

कृष्णावेणीककुद्मत्यः प्रपंचोपशमान्तिके ॥
अखण्डैकरसा ऐक्यात्परात्मानात्मवच्छिवाः ॥ ४३ ॥

यज्ञाङ्ग आगमस्तत्र सदा सेव्यो द्विजातिभिः ॥
अन्तरप्राकृतैः पूर्णो बहिश्च प्राकृतैः फलैः ॥ ४४ ॥

सेव्योयमागमो नित्यमर्थहीनैर्द्विजातिभिः ॥
सार्थैस्तु ब्राह्मणैः सेव्यं तद्विष्णोः परमं पदम् ॥ ४५ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीमन्नृसिंहवाटिकाक्षेत्रवर्णनं संपूर्णम् ॥

---

## ७६ सप्तपुरीस्तोत्रम् ॥

स्या अ योध्ये रामपाद सु पु नीतेऽमृतत्वदा ॥
भू यो मास्तु ममावृत्तिः पु री षु सरयूवृते ॥ १ ॥
आ ध्या नान्मथुरे ते मे स द्वा सोऽस्तु निरंतरम् ॥
रा म कृष्णांघ्रिसंपूते व र दे यमुनावृते ॥ २ ॥
पृ थु मार्ग प्रदा माये भ व भागीरथीवृते ॥
व रा सि त्वां हरिद्वारं सु ती र्थं प्रवदंति हि ॥ ३ ॥
म मा घं हर काशि त्व मुच् चै स्समणिकर्णिके ॥
भू या न्न मे पुनर्जन्म भ व पादांचिते भवे ॥ ४ ॥
सा का ञ्चीनगरी मह्य त्रा स हा शिवविष्णुपूः ॥
आ शीः प्रदाय मां कृत्वा लु प्ते नसमवत्त्वियम् ॥ ५ ॥
लो कां तरानपेक्षं मां म ता कालेश्वरादृता ॥
ना ची र्णतपसं पातु मां मो हात्क्षिप्रयादृता ॥ ६ ॥

स्वा अ नंताश्रये मेद्य मो क्ष दा सिंधुतीरगे ॥
त्वं वं द्यास्यखिलैः सर्व प्र दा द्वारवतीश्वरि ॥ ७ ॥
य ति राड्राजधान्याद्यं न य कृष्णातटस्थिते ॥
लो का मात्माख्यमाहुस्त्वां लो का नृसिंहवाटिकां ॥ ८ ॥
कर्मभिर्नृत्यंति नरस्तत्सि मायाख्यबंधनम् ॥
हंति यस्तद्वाटिकेयं सर्वेषां हितदा सदा ॥ ९ ॥

इति श्री. प. प. वासुदेवानंदसरस्वतीविरचितं
नृसिंहवाटिकान्वितसप्तपुरीस्तोत्रं संपूर्णम् ॥

---

## ७७ वेदगंगास्तुतिः

वेदगंगे नमस्ते मे वेदगंगे भवत्यघम् ।
हर तत्वं विधिश्रीशहरतत्वं प्रकाशय ॥ १ ॥

---

## ७८ हिरण्यकेशीस्तुतिः

हिरण्यकेशाः कमपाश्यमेद्य हिरण्यकेश्या यदचोक्ततत्वम् ।
आदित्यवर्णं तदवेक्षणार्हमादित्यवन्मां विदधातु शुद्धम् ॥ १ ॥

---

## ७९ मलापहास्तुतिः

मलापहा महासिंधुः सर्वजन्ममलापहा
हरतु त्रिविधं पापं तापं च त्रिविधं मम ॥ १ ॥

---

## ८० घटप्रभास्तुतिः

घटप्रभांबु मे कुर्यात् सद्यो हेमघटप्रभाम् ।
उपलब्धि यतो भूम्न उपलब्धिर्भविष्यति ॥ १ ॥

## ८१ विश्वामित्रिस्तुतिः

विश्वामित्र्याः करोत्वंभो विश्वामित्र्या ऋचोहिताम् ।
प्रचोदनां सति दृढां हित्वा कर्मप्रचोदनाम् ॥ १ ॥

---

## ८२ तुंगभद्रास्तुतिः

भद्रया राजते वीच्या तुंगया सह भद्रया ।
तुंगभद्रा धुनी सा मां तुंगभद्राश्रयं क्रियात् ॥ १ ॥

---

## ८३ बाहुदानदीस्तुतिः

सदानीरा लघुतला सदा नीरागकज्जला ।
बाहुदाख्यावतु मुनिबाहुदास्मानियं धुनी ॥ १ ॥

---

## ८४ करतोयानदीस्तुतिः

प्रायशो वहति या करतो या शुष्यतीह न जलाकरतोया ।
पावनी बहुसुखाकरतोया पातु साघनिचयात्करतोया ॥ १ ॥

करतोये सदातोये बहुशोऽये पुराभये ।
दोषा मे ये कृतास्तेषां सर्वेषां त्वं भवान्तकृत् ॥ २ ॥

यया छिन्नो बाहुर्ऋषय इह दत्तो हि दयया
नदी सेयं मायामयभयलया नित्यविजया ।
अपायान्मां पायात् सततनिरपायामृतपया
सदातोया पेया जगति करतोयाघविलया ॥ ३ ॥

---

## ८५ भार्गवीभार्गवक्षेत्रस्तुतिः

भार्गवीबाहुदायोगे भार्गवं क्षेत्रमुत्तमम् ।
वरीवर्ति क्षितौ यत्र तत्रेश्वरगदाधरौ ॥ १ ॥

परिपिपालयिषुर्जगतः स्थितिं महति यत्र तु शेषधरे स्थितिम् ।
हरिरजो व्यकरोत्तत आहृता सरिदसौ भृगुणाप्यघभीहृता ॥ २ ॥

स्वमातृहत्याकलुषाश्रयाशदन्दह्यमानो भृगुनन्दनोऽभूत् ।
रामः प्रशांतोलघयिष्यतात्र भुवो भगं तेन बलं च लब्धम् ॥ ३ ॥

प्रविष्टमात्रस्य नरस्य तीर्थं दन्दह्यमानानि महान्त्यघानि ।
प्रयान्ति नाशं जगतीह वन्द्यं श्रीभार्गवक्षेत्रमिहानवद्यम् ॥ ४ ॥

---

## ८६ वेंकटेश्वरस्तुतिः

वें ह्यव्ययं पापवाच्यमेतत्कटति वेंकटः ।
कटतेर्नाशनार्थत्वात्पापहा वेंकटेश्वरः ॥ १ ॥

परिपिपालयिषुर्जगतः स्थितिं य उ चकार ह शेषधरे स्थितिम् ।
द्रुतविलंबितगन मया क्षितौ स खलु वेंकट ईश्वर ईक्षितः ॥ २ ॥

---

## ८७ कालहस्तीश्वरस्तुतिः

जंबुद्वीपे भारताख्येत्र वर्षे हर्षेणास्थाद्याम्यभागे व्यमर्षे ।
प्रत्यक्षश्रीकालहस्तीशसंज्ञः शंभुर्यत्रागोपि कैलाससंज्ञः ॥ १ ॥

सुवर्णमुख्यासरतोविदूरे प्रासाद आस्ते सति याम्यतीरे ।
नगोपि तद्दक्षिणतोस्त्यदूरे यस्मिन्निवासोस्ति सदा स्मरारेः ॥ २ ॥

यथा गौरीश ते धाम क्ष्माधरे शिव राजते ।
राजते तद्वदत्रापि राजते देवराज ते ॥ ३ ॥

कैलासशैलादवतीर्य भक्तिप्रियो हरोऽस्थात्सगणः सशक्तिः।
यः कालहस्तीन्द्रहरिः स पायाच्छ्रीकालहस्तीश्वर आश्वपायात् ॥४॥

यत्क्षेत्रदृष्ट्यापि नरस्य ताताः सद्यो विनश्यंत्यखिलाः सपापाः।
दुर्दैवदैन्याद्यखिलं प्रकामं निवार्य यः पूरयति स्वकामम् ॥ ५ ॥

---

## ८८ शिवविष्णुकांचीस्तुतिः

कांचीपुरीमहं मन्ये कांचिदेकां विभोः कलाम्।
विकला अपि यद्योगा सकलात्मत्वभाजनम् ॥ १ ॥

कांची यथा हि वस्त्रोर्ध्वं युवते राजते कटौ।
कांची तथाब्धिवस्त्राया वस्त्रप्रान्ते विराजते ॥ २ ॥

पंचमी मुक्तिपुर्येषा पंचमी योगभूरिव।
पंचता तस्य न पुनः पंचतात्रास्य जन्मिनः ॥ ३ ॥

शिवविष्णुपुरी कांची कांश्चिच्चित्तां हरेन्न किम्।
न किंचिदपि यद्दृष्ट्या पापं तिष्ठति देहिनाम् ॥ ४ ॥

वाराणसी ह्युदक्काशी पापराशीविनाशिनी।
तथा दक्षिणकाशीयं मुक्तिद्वारमपावृता ॥ ५ ॥

अतिवेगवतीयमत्राच्यां वेगवती सरिदत्र हि कांच्याम्।
सतिवेगवती गुरुगीता वेगवतीं भिदमात्मनि कुर्यात् ॥ ६ ॥

एकाम्रकेशाभिधभूमिलिंगं कामाभ्यभीष्टार्थदमात्मलिंगम्।
सपद्यविद्यावरणं निरस्य प्रदर्शय त्वात्मनि मे चिरस्य ॥ ७ ॥

वरदराजवराचितदुर्हृदं वरदराजमुपाश्रितसध्दृदम्।
वरदरारिकरं प्रणमाम्यजं वरदरान्तकरं तमधोक्षजम् ॥ ८ ॥

परिहृतविनतार्तिर्वारितस्वीयजूर्तिर्भुवनरुचिरमूर्तिर्भक्तकामप्रपूर्तिः।
जयति वरदराजो भक्तचित्तानुवर्ती निजभजकपतिर्दिङ्मालिनी
यस्य कीर्तिः ॥ ९ ॥

## ८९ पक्षितीर्थस्तुतिः

यत्र शंखाभिधं तीर्थं यत्र वेदगिरिर्महान् ।
भक्तवत्सल ईशश्च पक्षितीर्थं तदुत्तमम् ॥ १ ॥

विधेः सुतौ शंभुशापाद्विधेः कंकत्वमेत्यसौ ।
भक्तदत्तं गृण्हतोंभो भक्तमन्वहमत्र हि ॥ २ ॥

प्रांशुवेदगिरेः शीर्ष्णं निषेव्य ब्रह्मचर्यतः ।
शिवमात्मानमिव यः पश्येत्स गतिमाप्नुयात् ॥ ३ ॥

---

## ९० पिनाकिनीस्तुतिः

कांच्यामवाच्यामघहृद्धुनी यास्ति पयस्विनी ।
वाराही दक्षिणा चापि पुनात्वस्मान् पिनाकिनी ॥ १ ॥

---

## ९१ अरुणाचलस्तुतिः

काश्यां मुक्तिर्मरणादरुणाख्यस्याचलस्य तु स्मरणात् ।
अरुणाचलेशसंज्ञं तेजोलिंगं स्मरेत्तदामरणात् ॥ २ ॥

---

## पिनाकिनीस्तुतिः

द्विधेह संभूय धुनी पिनाकिनी द्विधेव रौद्री हि तनुः पिनाकिनी ।
द्विधा तनोरुत्तरतोपि चैको यस्याः प्रवाहः प्रववाह लोकः ॥ ३ ॥

प्रावोत्तरा तत्र पिनाकिनी या स्वतीरगान् संवसथान्पुनाती ।
अस्याः परो दक्षिणतः प्रवाहो नानानदीयुक् प्रववाह सेयम् ॥४॥

लोकस्तुता याम्यपिनाकिनीति स्वयं हि या सागरमाविवेश ।
मनाक् साधनार्तिं विना पापहंत्री पुनानापि नानाजनाद्याधिहंत्री ।
अनायासतो या पिनाक्याप्तिदात्री पुनात्वंहसो नः
पिनाकिन्यवित्री ॥ ५ ॥

अरुणाचलतः कांच्या अपि दक्षिणदिक्स्थिता ।
चिदम्बरस्य कावेर्या अप्युदग्या पुनातु माम् ॥ ६ ॥

याधिमासवशाद्वैत्र्यां कृतक्षौरस्य मेऽल्पका ।
स्नापनाय क्षणाद्वृद्धा सा ह्यासेव्या पिनाकिनी ॥ ७ ॥

## ९२ चिदम्बरस्तुतिः

चिदम्बरस्य चिन्ता नो जाड्यं हित्वा व्यदर्शयत् ।
सर्वव्यापकतां तच्च चिन्तनीयं चिदम्बरम् ॥ १ ॥

उदयास्तमया भावा सती चित्स्वप्रभाद्वया ।
अम्बराभा सुखा तच्च चिन्तनीयं चिदम्बरम् ॥ २ ॥

सुखं नित्यं निरुत्कर्षं भूमैव निरुपाधिकम् ।
स्वरूपमेव यत्तच्च चिन्तनीयं चिदम्बरम् ॥ ३ ॥

पायादम्बरलिङ्गं नो यच्चिदम्बरनामकम् ।
शेषशायिप्रभृतिपुंदोषहारिसुरावृतम् ॥ ४ ॥

## ९३ कावेरीस्तुतिः

कावेरी निम्नगा वारिलहरीपापहारिणी ।
तारिणी पापिनामेनां भजेहं पापहारिणीम् ॥ १ ॥

स्वसा कृष्णानद्यास्त्रिजगदनवद्यामितगुणा
स्वसाराद्यावद्यामखिलमलनद्यामतिघना ।
नृणां गोप्ड्याच्छाद्य दरमसृतपद्यां हितकरीं
व्यधात्सा कावेरी सरिदवतु नः पुण्यलहरी ॥ २ ॥

उदीचीस्था गंगा पृथुतरतरंगातिकपटा
भटान्याम्यानुच्चैर्दरकरगिरा या जयति हि ।
इयं कावेरी तु प्रसभमपि तानंतिकगता-
न्निवर्त्य स्वर्लोकं नयति निजलोकं श्रुतिमता ॥ ३ ॥

अतो जल्पं जल्पं सरिदमृतकल्पं तव यश-
स्तटे भ्रामं भ्रामं तव खलु निकामं शुचि यशः ।
मुदा मज्जं मज्जं तव पयसि जन्माद्यकहरं
सदा स्मारं स्मारं तव भवहमाहात्म्यमवरम् ॥ ४ ॥

अये कावेरि त्वत्तटसमटनादेवमनिशं
नयेत्कालं मेलं तव किल जलं पुण्यधुनि शम् ।
तटे श्वेतारण्यप्रभृतिवरकाशीसदृशषण्-
महाक्षेत्राण्यन्यान्यपि तव जयंत्याधिविलये ॥ ५ ॥

कावेरि सिन्धो ननु दीनबन्धो कारुण्यसिन्धो भवघोरसिन्धोः ।
मां तारय त्वं पतितोमतस्ते तत्राप्यपेक्षार्हाति साध्विनस्ते ॥ ६ ॥

पतितोद्धरणाय साध्वि चेदवतारस्तव भूतले न चेत् ।
पतितं हि समुद्धरिष्यसि स्वजनुस्त्वं विफलं करिष्यसि ॥ ७ ॥

कृच्छ्रादिकव्रतमिहाचरणीयमग्रे
नेष्येथ सद्गतिमितीच्छसि चेत्त्वदग्रे ।
वच्मि प्रसह्य खलु सह्यसुते पुनासि
त्वं सह्य इत्यृषिवचो विमतं करोषि ॥ ८ ॥

दीक्षा गृहीताजगरी गरीयसी यद्बोधासि श्रीगुरुणारुणाभसा ।
कायाधवायापि मुदार्पितास्तुवन् कावेरिकां तां खलु वासुदेवः ॥९॥

---

# वेदान्तस्तोत्राणि

## ९४ वेदांतपररामायणम्

दशेंद्रियरथो देही राजा दशरथः स्मृतः ।
कौसल्या तत्प्रिया बुद्धी रामस्तत्रोद्भतः परः ॥ १ ॥
वृत्वा सीतां स्वानुभूतिं सुखमास्तेऽथ दैवतः ।
संसारविपिनं प्रापाहंकारो रावणाभिधः ॥ २ ॥
राजसः स्वानुभूतिं तां सीतां यत्नाज्जहार ह ।
रामः परात्मापि ततः स्वानुभूतिवियोगतः ॥ ३ ॥
प्राप्तो दीनदशां दुःखी शुशोच विरहातुरः ।
परिभ्रमन्हनुमता विवेकेन च संगतः ॥ ४ ॥
तेन सीतास्वानुभूतिस्थितिवार्ता प्रदर्शिता ।
ततो वानरसद्वृत्तिसैन्येन च हनूमता ॥ ५ ॥
सेतुं बध्वा स जलधौ साधनाश्मभिरुत्कटैः ।
ततो भवाब्धिमुल्लंघ्य दीप्तज्ञानाग्निना भृशं ॥ ६ ॥
सूक्ष्मदेहाख्यलंकां च दग्ध्वौपनिषदस्ततः ॥
कामक्रोधादिरक्षांसि हत्वा युद्धे सहस्रशः ॥ ७ ॥
सात्विकाहंकारबिभीषणसाहाय्यतस्ततः ।
कुंभकर्णं तामसाहंकारं राजसमप्यथ ॥ ८ ॥
निहत्य रावणं स्वानुभूतिं सीतां प्रगृह्य च ।
रामः स्वरूपसाम्राज्येऽभिषिक्तोऽरीरमत्तया ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
वेदांतपररामायणं संपूर्णम् ॥

---

## ९५ वेदांतपरभागवतम्

वसुदेवः शुद्धसत्त्वं तद्वृत्तिर्देवकी मता ॥
कृष्ण आत्मागतस्तत्र पितृबन्धविमोचकः ॥ १ ॥
गोकुलं प्रापितोऽथापि दैवात्पित्रेन्द्रियाभिधम् ।
सवृत्तिसात्विकात्माख्ययशोदानन्दतातभाक् ॥ २ ॥
दुर्वासनापूतनाघ्नो रेमे गोप्याख्यवृत्तिभिः ॥
विलीय तत्सञ्चितगोरसाद्गोगोपपालकः ॥ ३ ॥
नानाकौतुककृद्दुर्हृद्गुप्तिवृन्दावने स्थितः ॥
गोप्याशापूरकोऽविद्यानिशायां चित्ररासकृत् ॥ ४ ॥
गोप्योर्द्वयोर्द्वयोर्मध्ये वशस्तदनुरूपवत् ॥
रेमे दैवात्तद्वियुक्तो दुर्हृत्प्राक्पितृसंगतः ॥ ५ ॥
भवाब्धिमध्ये देहाख्यां कृत्वा द्वारवतीं पुरीं ॥
सोऽनुप्रविष्टस्तां वृत्त्याख्या विविधाः स्त्रियः ॥ ६ ॥
सर्वाः पतिव्रताः कान्तं मेनिरे तं वशीकृतम् ॥
आत्मारामोऽप्यसङ्गोऽपि ततो दीन इवाबभौ ॥ ७ ॥
षोडशस्त्री सहस्रेशः संसारं समवर्धयत् ॥
परोपदेशकृत्पञ्चप्राणपाण्डवपालकः ॥ ८ ॥
वशीकृत्य ब्रह्मशापं विनाश्य स्वजनान् क्षणात् ॥
पुरीं द्वारवतीं चापि कृष्ण एकस्ततः स्वयम् ॥ ९ ॥
हृतपाण्डवसारोगाद्वैकुण्ठं पूर्वधाम तत् ॥
भक्तः सुभक्त्या भगवत्संबन्धीदं सदा पठेत् ॥ १० ॥
भवार्तिहृद् भागवतं स नूनं भवभर्जकः ॥

---

## ९६ वेदांतपरत्रिवेणी ॥

इंद्रियाणां जडानां च विषयाणां च तादृशां ॥
वैरस्यं ज्ञानपूर्वं यद्विरक्तिः सा प्रकीर्तिता ॥ १ ॥

जडौघान्नश्वराद्दृश्याद्बुद्धिवृत्तिं निवर्त्य च ॥
चैतन्यप्रवणा कार्या भक्तिः सा परिकीर्तिता ॥ २ ॥

सर्वांतरोऽस्मि घनचित्प्रकाशात्मेति या मतिः ॥
महावाक्यविचारोक्ता सात्मज्ञप्तिः प्रकीर्तिता ॥ ३ ॥

एता हि यमुनागंगासरस्वत्योत्र संगताः ॥
त्रिवेणी सैव तत्रैव स्नानाद्रागाद्यघक्षयः ॥ ४ ॥

गुणत्रिवेणीस्नानं धीस्त्रियः कुर्यात्पुमानिह ॥
पातकेच्छोद्भवो नात्र पुनरन्यत्र तूद्भवः ॥ ५ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
वेदान्तत्रिवेणी संपूर्णा ॥

---

## ९७ मानसपूजा

### अथ प्रबोधः

अजितामृत योगनिद्रिताच्युतशक्तेः स्वकृतातिमोहित
शुमुखे श्रुतिबन्दिगीततो भगवञ्जागृहि जागृहि त्यधीट् ॥ १ ॥

### अथ ध्यानम्

यतोऽस्य जननाद्यजः स्ववशमाय आद्यो विभुः ।
स्वराट् सकलविद्गुरुः स सुखसच्चिदात्मा प्रभुः ॥
असंसृतिररूप उज्झितमलोऽमुमैक्याप्तये
निवर्त्य नयनं निषेधविधिवाक्यतश्चिन्तये ॥ २ ॥

अथावाहनम्

कार्येक्षमान्वीक्ष्य पृथग्युतान्वा योऽनुप्रविश्यापि विभुर्निजांशात् ।
निन्ये प्रभुत्वं हि महन्मुखांस्तमुपाह्वये त्रीशमनन्यचित्तः ॥ ३ ॥

अथासनम्

अनेजज्जवीयो हृदोऽप्याप्तुवन्नो सुराः पूर्वमर्शत्पराञ्चोऽपि तिष्ठत् ।
परान्धावतोऽत्येति यद्ध्यासनं ते त्र्यधीशार्पितं चित्तमस्तान्यवृत्ति॥४॥

अथ पाद्यम्

राहोः शीर्षवदौपचारिकभिदा विष्णो पदं त्रीश ते
प्रत्यक्तत्त्व निसर्गशुद्धमपि सन्मायांशतोऽशुद्धवत् ॥
भातं मूढधिया तदर्थममलं ज्ञानामृतं यत्नतो
धीपात्रेऽत्र हिरण्मये विनिहितं पाद्यं गृहाणात्मभ ॥ ५ ॥

अथार्घ्यम्

देवाचार्यप्रसादप्रजनितसुरसंपत्तिसद्रत्नजात-
श्रेण्याढ्ये मञ्जुलेऽस्मिन्नतितरविमले भाजने वै विशाले ॥
चेतःसंज्ञेऽविलोले धृतभजनजलाद्वेष्टृताद्यर्थजाले
स्वर्घ्यं संपादितं ते त्र्यधिप परम भोः स्वीकुरुष्वाप्तकाम ॥ ६ ॥

अथाचमनम्

विधिवच्छ्रवणादि यत्कृतं ते त्र्यधिपाभव मे प्रसीद शंभो ॥
द्विविधावरणाम्बु तेऽर्पितं सत्कृपयाऽऽचमनं कुरुष्व तेन ॥ ७ ॥

अथ स्नानम्

प्रवचनादिसुदुर्लभताश्रुतेस्त्र्यधिपते त इह श्रुतिविश्रुते ॥
परमभक्तिसुशीतलसज्जलं वपुषि सिक्तमथाऽऽप्लुतयेऽस्त्वलम् ॥ ८ ॥

अथ वस्त्रम्

यत्किञ्चिज्जगति त्रीश तत्त्वया वास्यमीश ते ॥
वस्त्रत्वेनार्पितं तेन परानन्दार्हतास्तु मे ॥ ९ ॥

अथ यज्ञसूत्रम्

यद्ब्रह्मसूत्रं त्रिवृतं पवित्रं कृत्वा समन्त्रं त्रिपस स्वतन्त्रम् ॥
दत्तं सुमित्रं भज तेन चात्र सत्रं सुपात्रं कुरु मान्यतन्त्रम् ॥ १० ॥

अथ चंदनम्

आल्हादनं चन्दनमुच्यते तत्सत्यतरूपं न ततः परं ते ॥
प्रेष्ठं त्र्यधीशगुण तेन नूनमालेपनं ते प्रकरोमि भक्त्या ॥ ११ ॥

अथ पुष्पम्

भगवन्त्र्यधिप प्रददामि मुदे सुमनः सुमनः सकलार्थविदे ॥
खलु तुभ्यममूल्यमघौघभिदे सुमनः सुमनस्कमनन्यहृदे ॥ १२ ॥

अथ धूपः

योगानलेऽत्र बलदर्पपरिग्रहाहं-
काराभिलाषममताप्रतिघांश्च दग्ध्वा ॥
धूपोऽयमुत्तमतमोऽर्पित आर्य शान्ति-
द्वारा त्र्यधीश पदपर्यवसाय्यसौ ते ॥ १३ ॥

अथ दीपः

सोऽहंभावप्रोज्ज्वलज्ज्ञानदीपो मूलाज्ञानध्वान्तसंपातहृत्यै ॥
स्थेयान्भास्वाँन्भाश्वतश्रीश तुभ्यं स्वात्मज्योतिर्दत्त एवं गृहाण ॥ १४ ॥

अथ नैवेद्यः

यस्य ब्रह्मक्षत्रे मित्रे ग्रासो मृत्युर्लेह्यं पेयम् ॥
कान्वेष्टव्यं तस्मै कस्मै नैवेद्यार्थं दत्तं द्वैतम् ॥ १५ ॥

अथ तांबूलः

श्रीश तेऽद्य परभक्तिवीटिका पंचमैकपुरुषार्थसाधिका ॥
निर्विकल्पकसमाधितः पुरा रञ्जिकास्तु भवभञ्जिका वरा ॥ १६ ॥

अथ प्रदक्षिणा

त्वं त्रीशाहमहं त्वमित्यवगतेः स्थेम्ने निदिध्यासना-
त्मानस्ते परिदक्षिणा हि विहिता यद्यच्च मे क्रीडितम् ॥
तद्ब्रह्मास्तु चिदन्वये क्षितुरथोत्वानुस्मरन्व्याहरे
तारं तारकमेकमात्मनि यथा शार्दूलविक्रीडितम् ॥ १७ ॥

अथ नमस्कारः

असकृदभिहिता तेनेकजन्माप्तपुण्यैः प्रणतिविततिरेषाद्वैतशेषाविशेषा ॥
त्वयि विनिहितमेतन्मे ज्ञ सर्वं स्वकीयं त्र्यधिप जयतु पूजा त्वद्यशो-
मालिनीयम् ॥ १८ ॥

अथ क्षमापनम्

यन्मे न्यूनं संमतं स्थूलदृष्ट्या भूमन्तेनुक्रोशपीयूषवृष्ट्या ॥
नित्यं प्रेयः स्वप्रभं शालिनीयं तस्याभूत्संपूर्णताशालिनीयम् ॥ १९ ॥
रोधनं ह्यात्मनः शोधनं चात्मनः पूजनं त्र्यात्मनो भोजनं स्वात्मनः ॥
यत्र सैषात्मपूजास्तु कण्ठे सतां स्रग्विणी मापरा स्त्रीव कंठेऽसताम् ॥ २० ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
आत्मपूजा संपूर्णा ॥

---

## ९८ ब्रह्मसूत्रम्

चित्तूलजातं यदु चित्तवृत्तं त्रिवृत्कृतं येन च भूतजातम् ॥
यत्पूर्वजातं यदु नैव जातं तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ १ ॥

त्रिलोकसूत्रं खलु यत्सुमंत्रं त्रिवृत्तगात्रं नवदेवमात्रम् ॥
यद्वै त्रिमात्रं यदनन्तमात्रं तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ २ ॥

प्रजापतेर्यत्खलु पूर्वजातं यज्ञोपवीतं सहजातमाक्तम् ॥
सत्वेन मुक्तं त्रिगुणेन शक्तं तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ३ ॥
दक्षोध्दृतं चेद्यदु विश्वमूलं सदा पवित्रं प्रकरोति सूत्रम् ॥
एनोलवित्रं भजतैकपात्रं तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ४ ॥
यद्ब्रह्मसूत्रं यदु वस्तुतंत्रं यतः स्वतन्त्रं परतन्त्रयन्त्रम् ॥
तमाहुरत्रेः परमं सुपुत्रं तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ५ ॥
यमत्रिपुत्रं ब्रुवते पवित्रमसाध्वमित्रं किल साधुमित्रम् ॥
अतीव चित्रं सुविचित्रगात्रं तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ६ ॥
अनन्यया सूत्रमिदं पवित्रं भक्त्या धृतं चेत्सुविशुद्धगात्रम् ॥
भवेत्पवित्रात्स पवित्र एव तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ७ ॥
स ब्राह्मणो यो मनसा बिभर्ति यद्वा नरो यो वचसा बिभर्ति॥
यद्वाप्यदंभः श्रवसा बिभर्ति तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥८॥
द्विजोऽपि चेद्येन विवर्जितः स चण्डाल एवास्य च धारणेन ॥
सद्ब्राह्मणत्वं खलु हीनजातेस्तद्ब्रह्मसूत्रं द्विज धेह्यजातम् ॥ ९ ॥
नवसूत्रमहोरात्रं योत्रिपुत्रमयं द्विजः ॥
ब्रह्मसूत्रमिदं धत्ते स यातीह पवित्रताम् ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतिविरचितं
ब्रह्मसूत्रं संपूर्णम् ॥

---

## ९९ षट्पञ्चाशिका

आत्मा सच्चित्सुखो दत्तो रक्तोष्णाकाशदीपवत् ॥
मायाब्धिनौर्दृढाऽसंगा तद्भक्तिर्न तथा प्लवः ॥ १ ॥
भवाध्वतापश्रान्तस्य सीतारामः समाश्रयः ॥
यथाध्वतापश्रान्तस्य शीतारामः समाश्रयः ॥ २ ॥

भवांबुधिनिमग्नस्य तारिणी भगवत्कथा ॥
यथांबुधिनिमग्नस्य तरणिर्विधिचोदिता ॥ ३ ॥

भवतापाभितप्तस्य शरणं न गुरोः परम् ॥
दवतापाभितप्तस्य शरणं न घनात्परम् ॥ ४ ॥

रोचते सुविरक्तस्य न सांसारिकपुंकथा ॥
यथा पित्तज्वरार्तस्य सुरसान्नादिसत्कथा ॥ ५ ॥

शृणोति सर्वं संन्यस्य श्रुतिवार्तां स आदरात् ।
परव्यसनिनी नारी जारवार्तां यथाऽऽदरात् ॥ ६ ॥

कथंचन त्यजेन्नैव विवेकी शान्तिगेहिनीम् ॥
यथा कामाग्निसंतप्तोऽविवेकी कान्तगेहिनीम् ॥ ७ ॥

मुक्तिर्न सुलभाऽध्यासभातनानात्वदर्शिनः ॥
आदर्शबिंबितानेकद्वारदर्शिशिशोरिव ॥ ८ ॥

धीमाञ्छमादिसंपन्नः सद्गुरूक्त्या लभेत्पदम् ॥
चोरैस्त्यक्तो वने यद्वत्तदभिज्ञगिरा नरः ॥ ९ ॥

भवान्भूमेत्यकर्तात्मत्वं व्रजेत्सद्गुरोर्गिरा ॥
भिल्लपालितराट्पुत्र आप्तोक्त्या राजतामिव ॥ १० ॥

कूटस्थसच्चिदानन्दतनोर्बन्धविमोचने ॥
पुत्रस्य जातिवन्ध्याया इव जन्मोत्सवात्ययौ ॥ ११ ॥

वाचारंभणमात्रं चित्तनौ विश्वं न चापरम् ॥
वस्त्वन्तरं यथा ध्वान्ते रज्जौ सर्पविसर्पणम् ॥ १२ ॥

विषयग्रहणेच्छा तु स्वात्मविज्ञानतः पुरा ॥
अज्ञस्य शुक्तिविज्ञानात्पुरेव रजतस्पृहा ॥ १३ ॥

भ्रममात्रमसद्विश्वं ज्ञातं चेत्तेन कः सुखी ॥
को नाम शुक्तिरौप्येण जातो धनसमृद्धिमान् ॥ १४ ॥

जगदस्तित्ववादो न स्वात्मज्ञाने प्रकाशिते ॥
ध्वान्ते स्थाणौ पिशाचादिभ्रान्तिर्दीप इवाहते ॥ १५ ॥
आश्चर्यमेतद्विश्वं न पुराद्योर्ध्वं च भाति चेत् ॥
भातु नामेन्द्रजालाभं चिदात्मनि तु मायया ॥ १६ ॥
असच्चेज्ज्ञस्य नेतोपि व्यवहारः क्षणं कुतः ॥
नायं दोषोऽपि जानन्सन्निन्द्रजालं हि वीक्षते ॥ १७ ॥
एकोऽपि सन्नयं भूमा मायया भात्यनेकवत् ॥
पुंसो यथाक्षिदोषेण चन्द्र एको द्वितीयवत् ॥ १८ ॥
आत्मोपाधिवशाद्भाति निश्चलोऽपि हि चञ्चलः ॥
विकारी निर्विकारोऽपि जलोपाधिगतार्कवत् ॥ १९ ॥
नित्यं भ्रमदिवाभाति मायाभ्रमविजृंभितम् ॥
जगच्चक्रं यथाऽलातचक्रं भ्रान्तदृशेरिह ॥ २० ॥
विद्योतते नात्मविद्या यावत्तावच्चिदंबरे ॥
विविधं भाति विश्वं खे गन्धर्वनगरं यथा ॥ २१ ॥
आरोपितजगद्बाध आत्मैकः परिशिष्यते ॥
शत्रून्हत्वाखिलान्युद्धे महावीरो यथैककः ॥२२॥
विक्षेपः शिष्यते मायावरणेऽपि विघातिते ॥
उपादाने विनष्टेपि कार्यं तिष्ठति हि क्षणम् ॥२३॥
समे प्रारब्धभोगेऽपि ज्ञानी क्लिश्यति नाज्ञवत् ॥
समेऽप्यध्वश्रमेऽध्वज्ञो दैन्यं नैति यथाज्ञवत् ॥२४॥
पतत्वद्य युगान्ते वा वपुर्मुक्तस्य चित्तनोः ॥
कुंभे भग्ने स्थिते वा द्योर्हानिलाभौ कुतस्ततः ॥ २५ ॥
सङ्कल्पमात्रं विश्वं सद्भाति मन्दमतेर्यथा ॥
सङ्कल्पमात्रभाता स्त्री सत्या विरहिणो भ्रमात् ॥ २६ ॥

स्वस्वरूपस्थितौ सत्यां दुःखं नैव सुखात्मनि ॥
यथा वास्यादिके त्यक्ते कष्टं त्वष्टरि नैव तत् ॥ २७ ॥
नाध्यात्मिकादिछिन्नोऽपि जात्वेकरसतां विभुः ॥
त्यजत्यात्मा यथा लोके पटतां च्छिन्नितः पटः ॥ २८ ॥
कामं सृजतु कूटस्थे माया विश्वं चिदम्बरे ॥
नास्य लाभो न वा हानिर्वर्षत्यब्दे यथा दिवः ॥ २९ ॥
करणव्यवहारस्तु कूटस्थात्मा न लिप्यते ॥
न लिप्यते यथा कूटो लोहानामपि ताडनैः ॥ ३० ॥
तत्तन्मय इवाभातोऽप्यात्मा कोशेभ्य उत्तरः ॥
तेभ्यो विवेचितः शुद्धः स्फटिको रञ्जितो यथा ॥ ३१ ॥
मुक्तात्मा व्यवहारेऽपि स्थितस्तेन न लिप्यते ॥
असंगत्वात्ततोन्यत्वात्पद्मपत्रमिवांभसा ॥ ३२ ॥
देहादितापतप्तोऽहमिति धीरविवेकिनः ॥
पुत्रदारेषु तप्यत्सु तपामीति मतिर्यथा ॥ ३३ ॥
सच्चिदानंदरूपोऽहमेवं निश्चयवानपि ॥
मर्त्योऽस्मीति कदाचिद्दिग्भ्रमवन्मनुते क्षणम् ॥ ३४ ॥
निराकृत्य त्यजेद्विश्वं सारमास्वाद्य नीरसम् ॥
यथा त्यजति निःसारं फलं स्वादु रसं पिबन् ॥ ३५ ॥
नात्यन्तासन्नमात्मानं मूढः पश्यति दुष्टदृक् ॥
यथा दिवान्ध उदितमर्कं लोकप्रकाशकम् ॥ ३६ ॥
विभात्यज्ञोऽन्यं प्रपञ्चं सुखं चापि बिभेति यः ॥
दीपादितां दृश्यमानां स्वच्छायामिव बालकः ॥३७॥
माया खादिविकारैर्न ब्रह्मान्यथयितुं क्षमा ॥
विमलं खं यथाऽध्यस्तधर्मा मलिनतादयः ॥ ३८ ॥

व्यभिचारिसुषुप्त्यादिदशा बुद्धिगुणोदिताः ॥
बुधे स्वीया न निर्मोका यथा सर्पगुणोदिता ॥३९॥

व्यवहारोऽङ्गसापेक्षः स्वप्नो जाग्रदितीक्षितुः ॥
गृहिणो गेहसापेक्षबाह्यान्तर्व्यवहारवत् ॥ ४० ॥

यस्य निद्रा समाधिर्वा सुखा सर्वोपसंहृतिः ॥
व्यापाराकुलितस्येव सुखा सर्वोपसंहृतिः ॥४१॥

कामं करोतु विधितो मुक्तः कर्तास्य तेन किम् ॥
स्तोकाभ्रच्छादितोऽर्को यो राहुग्रस्तो भवेत्स किम् ॥४२॥

मिथ्याजगत्समुल्लासात्प्रबुद्धस्य कथं भयम् ॥
व्याघ्रादीन्पश्यतः स्वप्नात्प्रबुद्धस्य कथं भयम् ॥४३॥

आदेयात्मनिरीक्षार्थमनात्मधियमुज्वलाम् ॥
यथाऽऽस्यहीनमुकरो मुखसौन्दर्यवीक्षणे ॥४४॥

क्रमेण वर्धमानेऽन्तर्बोधे हार्दतमःक्षयः ॥
कलाभिर्वर्धमानेऽब्जे यथा नैशतमःक्षयः ॥४५॥

प्राज्ञोऽपि बोधितोऽन्तर्हृग्ज्ञानात्यन्यन्न किञ्चन ॥
ग्रासे ग्रासे बोधितोऽपि निद्राण इव बालकः ॥४६॥

स्वानुभूतिरसास्वादे त्रिषया त्रिरसा विदः ॥
यथाऽऽरनालं विरसं परमामृतपायिनः ॥४७॥

पूर्वाभ्याससमाधिं ज्ञो वाञ्छत्याप्ताखिलात्मनः ॥
कालात्ययाय राजेव सुसमृद्धोऽपि देवनम् ॥४८॥

नाऽऽनन्दयति विध्यादि निस्त्रैगुण्याध्वचारिणम् ॥
निर्व्यापारालसनरं देशिका देशिनं यथा ॥४९॥

चिन्तयानोऽपि तत्वं स्वं स्वच्छन्दो न नियम्यते ॥
साम्राज्यगं स्वतन्त्रं च प्रजाभिरिव राट्सुतः ॥५०॥

परमार्थदृशः क्वापि नेष्टानिष्टे शुभाशुभे ॥
वृष्ट्याऽवृष्ट्याप्पूरस्थसस्यवृद्धिक्षयाविव ॥५१॥

श्रुत्याद्यावृत्तियोगाग्न्युज्वलितः पूर्वरूपभाक् ॥
जीव आत्मैव चागन्तुमलदाहे सुवर्णवत् ॥५२॥

कीटभ्रमरदृष्ट्या न चित्रं स्वध्यानतः स्वता ॥
नामरूपोपाध्यपाये सत्यैक्यं सरिदब्धिवत् ॥५३॥

चित्रप्रापञ्चिकैश्वर्यं तत्त्वज्ञं रञ्जयेत्कथम् ॥
हावैः स्त्रीवेषधृक्स्वज्ञहृदुन्मथयतीह किम् ॥५४॥

ज्ञानी क्षीणान्यकर्मापि प्रारब्धं सहतेऽवशी ॥
व्यालग्राही गृहीताहिर्यथा तत्कृतपीडनम् ॥५५॥

प्राप्तकामं स्थितप्रज्ञं स्वयं कामा विशन्ति तैः ॥
शान्तो नोत्सर्पति यथा पूर्णाब्धिरचलांबुभिः ॥५६॥

या षट्पंचाशिका वासुदेवानन्दीयमुद्गता ॥
वानवासीपुरि तया प्रीयतामत्रिनन्दनः ॥५७॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचिता
षट्पञ्चाशिका संपूर्णा ॥

# श्रीदत्तात्रेयस्तोत्राणि

## १०० श्रीदत्तात्रेयाष्टोत्तरशतनामस्तोत्रम् ॥

ॐकारतत्त्वरूपाय दिव्यज्ञानात्मने नमः ॥
नभोतीतमहाधाम्न ऐंद्र्यध्या ओजसे नमः ॥ १ ॥

नष्टमत्सरगम्यायागम्याचारात्मवर्त्मने ॥
मोचितामेध्यकृतये ह्रींबीजश्राणितश्रिये ॥ २ ॥

मोहादिविभ्रमांताय बहुकायधराय च ॥
मत्तदुर्वैभवछेत्रे क्लींबीजवरजापिने ॥ ३ ॥

भवहेतुविनाशाय राजच्छोणाधराय च ॥
गतिप्रकंपितांडाय चारुव्यायतबाहवे ॥ ४ ॥

गतगर्वप्रियायास्तु यमादियतचेतसे ॥
वशिताजातवश्याय मुंडिने अनसूयवे ॥ ५ ॥

वदद्वरेण्यवाग्जालाविस्पृष्टत्रिविधात्मने ।
तपोधनप्रसन्नायेडापतिस्तुतकीर्तये ॥ ६ ॥

तेजोमण्यंतरंगायाद्मरसद्मविहापिने ॥
आंतरस्थानसंस्थायायैश्वर्यश्रौतगीतये ॥ ७ ॥

वातादिभययुग्भावहेतवे हेतुहेतवे ॥
जगदात्मात्मभूताय विद्विषत्षट्कघातिने ॥ ८ ॥

सुरवर्गोद्धृते भूत्या असुरावासभेदिने ॥
नेत्रे च नयनाक्ष्णे चिच्चेतनाय महात्मने ॥ ९ ॥

देवाधिदेवदेवाय वसुधासुरपालिने ॥
याजिनामग्रगण्याय द्रांबीजजपतुष्टये ॥ १० ॥

वासनावनदावाय धूलियुग्देहमालिने ॥
यतिसंन्यासिगतये दत्तात्रेयेतिसंविदे ॥ ११ ॥
यजनास्यभुजेजाय तारकावासगामिने ॥
महाजवास्पृग्रूपायात्ताकाराय विरूपिणे ॥ १२ ॥
नराय धीप्रदीपाय यशस्वियशसे नमः ॥
हारिणे चोज्ज्वलांगायात्रेस्तनूजाय संभवे ॥ १३ ॥
मोचितामरसंघाय धीमतां धीरकाय च ॥
बलिष्ठविप्रलभ्याय यागहोमप्रियाय च ॥ १४ ॥
भजन्महिमविख्यात्रेऽमरारिमहिमच्छिदे ॥
लाभाय मुंडिपूज्याय यमिने हेममालिने ॥ १५ ॥
गतोपाधिव्याधये च हिरण्याहितकांतये ।
यतींद्रचर्यां दधते नरभावौषधाय च ॥ १६ ॥
वरिष्ठयोगिपूज्याय तंतुमंतन्वते नमः ॥
स्वात्मगाथासुतीर्थाय मःश्रिये षट्कराय च ॥ १७ ॥
तेजोमयोत्तमांगाय नोदनानोद्यकर्मणे ॥
हान्याप्तिमृतिविज्ञात्र ॐकारितसुभक्तये ॥ १८ ॥
रुक्शुङ्मनःखेदहृते दर्शनाविषयात्मने ॥
रांकवाततवस्त्राय नरतत्त्वप्रकाशिने ॥ १९ ॥
द्रावितप्रणतपापायात्तस्वजिष्णुःस्वगाश्रयें ॥
राजन्त्यास्यैकरूपाय मःस्थायमसुबंधवे ॥ २० ॥
यतये चोदनातीतप्रचारप्रभवे नमः ॥
मानरोषविहीनाय शिष्यसंसिद्धिकारिणे ॥ २१ ॥
गंत्रे पादविहीनाय चोदनाचोदितात्मने ॥
यवीयसेऽलर्कदुःखवारिणेऽखंडितात्मने ॥ २२ ॥

ह्रींबीजायार्जुनेष्टाय दर्शनादर्शितात्मने ॥
नतिसंतुष्टचित्ताय यतिने ब्रह्मचारिणे ॥ २३ ॥

इत्येष सत्स्तवो वृत्तोयात् कं देयात् प्रजापिने ॥
मस्करीशो मनुस्यूतः परब्रह्मपदप्रदः ॥ २४ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
मंत्रगर्भश्रीदत्तात्रेयाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

---

## १०१ श्रीदत्तात्रेयप्रार्थनास्तोत्रम् ॥

श्रीपाद श्रीवल्लभ त्वं सदैव । श्रीदत्तास्मान्पाहि देवाधिदेव ॥
भावग्राह्य क्लेशहारिन्सुकीर्ते । घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ १ ॥

त्वं नो माता त्वं पिताऽऽप्तोऽधिपस्त्वम् । त्राता योगक्षेमकृत्सद्गुरुस्त्वम् ।
त्वं सर्वस्वं नोऽप्रभो विश्वमूर्ते । घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ २ ॥

पापं तापं व्याधिमाधिं च दैन्यं । भीतिं क्लेशं त्वं हराशु त्वदन्यम् ॥
त्रातारं नो वीक्ष ईशास्तजूर्ते । घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ ३ ॥

नान्यस्त्राता नापि दाता न भर्ता । त्वत्तो देव त्वं शरण्योऽकहर्ता ॥
कुर्वात्रेयानुग्रहं पूर्णराते । घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ ४ ॥

धर्मे प्रीतिं सन्मतिं देवभक्तिं । सत्संगाप्तिं देहि भुक्तिं च मुक्तिम् ॥
भावासक्तिं चाखिलानंदमूर्ते । घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ ५ ॥

श्लोकपंचकमेतद्यो लोकमंगलवर्धनम् ॥
प्रपठेन्नियतो भक्त्या स श्रीदत्तप्रियो भवेत ॥ ६ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तात्रेयप्रार्थनास्तोत्रं संपूर्णम् ॥

---

# १०२ श्रीदत्तात्रेयस्तोत्रम्

दयात्रेयं महात्मानं वरदं भक्तवत्सलं ।
प्रपन्नार्तिहरं वंदे स्मर्तृगामी स माऽवतु ॥ १ ॥

दीनबंधुं कृपासिंधुं सर्वकारणकारणं ।
सर्वरक्षाकरं वंदे स्मर्तृगामी स माऽवतु ॥ २ ॥

शरणागतदीनार्तपरित्राणपरायणं ।
नारायणं विभुं वंदे स्मर्तृगामी स माऽवतु ॥ ३ ॥

सर्वानर्थहरं देवं सर्वमंगलमंगलम् ।
सर्वक्लेशहरं वंदे स्मर्तृगामी स माऽवतु ॥ ४ ॥

शोषणं पापपंकस्य दीपनं ज्ञानतेजसः ।
भक्ताभीष्टप्रदं वंदे स्मर्तृगामी स माऽवतु ॥ ५ ॥

सर्वरोगप्रशमनं सर्वपीडानिवारणम् ।
तापप्रशमनं वंदे स्मर्तृगामी स माऽवतु ॥ ६ ॥

ब्रह्मण्यं धर्मतत्त्वज्ञं भक्तकीर्तिविवर्धनम् ।
आपदुद्धरणं वंदे स्मर्तृगामी स माऽवतु ॥ ७ ॥

जन्मसंसारबंधघ्नं स्वरूपानंददायकम् ।
निःश्रेयसप्रदं वंदे स्मर्तृगामी स माऽवतु ॥ ८ ॥

जयलाभयशःकामदातुर्दत्तस्य यः स्तवम् ।
भोगमोक्षप्रदस्येमं प्रपठेत्स कृती भवेत् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तात्रेयस्तोत्रं संपूर्णम् ॥

## १०३ श्रीदत्तस्तोत्रम्

अनसूयात्रिसंभूत दत्तात्रेय महामते ।
सर्वदेवाधिदेव त्वं मम चित्तं स्थिरीकुरु ॥ १ ॥

शरणागतदीनार्ततारकाऽखिलकारक ।
सर्वचालक देव त्वं मम चित्तं स्थिरीकुरु ॥ २ ॥

सर्वमंगलमांगल्य सर्वाधिव्याधिभेषज ।
सर्वसंकटहारिन् त्वं मम चित्तं स्थिरीकुरु ॥ ३ ॥

स्मर्तृगामी स्वभक्तानां कामदो रिपुनाशनः
भुक्तिमुक्तिप्रदः स त्वं मम चित्तं स्थिरीकुरु ॥ ४ ॥

सर्वपापक्षयकरस्तापदैन्यनिवारणः ।
योऽभीष्टदः प्रभुः स त्वं मम चित्तं स्थिरीकुरु ॥ ५ ॥

य एतत्प्रयतः श्लोकपंचकं प्रपठेत्सुधीः ।
स्थिरचित्तः स भगवत्कृपापात्रं भविष्यति ॥ ६ ॥

इति. श्री. प. प. श्रीवासुदेवानंदसरस्वती विरचितं
श्रीदत्तात्रेयस्तोत्रं संपूर्णम्

---

## १०४ औदुंबर-पादुकास्तोत्रम्

वंदे वाङ्मनसातीतं निर्गुणं सगुणं गुरुम् ।
दत्तमात्रेयमानंदकंदं भक्तेष्टपूरकम् ॥ १ ॥

नमामि सततं दत्तमौदुंबरनिवासिनम् ।
यतींद्ररूपं च सदा निजानंदप्रबोधदम् ॥ २ ॥

कृष्णा यदग्रे भुवनेशानी विद्यानिधिस्तथा ।
औदुंबराः कल्पवृक्षाः सर्वतः सुखदाः सदा ॥ ३ ॥

भक्तवृंदान्दर्शनतः पुरुषार्थचतुष्टयम् ।
ददाति भगवान् भूमा सच्चिदानंदविग्रहः ॥ ४ ॥
जागर्ति गुप्तरूपेण गोप्ता ध्यानसमाधितः ।
ब्रह्मवृंदं ब्रह्मसुखं ददाति समदृष्टितः ॥ ५ ॥
कृष्णा तृष्णाहरा यत्र सुखदा भुवनेश्वरी ॥
यत्र मोक्षदराड्दत्तपादुका तां नमाम्यहम् ॥ ६ ॥
पादुकारूपियतिराण्नरसिंहसरस्वती ।
राजते राजराजश्रीदत्तश्रीपादवल्लभः ॥ ७ ॥
नमामि गुरुमूर्तिं तं तापत्रयहरं हरिम् ।
आनंदमयमात्मानं नवभक्त्या सुखप्रदम् ॥ ८ ॥
करवीरस्थविबुधमूढपुत्रं विनिंदितम् ।
छिन्नजिह्वं बुधं चक्रे तद्वन्मयि कृपां कुरु ॥ ९ ॥

---

## १०५ श्रीपादश्रीवल्लभस्तोत्रम्

ब्राह्मण्यै यो मंक्षु भिक्षान्नतोभूत्प्रीतस्तस्या यः कृपार्द्रः सुतोऽभूत् ॥
विस्मृत्यास्मान् किं स गाढं निदद्रौ श्रीपादद्रौ वापदाहानिदद्रौ ॥१॥
आश्वास्यांबां प्रव्रजन्नप्रजान्यः कृत्वा स्वंगान् संचचारार्यमान्यः ॥
विस्मृत्यास्मान् किं स गाढं निदद्रौ श्रीपादद्रौ वापदाहानिदद्रौ ॥ २ ॥
सार्भा मर्तुं योद्यता स्त्रीस्तु तस्या दुःखं हर्तुं त्वं स्वयं तत्सुतः स्याः ॥
विस्मृत्यास्मान् किं स गाढं निदद्रौ श्रीपादद्रौ वापदाहानिदद्रौ ॥ ३ ॥
राज्यं योऽदादाशु निर्णेजकाय प्रीतो नत्या यः स्वगुप्त्यै नृकायः ॥
विस्मृत्यास्मान् किं स गाढं निदद्रौ श्रीपादद्रौ वापदाहानिदद्रौ ॥ ४ ॥

प्रेतं विप्रं जीवयित्वाऽस्तजूर्तिं यश्चक्रे दिक्‌शालिनीं स्वीयकीर्तिं ॥
विस्मृत्यास्मान् किं स गाढं निदद्रौ श्रीपादद्रौ वापदाहानिदद्रौ ॥ ५ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीपादश्रीवल्लभस्तोत्रं संपूर्णम्

---

## १०६ श्रीनृसिंहसरस्वतीप्रार्थनाष्टकम् ॥

ऋतकृत्स्वगिरोऽमरोऽभवद्द्विजपत्न्यास्तनयोऽपि योभवः ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ १ ॥
प्रणवं प्रपपाठ जन्मतो विजहाराल्पदशोऽपि सन्मतः ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ २ ॥
मृतविप्रसुतं व्यजीवयद्य उ वंध्यामहिषीमदोहयत् ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ३ ॥
स्वतनुं यतये व्यदर्शयद्द्विजगर्वं बुरुडाव्यनाशयत् ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ४ ॥
प्रददौ हि मृतप्रियस्त्रिया अपि सौभाग्यमु यन्नमस्क्रिया ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ५ ॥
स्वमुदेऽभवदन्नवृद्धिकृत्सुवशाया अपि वंशवृद्धिकृत् ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ६ ॥
द्रुरकार्यपि शुष्ककाष्ठतः कुमुरौ येन शुर्ची च कुष्ठतः ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ७ ॥
अमराख्यपुरे च योगिनीवरदो योऽखिलदोस्ति योगिनीः ।
स नृसिंहसरस्वती यतिर्भगवान्मेऽस्ति परा वरा गतिः ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीनृसिंहसरस्वतीप्रार्थनाष्टकं संपूर्णम्

---

## १०७ श्रीदत्तगुरुपंचकम्

सुनीलमणिभासुराहृतसुरातवार्ता सुरा-
सुरावितदुराशयावितनरावराशांबरा ॥
वरादरकरा कराक्षणधरा धरापादरा-
दरारवपरा परा तनुरिमां स्मराम्यादरात् ॥ १ ॥

सदाहृतपदा पदाहृतपदा सदाचारदा
सदानिजहृदास्पदा शुभरदा मुदासंमदा ॥
मदांतकपदा कदापि तव दासदारिद्रहा
वदान्यवरदास्तु मेंतर उदारवीरारिहा ॥ २ ॥

जयाजतनयाभया सदुदया दयार्द्राशया
शयात्तविजयाजया तव तनुस्तया हृत्स्थया ॥
नयादरदया दयाविशदया वियोगोनया
तयाश्रय न मे हृदोस्तु शुभया भया भातया ॥ ३ ॥

चिदात्मय चरुं गुरुं यमृषयोपि चेरुर्गुरुः
स्वशांतिविजितागुरुः समभवत्स पृथ्वीगुरुः ॥
अजं भवरुजं हरंतमुषिजं नरा अत्रिजं
भजंतु तमधोक्षजं सुमनसानसूयात्मजम् ॥ ४ ॥

नमोस्तु गुरवे स्वकल्पतरवेऽत्र सर्वोरवे
रवेरधिरुचे शुचे मलिनभक्तहृत्कारवे ॥
अवेहि तव किंकरं शिरसि धेहि मे शंकरं
करं तव वरं वरं नच परं वृणे शंकरम् ॥ ५ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तगुरुपंचकं संपूर्णम् ॥

---

## १०८ श्रीनृसिंहवाडी-दत्तपादुकाष्टकम् ( वृत्तगर्भम् )

कृष्णावेणीपंचगंगायुतिस्थं श्रीपादं श्रीवल्लभं भक्तहृत्स्थम् ॥
दत्तात्रेयं पादुकारूपिणं तं वंदे विद्यां शालिनीं संगृणंतम् ॥ १ ॥
उपेंद्रवज्रायुधपूर्वदेवैः सपूर्वदेवैर्मुनिभिश्च गीतम् ॥
नृसिंहसंज्ञं निगमागमाद्यं गमागमाद्यंतकरं प्रपद्ये ॥ २ ॥
परिहृतनतजूर्तिः स्वीयकामप्रपूर्तिर्हृतनिजभजकार्तिः सच्चिदानंदमूर्तिः ॥
सदयहृदयवर्ती योगविच्चक्रवर्ती स जयति यतिराड् दिङ्मालिनी यस्य कीर्तिः ॥ ३ ॥

द्रुतविलंबितकर्मविचारणा फलसुसिद्धिरतोऽमरभाग्जनः ॥
अनुभवत्यकमेव तदुध्दतो हरिरिहाविरभूत्पदरूप्यसौ ॥ ४ ॥
विद्युन्मालातुल्या संपत्प्राङ्मध्यांतेऽप्यस्या आपत् ॥
तत्ते धार्यं ज्योतिर्नित्यं ध्याने मेऽस्तु ब्रह्मन्सत्यम् ॥ ५ ॥
त्रिद्वारं तव भवनं बहुप्रदीपं विघ्नेशामरपतियोगिनीमरुज्जैः ॥
जान्हव्यावृतमभितोऽन्नपूर्णया च स्मृत्वा मे भवति मतिः प्रहर्षिणीयम् ॥ ६ ॥

ततिं द्विजानां शिवसोपजातिं पुष्णाति कृष्णात्र विनष्टतृष्णा ॥
अवाक्प्रवाहाऽनुमताशिवाहा या साऽष्टतीर्था स्मृतिमेतु सार्था ॥ ७ ॥
कलौ मलौघांतकरं करंजपुरे वरे जातमकामकामम् ॥
चराचराद्यं भुवनाऽवनार्थं क्षणे क्षणे सज्जनतानतांघ्रिम् ॥ ८ ॥
भुजंगप्रयाताद्गुणोत्थादिवास्माद्भवाद्भीत आगत्य न त्यक्तुमिच्छेत् ॥
नृसिंहस्य वाट्यां प्रभो राजधान्यां स यायात्सुधन्यां गतिं लोकमान्याम् ॥ ९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
दत्तपादुकाष्टकं संपूर्णम् ॥

## १०९ श्रीदत्तात्रेयस्तोत्रम्

दत्तात्रेय त्वां नमामि प्रसीद त्वं सर्वात्मा सर्वकर्ता न वेद ॥
कोप्यंतं ते सर्वदेवाधिदेव ज्ञाताज्ञातान्मेऽपराधान्क्षमस्व ॥ १ ॥
त्वदुद्भवत्त्वात्त्वदधीनधीत्वात्त्वमेव मे वंद्य उपास्य आत्मन् ॥
अथापि मौढ्यात्स्मरणं न ते मे कृतं क्षमस्व प्रियकृन्महात्मन् ॥२॥
भोगापवर्गप्रदमार्तबंधुं कारुण्यसिंधुं परिहाय बंधुम् ॥
हिताय चान्यं परिमार्गयंति हा मादृशो नष्टदृशो विमूढाः ॥ ३ ॥
न मत्समो यद्यपि पापकर्ता न त्वत्समोऽथापि हि पापहर्ता ॥
न मत्समोऽन्यो दयनीय आर्य न त्वत्समः क्वापि दयालुवर्यः ॥४॥
अनाथनाथोऽसि सुदीनबंधुः श्रीशानुकंपामृतपूर्णसिंधुः ॥
त्वत्पादभक्तिं तव दासदास्यं त्वदीयमंत्रार्थदृढैकनिष्ठाम् ॥ ५ ॥
गुरुस्मृतिं निर्मलबुद्धिमाधिव्याधिक्षयं मे विजयं च देहि ॥
इष्टार्थलब्धिं वरलोकवश्यं धनान्नवृद्धिं हयगोसमृद्धिम् ॥ ६ ॥
पुत्रादिलब्धिं म उदारतां च देहीश मे चास्त्वभयं हि शांतिः ॥
अह्याग्निभूभ्यो नम ओषधीभ्यो वाचे नमो वाक्पतये च विष्णवे ॥७॥
शांतास्तु भूर्नः शिवमंतरिक्षं द्यौश्चाभयं मेस्तु दिशः शिवाश्च ॥
आपश्च विद्युत्परिपांतु देवाः शं सर्वतो नोऽभयमस्तु शांतिः ॥८॥

इति श्री. प. प. वासुदेवानंदसरस्वतीविरचितं
दत्तात्रेयस्तोत्रम् ॥

## ११० अद्वैतमालामन्त्रः

वराभयकरं देवं सच्चिदानंदविग्रहं ।
दत्तात्रेयं गुरुं ध्यात्वा मालामंत्रं पठेच्छुचिः ॥ १ ॥

ॐ नमो भगवते दत्तात्रेयाय सच्चिदानंदविग्रहायादृश्यत्वादिगुणकाय नित्यशुद्धबुद्धमुक्तस्वभावायासंगतायेक्षामात्रेण प्रकृतिप्रवर्तकायाजायाऽव्यक्तात्मने भूतेश्वराय सद्धर्मत्राणार्थं योगमायया विष्कृतशुद्धसत्वस्वरूपायाच्युत भवबंधं विमोचय विमोचयाऽपापविद्धासक्ततयाश्रमोचितकर्माणि साधय साधय श्रीमन् साधनसंपदं देहि देहि सद्गुरूत्तम गुरूपसत्त्या श्रवणाद्यभ्यासपूर्वकं भवपदभक्तिं वितर वितराऽऽद्य लयविक्षेपादीन्परिहर परिहर श्रीहरेऽसंभावनादिडाकिनीर्जहि जहि क्लेशकर्मविपाकाशयवर्जिताविद्यादिक्लेशान्नाशय नाशय हृषीकेशार्थदोषदृष्ट्या प्रमार्थीन्द्रियाणि वशीकुरु वशीकुरु सर्वांतर्यामिन् वैराग्याभ्यासवशाच्चंचलं मन आकर्षयाकर्षयासंग रागद्वेषौ विद्वेषय विद्वेषयाऽऽप्तकाम कामादिशत्रूनुच्चाटयोच्चाटय कल्पनातीत दुष्कल्पनाः स्तंभय स्तंभयाऽसुरनिषूदनासुरभावं मारय मारयाऽत्तसुदर्शन व्याधिस्त्यानादियोगोपसर्गाञ्छमय शमय मृत्युंजय प्रमादमृत्युं विद्रावय विद्रावय विमुक्त हृदयग्रंथिं भिंधि भिंधि निःसंशय सर्वसंशयांश्छिंधि छिंधि निर्वासन दुर्वासना वारय वारय क्रियाकारकफलासंस्पृष्ट ज्ञानाग्निना दाह्यकर्माणि दह दह पाशविमोचन पाशांस्त्रोटय त्रोटयाऽऽदित्यवर्णातमस्वरूपप्रदर्शनेन स्वपदेन नियोजय नियोजय जय जय भगवन्ननसूयानंदवर्धनाय दत्तात्रेयाय नमस्ते नमस्ते ५००॥

इति पंचशतार्णं यो दध्यान्मालामनुं गले ।
अर्थं तस्य न मुष्णंति देहस्थेंद्रियतस्कराः ॥ २ ॥

दंभदर्पादयो घोरा ये चाविद्यानिशाचराः ।
ये योगभूचरा ज्ञानभूचराः खेचरा अपि ॥ ३ ॥
अंतरायकरा भूतग्रहाः क्रूरतरा अपि ।
याश्च तृष्णादिराक्षस्यो दुर्भरा भैरवा अपि ॥ ४ ॥
ये च त्रिविधदुःखाख्या वेतालो लोभसंज्ञितः ।
महामोहाभिधो ब्रह्मराक्षसो द्विविधावृती ॥ ५ ॥
शाकिनी डाकिनी चापि लयाद्याश्च पिशाचकाः ।
दूरादेव पलायंते तेपि मालाभृतो द्रुतम् ॥ ६ ॥
धीशुद्धिक्रमतो लभ्या परभक्तिः प्रजापिनः ।
दत्तोंते परमं दद्यात्पदं देवसुदुर्लभम् ॥ ७ ॥

इति श्रीवासुदेवानंदसरस्वतीविरचिता-
द्वैतमालामन्त्रः ॥

---

## १११ अद्वैतं दत्तात्रेयवर्मस्तोत्रम्

ध्यात्वा भक्ताभयकरं समष्टिव्यष्टिचालकम् ॥
दत्तात्रेयं पठेद्वर्म सर्वरक्षाकरं परं ॥ १ ॥
स्वसत्तनुप्रणामे मे प्रणमय्य शिरोऽवतु ॥
व्यर्थात्तिरः पुरःकंपाद् दुर्भराच्च द्युमूर्धकः ॥ २ ॥
स्वपादतुलसीगंधप्रीतिदानेन पातु मे ॥
नासत्यनासिको घ्राणमितरघ्राणतर्पणात् ॥ ३ ॥
नेत्रे स्वसाधुमूर्तीर्मे भास्कराक्षः प्रदर्श्य च ॥
रूपलावण्यसौंदर्यवीक्षणात्परिरक्षतु ॥ ४ ॥
सुश्लोको दिक्श्रुतिः श्रोत्रे श्रावयित्वा स्वकं यशः ॥
श्राव्यं च द्विविधं पातु शब्दात्कर्णकषायदात् ॥ ५ ॥

उच्चारयित्वा मधुरान्स्वगुणान्लोकशोकहान् ॥
जिह्वां पावकवाक्पातु रसास्वाददुरुक्तितः ॥ ६ ॥

स्वाश्रयक्षेत्रतीर्थेषु गमयित्वा पदौ मम ॥
उरुक्रमपदः पातु व्यर्थपर्यटनादकात् ॥ ७ ॥

रजोहरः स्वसत्पादरजस्तीर्थाप्लुतानि मे ॥
कृत्वांगानि हरिः पातु सुस्पर्शालेपनादितः ॥ ८ ॥

चंद्रचेताः स्वमननाल्हाददानेन मे मनः ॥
दुःखदाद्यंतवत्स्पर्शसंकल्पायासतोऽवतु ॥ ९ ॥

चित्तं साक्ष्यनुसंधानं कारयित्वा पुमीश्वरः ॥
मरीचिकोपमद्वैतानुसंधानात्सदावतु ॥ १० ॥

ग्राहयित्वातींद्रियकं बुद्धिं मे निश्चयात्मिकाम् ॥
दुस्तर्कात्पातु जीवात्मा धीव्याप्त्यस्ततमाः स्वभूः ॥११॥

हरो देहेंद्रियप्राणमनोधीभ्यो विलक्षणः ॥
सोहमित्यनुभाव्याहंकारात्पातु दुराग्रहात् ॥ १२ ॥

सर्वाशाभ्यः सदा माव्याद्विष्णुः सर्वात्मकोऽपि च ॥
वर्जितं कवचेनाव्याद्रक्षाहीनं च यत्स्थलं ॥ १३ ॥

यो नह्यादात्मनीदं सन्संनद्धः कवची भवेत् ॥
साम्राज्यसंस्थः कामाद्यरीन् जित्वाद्वैतसंविदि ॥ १४ ॥

संसारदुःखप्रहरं नष्टात्मधनदायकं ॥
त्रिदोषोत्पातशमनं दुर्दग्बाधादिवारणम् ॥ १५ ॥

यस्यांगे वर्म कंठे च माला गीतायुधं करे ॥
जराप्रदर्शितपथं प्रचंडामयसैनिकम् ॥ १६ ॥

प्राप्तं मृत्युरिपुं चाप्यविगणय्य स एव हि ॥
पदाक्रम्य सुखी यायात्प्रसिद्धं ब्रह्मलोककम् ॥ १७ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तात्रेयवर्माख्यकवचं संपूर्णम् ॥

---

## ११२ श्रीदत्तप्रार्थनातारावली

दत्तात्रेय महामाय वेदगेय हतामय ॥
अनसूयाऽत्रितनय ममापायं निवारय ॥ १ ॥

नमो नमस्ते जगदेकनाथ । नमो नमस्ते सुपवित्रगाथ ॥
नमो नमस्ते जगतामधीश । नमो नमस्तेऽस्तु परावरेश ॥ २ ॥

त्वत्तोऽखिलं जातमिदं हि विश्वं । त्वमेव सर्वं परिपासि विश्वं ॥
त्वं शक्तितो धारयसीह विश्वं । त्वमेव भो संहरसीश विश्वम् ॥३॥

त्वं जीवरूपेण हि सर्वविश्वं । प्रविश्य संचेष्टयसे न विश्वं ॥
स्वतंत्रमत्राखिललोकबंधो । कारुण्यसिंधो परबोधसिंधो ॥ ४ ॥

यो ब्रह्मरूपेण सृजत्यशेषं । यो विष्णुरूपेण च पात्यशेषं ॥
यो रुद्ररूपेण च हंत्यशेषं । दुर्गादिरूपैः शमयत्यशेषं ॥ ५ ॥

यो देवतारूपधरोऽत्ति भागं । यो वेदरूपोऽपि बिभर्ति यागं ॥
यो ऽधीशरूपेण ददाति भोगं । यो मौनिरूपेण तनोति योगम् ॥६॥

गायंति यं नित्यमशेषवेदाः । यजंति नित्यं मुनयोऽस्तभेदाः ॥
ब्रह्मादिदेवा अपि यं नमंति । सर्वेऽपि ते लब्धहिता भवंति ॥७॥

यो धर्मसेतून्सुदृढान्बिभर्ति । नैकावतारान्समये बिभर्ति ॥
हत्वाखलान्योऽपि सतो बिभर्ति । यो भक्तकार्यं स्वयमातनोति ॥८॥

स त्वं नूनं देवदेवर्षिगेयो । दत्तात्रेयो भावगम्योऽस्यमेयः ॥
ध्येयः सर्वैर्योगिभिः सर्वमान्यःकोऽन्यस्त्राता तारकोधीश धन्यः॥९॥

सजलजलदनीलो योऽनसूयात्रिबालो
विनिहतनिजकालो योऽमलो दिव्यलीलः ॥
अमलविपुलकीर्तिः सच्चिदानंदमूर्ति-
र्हृतनिजभजकार्तिः पात्वसौ दिव्यमूर्तिः ॥ १० ॥

भक्तानां वरदः सतां च परदः पापात्मनां दंडद-
स्त्रस्तानामभयप्रदः कृतधियां संन्यासिनां मोक्षदः ॥
रुग्णानामगदः पराकृतमदः स्वर्गार्थिनां स्वर्गदः
स्वच्छंदश्च वदोवदः परमुदो दद्यात्स नो बंधदः ॥११॥

निजकृपार्द्रकटाक्षनिरीक्षणाद्धरति यो निजदुःखमपि क्षणात् ॥
स वरदो वरदोषहरो हरो जयति यो यतियोगिगतिः परा ॥१२॥

अज्ञः प्राज्ञो भवति भवति न्यस्तधीश्चेत्क्षणेन
प्राज्ञोऽप्यज्ञो भवति भवति व्यस्तधीश्चेत्क्षणेन ॥
मर्त्योऽमर्त्यो भवति भवतः सत्कृपावीक्षणेन ।
धन्यो मान्यास्त्रिजगति समः शंभुना त्रीक्षणेन ॥ १३ ॥

त्वत्तो भीतो देव वातोऽत्र वाति त्वत्तो भीतो भास्करोऽप्युदेति ।
त्वत्तो भीतो वर्षतींद्रोदवाहस्त्वत्तो भीतोऽग्निस्तथा हव्यवाहः ॥१४॥

भीतस्त्वत्तो धावतीशांतकोऽत्र
भीतस्त्वत्तोऽन्येऽपि तिष्ठंति कोऽत्र ॥
मर्त्योऽमर्त्योऽन्येऽपि वा शासनं ते
पाताले वाऽन्यत्र वाऽतिक्रमंते ॥ १५ ॥

अग्निमेकं तृणं दग्धुं न शशाक त्वयार्पितम् ॥
वातोऽपि तृणमादातुं न शशाक त्वयार्पितम् ॥ १६ ॥

विना तवाज्ञां न च वृक्षपर्णं चलत्यहो कोऽपि निमेषमेकम् ॥
कर्तुं समर्थो भुवने किमर्थं करोत्यहंतां मनुजोऽवशस्ताम् ॥१७॥

पाषाणे कृष्णवर्णे कथमपि परितश्छिद्रहीने न जाने
मंडूकं जीवयस्यप्रतिहतमहिमाचिंत्यसच्छक्तिजाने ॥
काष्ठाश्मान्युत्थवृक्षांस्त्र्युदरकुहरगान्जारवीतांश्च गर्भा-
न्ननं विश्वंभरेशाऽवसि कृतपयसा दंतहीनांस्तथार्भान ॥ १८ ॥

करोति सर्वस्य भवानपेक्षां कथं भवत्तोऽस्य भवेदुपेक्षा ॥
अथापि मूढः प्रकरोति तुच्छां सेवां तवोज्झित्य च जीवितेच्छाम् ॥१९॥

द्वेष्यः प्रियो वा नच तेऽस्ति कश्चिन् त्वं वर्तसे सर्वसमोऽथ दुश्चित् ।
त्वामन्यथा भावयति स्वदोषान्निर्दोषतायां तव वेदघोषः ॥ २० ॥

गृण्हासि नो कस्यचिदीश पुण्यं गृण्हासि नो कस्यचिदप्यपुण्यम् ॥
क्रियाफलं मास्य च कर्तृभावं सृजस्यविद्वेत्ति न च स्वभावम् ॥२१॥

मातुः शिशोर्दुर्गुणनाशनाय न ताडने निर्दयता न दोषः ॥
तथा नियंतुर्गुणदोषयोस्ते न दुष्टहत्याऽदयता न दोषः ॥ २२ ॥

दुर्गादिरूपैर्महिषासुराद्यान् रामादिरूपैरपि रावणाद्यान् ॥
अनेकहिंसादिकपापयुक्तान् क्रूरान्सदाचारकथाविमुक्तान् ॥ २३ ॥

स्वपापनाशार्थमनेककल्पान्यास्यंत एतान्निरयानकल्पान् ॥
स्वकीयमुक्तौ निजशस्त्रकृत्तान्कृत्वा भवान्धामनयत्सुपूतान् ॥ २४ ॥

याऽपाययत्स्तन्यमिषाद्विषं सा लेभे गतिं मातृुचितां दयालुः ॥
त्वत्तोपरः को निजकार्यसक्तस्त्वमेव नित्यं ह्यभिमानमुक्तः ॥ २५ ॥

नो कार्यं करणं च ते परगते लिंगं कला नापि ते
विज्ञाता त्वदमेय नान्य इति ते तत्वं प्रसिद्धं श्रुतेः॥
नेशस्ते जनिताधिकः सम उतान्यः कश्चनास्ति प्रभु–
र्दत्तात्रेय गुरो निजामरतरो त्वं सत्यमेको विभुः ॥२६॥

भोगार्थं सृजसीति कोऽपि वदति क्रीडार्थमित्थं परे
ते केच्छास्ति समाप्तकाम महिमानं नो विदुर्हीतरे ॥
केपीदं सदसद्वदंत्वितरथा वामास्तु मेतत्कथा–
पंथा मे श्रुतिदर्शितस्तव पदप्राप्त्यै सुखोऽन्ये वृथा॥ २७ ॥

सोऽनन्यभक्तोऽस्य तु पर्युपासको नित्याभियुक्तो यमुपैत्यभेदतः ॥
तत्प्रीतयेऽसौ भवतात्समर्थनातारावली तत्पदभक्तिभावना ॥२८॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचिता
प्रार्थनातारावली संपूर्णा ॥

---

## ११३ नक्षत्रमालिकास्तोत्रम्

गोदावर्या महानद्या उत्तरे सिंहपर्वते ॥
सुपुण्ये माहुरपुरे सर्वतीर्थसमन्विते ॥ १ ॥
जज्ञेऽत्रेरनसूयायां प्रदोषे बुधवासरे ॥
मार्गशीर्ष्यां महायोगी दत्तात्रेयो दिगंबरः ॥ २ ॥
मालां कुंडीं च डमरुं शूलं शंखं सुदर्शनम् ॥
दधानः षड्भुजैस्त्र्यात्मा योगमार्गप्रवर्तकः ॥ ३ ॥
भस्मोध्दूलितसर्वांगो जटाजूटविराजितः ॥
रुद्राक्षभूषिततनुः शांभवीमुद्रया युतः ॥ ४ ॥
भक्तानुग्रहकृन्नित्यं पापतापार्तिभंजनः ॥
बालोन्मत्तपिशाचाभः स्मर्तृगामी दयानिधिः ॥ ५ ॥
यस्यास्ति माहुरे निद्रा निवासः सिंहपर्वते ॥
प्रातःस्नानं च गंगायां ध्यानं गंधर्वपत्तने ॥ ६ ॥
कुरुक्षेत्रे चाचमनं धूतपापेश्वरे तथा ॥
विभूतिधारणं प्रातःसंध्या च करहाटके ॥ ७ ॥
कोलापुरेऽस्य भिक्षा च पांचालेऽपि च भोजनं ॥
तिलको विठ्ठलपुरे तुंगापानं दिने दिने ॥ ८ ॥

पुराणश्रवणं यस्य नरनारायणाश्रमे ॥
विश्रामो रैवते सायंसंध्या पश्चिमसागरे ॥ ९ ॥
कार्तवीर्यार्जुनायादाद्योगर्धिमुभयीं प्रभुः ॥
स्वात्मतत्त्वं च यदवे बहुगुर्वाप्रमुत्तमम् ॥ १० ॥
आन्वीक्षिकीमलर्काय प्रल्हादाय च धीमते ॥
आयूराजाय च वरान्साध्येभ्यो मोक्षसाधनम् ॥ ११ ॥
मंत्रांश्च विष्णुदत्ताय सोमकांताय कर्म च ॥
स एवाविरभूद्भूयः पूर्वार्णवसमीपतः ॥ १२ ॥
भाद्रे मासि सिते पक्षे चतुर्थ्यां राजविप्रतः ॥
सुमत्यां प्राक्सिंधुतीरे रम्ये पीठापुरे वरे ॥ १३ ॥
य आचारव्यवहृतिप्रायश्चित्तोपदेशकृत् ॥
निजाग्रजावंधपंगू विलोक्य प्रव्रजन्सुधीः ॥ १४ ॥
मातापित्रोर्मुदे दृष्टिं गतिं ताभ्यामुपानयत् ॥
महीं प्रदक्षिणीकृत्य गोकर्णे व्यद्रुमावसत् ॥ १५ ॥
ततः कृष्णातटं प्राप्य मर्तुकामां सपुत्रकां ॥
निवर्त्य ब्राह्मणीं मंदप्रदोषव्रतमादिशत् ॥ १६ ॥
तत्पुत्रं विबुधं कृत्वा तस्या जन्मांतरे प्रभुः ॥
पुत्रोभूद्यो नरहरिनामको देश उत्तरे ॥ १७ ॥
करंजनगरेऽप्यंबामाधवद्विजतो विभुः ॥
मासि पौषे सिते पक्षे द्वितीयायां शनेर्दिने ॥ १८ ॥
जातमात्रोऽपि चोंकारं पपाठाथापि मूकवत् ॥
सप्ताद्वान्लीलया स्थित्वा नानाकौतुककृत्प्रभुः ॥ १९ ॥
उपनीतोऽपठद्वेदान्सप्तमे वत्सरे स्वयम् ॥
आश्वास्य जननीं पुत्रद्वयदानेन बोधदः ॥ २० ॥

काशीं गत्वाष्टांगयोगाभ्यासी कृष्णसरस्वतीम् ॥
वृत्वा गुरुं यतिर्भूत्वा वेदार्थान्संप्रकाश्य च ॥ २१ ॥
लुप्तसंन्यासिधर्मं च तेने तुर्याश्रमोक्तकृत् ॥
मेरुं प्रदक्षिणीकृत्य शिष्यान्कृत्वापि भूरिशः ॥ २२ ॥
पितृभ्यां दर्शनं दत्वा द्विजं शूलरुजार्दितम् ॥
कृत्वानामयमाश्वास्य सायंदेवं महामतिम् ॥ २३ ॥
अब्दं स्थित्वा वैद्यनाथक्षेत्रे कृष्णातटे ततः ॥
भिल्लवाट्यां चतुर्मासान्विभुर्गत्वा ततोऽग्रतः ॥ २४ ॥
नृसिंहवाटिकाक्षेत्रे द्वादशाब्दान्वसन्सुधीः ॥
तत्र स्थित्वापि गंधर्वपुरमेत्यावसन्मठे ॥ २५ ॥
जीवयित्वा मृतान्दुग्ध्वा वंध्यां च महिषीं हरिः ॥
विश्वरूपं दर्शयित्वा यतये विश्वनाटकः ॥ २६ ॥
बह्वीरमानुषीर्लीलाः कृत्वा गुप्तोऽपि तत्र च ॥
य आस्ते भगवान्दत्तः सोऽस्मान्रक्षतु सर्वदा ॥ २७ ॥
या सप्तविंशतिश्लोकैः कृता नक्षत्रमालिका ॥
तद्भक्तेभ्योर्पिता भक्ताभिन्नश्रीदत्ततुष्टये ॥ २८ ॥
द्वादश्यामाश्विने कृष्णे श्रीपादस्योत्सवो महान् ॥
माघे कृष्णे प्रतिपदि नरसिंहप्रभोस्तथा ॥ २९ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचिता
नक्षत्रमालिका संपूर्णा ॥

---

## ११४ श्रीदत्तभावसुधारसस्तोत्रम्

दत्तात्रेयं परसुखमयं वेदगेयं ह्यमेयं
योगिध्येयं हृतनिजभयं स्वीकृतानेककायम् ॥
दुष्टाऽगम्यं विततविजयं देवदैत्यर्षिवंद्यं
वंदे नित्यं विहितविनयं चाऽव्ययं भावगम्यम् ॥ १ ॥

दत्तात्रेय नमोऽस्तु ते भगवते पापक्षयं कुर्वते
दारिद्र्यं हरते भयं शमयते कारुण्यमातन्वते ॥
भक्तानुद्धरते शिवं च ददते सत्कीर्तिमातन्वते ।
भूतान्द्रावयते वरं प्रददते श्रेयः पते सद्व्रते ॥ २ ॥

एकं सौभाग्यजनकं तारकं लोकनायकम् ॥
विशोकं त्रातभजकं नमस्ये कामपूरकम् ॥ ३ ॥

नित्यं स्मरामि ते पादे हतखेदे सुखप्रदे ॥
प्रदेहि मे शुद्धभावं भावं यो वारयेद्द्रुतम् ॥ ४ ॥

समस्तसंपत्प्रदमार्तबंधुं समस्तकल्याणदमस्तबंधुं ॥
कारुण्यसिंधुं प्रणमामि दत्तं यः शोधयत्याशु मलीनचित्तम् ॥५॥

समस्तभूतांतरबाह्यवर्ती यश्चात्रिपुत्रो यतिचक्रवर्ती ॥
सुकीर्तिसंव्याप्तदिगंतरालः स पातु मां निर्जितभक्तकालः ॥६॥

व्याध्याधिदारिद्र्यभयार्तिहर्ता स्वगुप्तयेनेकशरीरधर्ता ॥
स्वदासभर्ता बहुधा विहर्ता कर्ताप्यकर्ता स्ववशोऽरिहर्ता ॥७॥

स चानसूयातनयोऽभवद्यो विष्णुः स्वयं भाविकरक्षणाय ॥
गुणा यदीया न हि बुद्धिमद्भिर्गण्यंत आकल्पमपीह धात्रा ॥ ८ ॥

न यत्कटाक्षामृतवृष्टितोऽत्र तिष्ठंति तापाः सकलाः परत्र ॥
यः सद्गतिं संप्रददाति भूमा स मेंतरे तिष्ठतु दिव्यधामा ॥ ९ ॥

स त्वं प्रसीदात्रिसुतार्तिहारिन् दिगंबर स्वीयमनोविहारिन् ॥
दुष्टा लिपिर्या लिखितात्र धात्रा कार्या त्वया सातिशुभा विधात्रा ॥१०॥

सर्वमंगलसंयुक्त सर्वैश्वर्यसमन्वित ॥
प्रसन्ने त्वयि सर्वेशे किं केषां दुर्लभं कुह ॥ ११ ॥

हार्दांधतिमिरं हंतुं शुद्धज्ञानप्रकाशक ॥
त्वदंघ्रिनखमाणिक्यद्युतिरेवालमीश नः ॥ १२ ॥

स्वकृपार्द्रकटाक्षेण वीक्षसे चेत्सकृद्धि मां ॥
भविष्यामि कृतार्थोऽत्र पात्रं चापि स्थितेस्तव ॥ १३ ॥

क्व च मंदो वराकोऽहं क्व भवान्भगवान्प्रभुः ॥
अथापि भवदादेश भाग्यवानस्मि ते दृशा ॥ १४ ॥

विहितानि मया नाना पातकानि च यद्यपि ॥
अथापि ते प्रसादेन पवित्रोऽहं न संशयः ॥ १५ ॥

स्वलीलया त्वं हि जनान्पुनासि तन्मे स्वलीलाश्रवणं प्रयच्छ ॥
तस्याः श्रुतेः सांद्रविलोचनोऽहं पुनामि चात्मानमतीव देव ॥१६॥

पुरतस्ते स्फुटं वच्मि दोषराशिरहं किल ।
दोषा ममामिताः पांसुवृष्टिबिंदुसमा विभो ॥ १७ ॥

पापीयसामहं मुख्यः त्वं तु कारुणिकाग्रणीः ।
दयनीयो नहि क्वापि मदन्य इति भाति मे ॥ १८ ॥

ईदृशं मां विलोक्यापि कृपालो ते मनो यदि ।
न द्रवेत्तर्हि किं वाच्यमदृष्टं मे तवाग्रतः ॥ १९ ॥

त्वमेव सृष्टवान्सर्वान्दत्तात्रेय दयानिधे ॥
वयं दीनतराः पुत्रास्तवाकल्पाः स्वरक्षणे ॥ २० ॥

जयतु जयतु दत्तो देवसंघाभिपूज्यो
जयतु जयतु भद्रो भद्रदो भावुकेज्यः ॥
जयतु जयतु नित्यो निर्मलज्ञानवेद्यो
जयतु जयतु सत्यः सत्यसंधोऽनवद्यः ॥ २१ ॥

यद्यहं तव पुत्रः स्यां पिता माता त्वमेव मे ॥
दयास्तन्यामृतेनाशु मातस्त्वमभिषिंच माम् ॥ २२ ॥

ईशाभिन्ननिमित्तोपादानत्वात्स्रष्टुरस्य ते ॥
जगद्योने सुतो नाहं दत्त मां परिपाह्यतः ॥ २३ ॥

तव वत्सस्य मे वाक्यं सूक्तं वासूक्तमप्यहो ॥
क्षंतव्यं मेपराधश्च त्वत्तोन्या न गतिर्हि मे ॥ २४ ॥

अनन्यगतिकस्यास्य बालस्य मम ते पितः ॥
न सर्वथोचितोपेक्षा दोषाणां गणनापि च ॥ २५ ॥

अज्ञानित्वादल्पत्वाद्दोषा मम पदे पदे ॥
भवंति किं करोमीश करुणावरुणालय ॥ २६ ॥

अथापि मेऽपराधैश्चेद्दायास्यंतर्निषादत म् ॥
पदाहताभकेणापि माता रुष्यति किं भुवि ॥ २७ ॥

रंकमंकगतं दीनं ताडयंतं पदेन च ॥
माता त्यजति किं बालं प्रत्युताश्वासयत्यहो ॥ २८ ॥

तादृशं मामकरुं चेन्नाश्वासयसि भो प्रभो ॥
अहहा बत दीनस्य त्वां विना मम का गतिः ॥ २९ ॥

शिशुर्नायं शठः स्वार्थीत्यपि नायातु तेंऽतरम् ॥
लोके हि क्षुधिता बालाः स्मरंति निजमातरम् ॥ ३० ॥

जीवनं भिन्नयोः पित्रोर्लोक एकतराच्छिशोः ॥
त्वं तूभयं दत्त मम मास्तु निर्दयता मयि ॥ ३१ ॥
स्तवनेन न शक्तोऽस्मि त्वां प्रसादयितुं प्रभो ॥
ब्रह्माद्याश्चकितास्तत्र मंदोऽहं शक्नुयां कथम् ॥ ३२ ॥
दत्त त्वद्बालवाक्यानि सूक्तासूक्तानि यानि च ॥
तानि स्वीकुरु सर्वज्ञ दयालो भक्तभावन ॥ ३३ ॥
ये त्वां शरणमापन्नाः कृतार्था अभवन्निह ते ॥
एतद्विचार्य मनसा दत्त त्वां शरणं गतः ॥ ३४ ॥
त्वन्निष्ठास्त्वत्परा भक्तास्तव ते सुखभागिनः ॥
इति शास्त्रानुरोधेन दत्त त्वां शरणं गतः ॥ ३५ ॥
स्वभक्ताननुगृह्णाति भगवान्भक्तवत्सलः ॥
इति संचिंत्य संचिंत्य कथंचिद्धारयाम्यमून् ॥ ३६ ॥
त्वद्भक्तस्त्वदधीनोऽहमस्मि तुभ्यं समर्पितम् ॥
तनुं मनो धनं चापि कृपां कुरु ममोपरि ॥ ३७ ॥
त्वयि भक्तिं नैव जाने न जानेऽर्चनपद्धतिम् ॥
कृतं न दानधर्मादि प्रसादं कुरु केवलम् ॥ ३८ ॥
ब्रह्मचर्यादि नाचीर्णं नाधीता विधितः श्रुतिः ॥
गार्हस्थ्यं विधिना दत्त न कृतं तत्प्रसीद मे ॥ ३९ ॥
न साधुसंगमो मेऽस्ति न कृतं वृद्धसेवनं ॥
न शास्त्रशासनं दत्त केवलं त्वं दयां कुरु ॥ ४० ॥
ज्ञातेऽपि धर्मे नहि मे प्रवृत्तिर्ज्ञातेऽप्यधर्मे न ततो निवृत्तिः ॥
श्रीदत्तनाथेन हृदि स्थितेन त्वया नियुक्तोऽस्मि तथा करोमि ॥४१॥
कृतिः सेवा गतिर्यात्रा स्मृतिश्चिंता स्तुतिर्वचः ॥
भवंतु दत्त मे नित्यं त्वदीया एव सर्वथा ॥ ४२ ॥

प्रतिज्ञा ते न भक्ता मे नश्यंतीति सुनिश्चितम् ॥
श्रीदत्त चित्त आनीय जीवनं धारयाम्यहं ॥ ४३ ॥
दत्तोऽहं ते मयेतीश आत्मदानेन योऽभवत् ॥
अनसूयात्रिपुत्रः स श्रीदत्तः शरणं मम ॥ ४४ ॥
कार्तवीर्यार्जुनायादाद्योगर्द्धिमुभयीं प्रभुः ॥
अव्याहतगतिं चासौ श्रीदत्तः शरणं मम ॥ ४५ ॥
आन्वीक्षिकीमलर्काय विकल्पत्यागपूर्वकम् ॥
यो ददाचार्यवर्यः स श्रीदत्तः शरणं मम ॥ ४६ ॥
चतुर्विंशतिगुर्वाप्तं हेयोपादेयलक्षणं ॥
ज्ञानं यो यदवेऽदात्स श्रीदत्तः शरणं मम ॥ ४७ ॥
मदालसागर्भरत्नालर्काय प्राहिणोच्च यः ॥
योगपूर्वात्मविज्ञानं श्रीदत्तः शरणं मम ॥ ४८ ॥
आयुराजाय सत्पुत्रं सेवाधर्मपराय यः ॥
प्रददौ सद्गतिं चैष श्रीदत्तः शरणं मम ॥ ४९ ॥
लोकोपकृतये विष्णुदत्तविप्राय योऽर्पयत् ॥
विद्यास्तच्छ्राद्धभुग्यः स श्रीदत्तः शरणं मम ॥ ५० ॥
भर्त्रा सहानुगमनाविधिं यः प्राह सर्ववित् ॥
राममात्रे रेणुकायै श्रीदत्तः शरणं मम ॥ ५१ ॥
समूलमान्हिकं कर्म सोमकीर्तिनृपाय यः ॥
मोक्षोपयोगि सकलं श्रीदत्तः शरणं मम ॥ ५२ ॥
नामधारकभक्ताय निर्विण्णाय व्यदर्शयत् ॥
तुष्टः स्तुत्या स्वरूपं स श्रीदत्तः शरणं मम ॥ ५३ ॥
यः कलिब्रह्मसंवादमिषेणाऽऽह युगस्थितीः ॥
गुरुसेवां च सिद्धाऽऽस्याच्छ्रीदत्तः शरणं मम ॥ ५४ ॥

दुर्वासःशापमाश्रुत्य योंऽबरीषार्थमव्ययः ॥
नानावतारधारी स श्रीदत्तः शरणं मम ॥ ५५ ॥
अनसूयासतीदुग्धास्वादायेव त्रिरूपतः ॥
अज्ञातरदजो योंऽपि श्रीदत्तः शरणं मम ॥ ५६ ॥
पीठापुरे यः सुमतिब्राह्मणीभक्तितोऽभवत् ॥
श्रीपादस्तत्सुतत्राता श्रीदत्तः शरणं मम ॥ ५७ ॥
प्रकाशयामास सिद्धमुखात्स्थापनमादितः ॥
महाबलेश्वरस्यैष श्रीदत्तः शरणं मम ॥ ५८ ॥
चंडाल्यपि यतो मुक्ता गोकर्णे तत्र योऽवसत् ॥
लिंगतीर्थमये ऽप्यद्वं श्रीदत्तः शरणं मम ॥ ५९ ॥
कृष्णाद्वीपे कुरुपुरे कुपुत्रं जननीयुतम् ॥
यो हि मृत्योरपाच्छ्रीपाच्छ्रीदत्तः शरणं मम ॥ ६० ॥
रजकायापि दास्यन्यो राज्यं कुरुपुरे प्रभुः ॥
तिरोभूदज्ञदृष्ट्या स श्रीदत्तः शरणं मम ॥ ६१ ॥
विश्वासघातिनश्चोरान्स्वभक्तघ्नान्निहत्य यः ॥
जीवयामास भक्तं स श्रीदत्तः शरणं मम ॥ ६२ ॥
करंजनगरेंबायाः प्रदोषव्रतसिद्धये ॥
योऽभूत्सुतो नृहर्याख्यः श्रीदत्तः शरणं मम ॥ ६३ ॥
मूको भूत्वा व्रतात्पश्चाद्वदन्वेदान्स्वमातरं ॥
प्रव्रजन् बोधयामास श्रीदत्तः शरणं मम ॥ ६४ ॥
काशीवासी स संन्यासी निराशीर्वप्रदो वृषम् ॥
वैदिकं विशदीकुर्वन् श्रीदत्तः शरणं मम ॥ ६५ ॥
भूमिं प्रदक्षिणीकृत्य सशिष्यो वीक्ष्य मातरं ॥
जहार द्विजशूलार्तिं श्रीदत्तः शरणं मम ॥ ६६ ॥

शिष्यत्वेनोररीकृत्य सायंदेवं ररक्ष यः ॥
भीतं च क्रूरयवनाच्छ्री दत्तः शरणं मम ॥ ६७ ॥
प्रेरयत्तीर्थयात्रायै तीर्थरूपोऽपि यः स्वकान् ॥
सम्यग्धर्ममुपादिश्य श्रीदत्तः शरणं मम ॥ ६८ ॥
सशिष्यः पर्यलीक्षेत्रे वैद्यनाथसमीपतः ॥
स्थित्वोद्धार मूढं यः श्रीदत्तः शरणं मम ॥ ६९ ॥
त्सुतमविद्यं य आगतं लोकनिंदितम् ॥
जिह्वं बुधं चक्रे श्रीदत्तः शरणं मम ॥ ७० ॥
हवाटिकस्थो यः प्रददौ शाकभुङ् निधिम् ॥
ब्राह्मणायासौ श्रीदत्तः शरणं मम ॥ ७१ ॥
य त्रिस्थलीयात्रां दर्शयामास यः क्षणात् ॥
र वरदं क्षेत्रं श्रीदत्तः शरणं मम ॥ ७२ ॥
तिं वारयित्वा यो ब्राह्मण्यै भक्तिभावितः ॥
... पुत्रौ स गतिदः श्रीदत्तः शरणं मम ॥ ७३ ॥
तत्वं यो मृतपुत्रायै बोधयित्वाप्यजीवयत् ॥
मृतं कल्पद्रुमस्थः स श्रीदत्तः शरणं मम ॥७४॥
दोहयामास भिक्षार्थं यो वंध्यां माहिषीं प्रभुः ॥
दारिद्र्यदावदात्रः स श्रीदत्तः शरणं मम ॥ ७५ ॥
राजप्रार्थित एत्यास्थान्मठे यो गाणगापुरे ॥
ब्रह्मरक्षःसमुद्धर्ता श्रीदत्तः शरणं मम ॥ ७६ ॥
विश्वरूपं निंदकाय शिबिकास्थः स्वलंकृतः ॥
गर्वहादर्शयद्यः स श्रीदत्तः शरणं मम ॥ ७७ ॥
त्रिविक्रमेण चानीतौ गर्वितौ ब्राह्मणद्विषौ ॥
बोधयामास तौ यः स श्रीदत्तः शरणं मम ॥७८॥

उक्त्वा चतुर्वेदशाखातदंगादिकमीश्वरः ॥
विप्रगर्वहरो यः स श्रीदत्तः शरणं मम ॥ ७९ ॥
सप्तजन्मविदं सप्तरेखोल्लंघनतो ददौ ॥
यो हीनाय श्रुतिस्फूर्तिं श्रीदत्तः शरणं मम ॥ ८० ॥
त्रिविक्रमायाह कर्मगतिं दत्तविदा पुनः ॥
वियुक्तं पतितं चक्रे श्रीदत्तः शरणं मम ॥ ८१ ॥
रक्षसे वामदेवेन भस्ममाहात्म्यमुद्गतिम् ॥
उक्तां त्रिविक्रमायाह श्रीदत्तः शरणं मम ॥ ८२ ॥
गोपीनाथसुतो रुग्णो मृतस्तत्स्त्री शुशोच ताम् ॥
बोधयामास यो योगी श्रीदत्तः शरणं मम ॥ ८३ ॥
गुर्वगस्त्यर्षिसंवादरूपं स्त्रीधर्ममाह यः ॥
रूपांतरेण स प्राज्ञः श्रीदत्तः शरणं मम ॥ ८४ ॥
विधवाधर्ममादिश्यानुगमं चाक्षभस्मदः ॥
अजीवयन्मृतं विप्रं श्रीदत्तः शरणं मम ॥ ८५ ॥
वेश्यासत्यै तु रुद्राक्षमाहात्म्ययुतमीदृक्कृतम् ॥
प्रसादं प्राह यः सत्यै श्रीदत्तः शरणं मम ॥ ८६ ॥
शतरुद्रीयमाहात्म्यं मृतराट्सुतजीवनम् ॥
सत्यै शशंस स गुरुः श्रीदत्तः शरणं मम ॥ ८७ ॥
कचाख्यानं स्त्रियो मंत्रानर्हतार्थसुभाग्यदम् ॥
सोमव्रतं च यः प्राह श्रीदत्तः शरणं मम ॥ ८८ ॥
ब्राह्मण्या दुःस्वभावं यो निवार्याह्निकमुत्तमम् ॥
शशंस ब्राह्मणायासौ श्रीदत्तः शरणं मम ॥ ८९ ॥
गार्हस्थधर्मं विप्राय प्रत्यवायजिहासया ॥
क्रममुक्त्यै य ऊचे स श्रीदत्तः शरणं मम ॥ ९० ॥

त्रिपुंपर्याप्तपाकेन भोजयामास यो नृणाम् ॥
सिद्धश्चतु सहस्राणि श्रीदत्तः शरणं मम ॥ ९१ ॥
अश्वत्थसेवामादिश्य पुत्रौ योदात्फलप्रदः ॥
चित्रकृद् वृद्धवंध्यायै श्रीदत्तः शरणं मम ॥ ९२ ॥
कारयित्वा शुष्ककाष्ठसेवां तद्वृक्षतां नयन् ॥
विप्रकुष्ठं जहारासौ श्रीदत्तः शरणं मम ॥ ९३ ॥
भजंतं कष्टतोऽप्याह सायंदेवं परीक्ष्य यः ॥
गुरुसेवाविधानं स श्रीदत्तः शरणं मम ॥ ९४ ॥
शिवतोषकरीं काशीयात्रां भक्ताय योऽवदत् ॥
सविधिं त्रिहितां त्वष्ट्रा श्रीदत्तः शरणं मम ॥ ९५ ॥
कौंडिण्यधर्मविहितमनंतव्रतमाह यः ॥
कारयामास तद्योऽपि श्रीदत्तः शरणं मम ॥ ९६ ॥
श्रीशैलं तंतुकायासौ योगगत्या व्यदर्शयत् ॥
शिवरात्रिव्रताहे स श्रीदत्तः शरणं मम ॥ ९७ ॥
ज्ञापयित्वाप्यमर्त्यत्वं स्वस्य दृष्ट्या चकार यः ॥
विकुष्ठं नंदिशर्माणं श्रीदत्तः शरणं मम ॥ ९८ ॥
नरकेसरिणे स्वप्ने स्वं कल्लेश्वरलिंगगम् ॥
दर्शयित्वानुजग्राह श्रीदत्तः शरणं मम ॥ ९९ ॥
अष्टमूर्तिधरोऽप्यष्टग्रामगो भक्तवत्सलः ॥
दीपावल्युत्सवेऽभूत्स श्रीदत्तः शरणं मम ॥ १०० ॥
अपक्वं छेदयित्वापि क्षेत्रे शतगुणं ततः ॥
धान्यं शूद्राय योऽदात्स श्रीदत्तः शरणं मम ॥ १०१ ॥
गाणगापुरके क्षेत्रे योऽष्टतीर्थान्यदर्शयत् ॥
भक्तेभ्यो भीमरथ्यां स श्रीदत्तः शरणं मम ॥१०२॥

पूर्वदत्तवरायादाद्राज्यं स्फोटकरुग्घरः ॥
म्लेच्छाय दृष्टिं चेष्टं स श्रीदत्तः शरणं मम ॥ १०३ ॥
श्रीशैलयात्रामिषेण वरदः पुष्पपीठगः ॥
कलौ तिरोऽभवद्यः स श्रीदत्तः शरणं मम ॥ १०४ ॥
निद्रा मातृपुरेऽस्य सह्यशिखरे पीठं मिमंक्षा पुरे
काश्याख्ये करहाटकेऽर्घ्यममवरे भिक्षास्य कोलापुरे ॥
पांचाले भुजिरस्य विठ्ठलपुरे पत्रं विचित्रं पुरे
गांधर्वे युजिराचमः कुरुपुरे दूरे स्मृतो नांतरे ॥ १०५ ॥
अमलकमलवक्त्रः पद्मपत्राभनेत्रः
परविरतिकलत्रः सर्वथा यः स्वतंत्रः ॥
स च परमपवित्रः सत्कमंडल्वमत्रः
परमरुचिरगात्रो योऽनसूयात्रिपुत्रः ॥ १०६ ॥
नमस्ते समस्तेष्टदात्रे विधात्रे नमस्ते समस्तेड्डिताघौघहर्त्रे ॥
नमस्ते समस्तेंगितज्ञाय भर्त्रे नमस्ते समस्तेष्टकर्त्रेऽकहर्त्रे ॥१०७॥
नमो नमस्तेऽस्तु पुरांतकाय नमो नमस्तेस्त्वसुरांतकाय ॥
नमो नमस्तेऽस्तु खलांतकाय दत्ताय भक्तार्तिविनाशनाय ॥१०८॥
श्रीदत्तदेवेश्वर मे प्रसीद श्रीदत्तसर्वेश्वर मे प्रसीद ॥
प्रसीद योगेश्वर देहि योगं त्वदीयभक्तेः कुरु मा वियोगम् ॥१०९॥
श्रीदत्तो जयतीह दत्तमनिशं ध्यायामि दत्तेन मे ।
हृच्छुद्धिर्विहिता ततोऽस्तु सततं दत्ताय तुभ्यं नमः ॥
दत्तान्नास्ति परायणं श्रुतिमतं दत्तस्य दासोऽस्म्यहम् ।
श्रीदत्ते परभक्तिरस्तु मम भो दत्त प्रसीदेश्वर ॥ ११० ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तभावसुधारसस्तोत्रं संपूर्णम् ॥

---

## ११५ प्रार्थनास्तोत्रम्

प्रभो देवदेव प्रभो दत्तदेव ॥
तारकोऽस्माकमकहृत्त्वमेव ॥
प्रभो देव देव प्रभो दत्तदेव ॥ ध्रु ॥

एहि करुणाकरा पाहि परमेश्वरा ।
त्राहि भवसागरादखिलदेव ॥
एहि लघु सन्मते एहि लघु सम्मते ।
देहि लघु सद्व्रते शुद्धभावम् ॥ १ ॥

त्वमसि दुरितापहा त्वमसि भवतापहा ।
त्वमसि कुमतापहा सर्वदेव ॥
त्वमसि हितकारकस्त्वमसि भयवारक-
स्त्वमसि भवतारकः साधुदेव ॥ २ ॥

त्वमसि मम दैवतं त्वमसि मम जीवितं ।
त्वमसि मम सकलहितजातमेतत् ॥
त्वमसि मम चालकस्त्वमसि मम पालक-
स्त्वमसि मम तारको दत्तदेव ॥ ३ ॥

आर्द्रमतिकोमलं सांद्रकरुणालयं ।
सांद्रचितिसोज्वलं सुकृतशीलं ।
हृदयमिह विश्रुतं सदयमज ते मतं
सुनय सहसा द्रुतं भवतु देव ॥ ४ ॥

देव भवदावतस्तीव्रतरतापतः ।
दत्त संतापितं माभिषिंच ॥
सत्कटाक्षामृतैः पूजितांघ्रेऽमृतैः
संस्तुतास्तानृतैः पाहि देव ॥ ५ ॥

घोरघोरांधकारावृते सद्गतेऽगाधसंसारकूपे दुरंते ।
पतितमतिमन्युना घोरकालाहिना
संवृतं मोचयाश्वेव मात्र ॥ ६ ॥

घोरभवसागरे सर्वथा दुस्तरेऽस्मिन्ननादावनंतेऽनपारे ।
पतितमिह दुःस्थितं कर्मवाताहतं
प्रोद्धरार्तं प्रभो मां सुभाव ॥ ७ ॥

मत्समः पापकृत्त्वत्समः पापहृत् ।
नास्त्यपर ईश्वर प्रार्थये तत् ।
यत्त्वमिच्छसि विभो तत्कुरुष्व प्रभो
वासुदेवार्थित श्रीश देव ॥ ८ ॥ प्रभो

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तात्रेयप्रार्थनास्तोत्रं संपूर्णम् ॥

---

## ११६ आयुराजकृतदत्तात्रेयस्तोत्रं चंपूस्थम् ॥

दुर्दर्श ईशोऽपि मयात्रिजातः संपूजितो येन वरोऽपि दत्तः॥
दत्ताभये तत्पदि मेऽस्ति चित्तं दत्ताश्रयं तं प्रणमामि दत्तम् ॥ १ ॥

भगवन् किमु मामुपेक्षसे मघवन्मान्य सहापि नेक्षसे ॥
चरितं किमु दुष्करं मया चरितं वाऽऽग उतेश ते मया ॥ २ ॥

प्रणमामि विभो प्रसीद मे प्रणतेऽपीश धृते महादमे ॥
शरणं क्व परेश नश्वरणं तेऽभयदं गतिर्हि नः ॥ ३ ॥

पुत्रार्थं त्वाराध्य लब्ध्वापि कान्तं
पुत्रार्थं ते सत्प्रसादादकान्तम् ॥
नेक्षेऽद्यार्तो नष्टपुत्रः सुरेश
वीक्षे त्वत्तोऽन्याश्रयं नो परेश ॥ ४ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीकृतं
चंपूस्थं आयुराजकृतदत्तात्रेयस्तोत्रं संपूर्णम् ॥

## ११७ श्रीदत्तात्रेयप्रार्थनास्तोत्रम्

समस्तदोषशोषणं स्वभक्तचित्ततोषणं
निजाश्रितप्रपोषणं यतीश्वराग्र्यभूषणं ।।
त्रयीशिरोविभूषणं प्रदर्शितार्थदूषणं
भजेऽत्रिजं गतैषणं विभुं विभूतिभूषणम् ।। १ ।।

समस्तलोककारणं समस्तजीवधारणं
समस्तदुष्टमारणं कुबुद्धिशक्तिजारणम् ।।
भजद्भयाद्रिदारणं भजत्कुकर्मवारणं
हरिं स्वभक्ततारणं नमामि साधुचारणम् ।। २ ।।

नमाम्यहं मुदास्पदं निवारिताखिलापदं
समस्तदुःखतापदं मुनीन्द्रवंद्य ते पदम् ।।
यदंचितांतरामदं विहाय नित्यसंमदं
प्रयान्ति नैव ते भिदं मुहुर्भजन्ति चाविदम् ।। ३ ।।

प्रसीद सर्वचेतने प्रसीद बुद्धिचेतने
स्वभक्तहृन्निकेतने सदाम्ब दुःखशातने ।।
त्वमेव मे प्रसूर्मता त्वमेव मे प्रभो पिता
त्वमेव मेऽखिलेहितार्थदोऽखिलाकतोऽविता ।। ४ ।।

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तप्रार्थनास्तोत्रं संपूर्णम् ।।

---

## ११८ श्रीदत्तप्रतिष्ठास्तोत्रम्

शालिवाहनशकेऽभ्रपूर्गजक्ष्मामिते तपसि मासि योऽत्रिजः ।।
गौतमीतट उपागतो विभुर्दत्त एष स पुनातु नः प्रभुः ।। १ ।।

योऽबुवेगवद्द्रवत्यनुद्धतान्नाशयत्यपि सुधीरथोद्धतान् ॥
दत्त एष पुनातु नः स्वकान् सेवकांश्च विदधात्वजो व्यकान् ॥ २ ॥

गौतम्या निवसति पूर्वकूल आन्ध्रे देशे यो निजभजकेष्टकृन्महीन्ध्रे ॥
सह्याख्ये महति यथा तथानणीय यस्यास्ते जगति कथा प्रहर्षणीयम् ॥३॥

यो माघे मासि राकायां शुक्रवारे प्रतिष्ठितः ॥
ब्रह्मानन्देन गौतम्यां श्रीदत्तो भक्तवत्सलः ॥ ४ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तप्रतिष्ठास्तोत्रं संपूर्णम् ॥

---

## ११९ श्रीदत्तात्रेयस्तोत्रम् ॥

नमस्तेऽनसूयासुतायार्तिहन्त्रे नमस्तेऽत्रिपुत्राय सर्वाधिहन्त्रे ॥
नमस्तेऽवधूताय लोकैकभर्त्रे नमस्ते समस्तेडितायादिकर्त्रे ॥ १ ॥

नमस्ते मखादिक्रियापापकर्त्रे नमस्ते जगत्साक्षिणे ते विकर्त्रे ॥
नमस्तेऽसुराराातये भक्तपात्रे नमस्तेऽखिलस्याऽस्य पित्रे च मात्रे ॥२॥

नमस्ते जगन्मानसप्रेरकाय नमस्ते जगद्यन्त्रसंचालकाय ॥
नमो योगिवर्य प्रभो मे प्रसीद नमो भिक्षुवन्द्य प्रभो मे प्रसीद ॥३॥

भुजंगप्रयातेडितास्मासु माला भुजंगप्रयातोरमं ते विशाला ॥
भवं नाशयित्वा वसत्वीशमूर्तिः शिवंकर्यपीडयाऽऽधिहन्त्री च
कीर्तिः ॥ ४ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तात्रेयस्तोत्रं संपूर्णम् ॥

## १२० श्रीदत्तात्रेयस्तोत्रम्

जन्माद्यस्य यतो यतो जगदिदं शास्त्रं च शास्त्रप्रमं
यत्तच्छास्त्रसमन्वितं मतिहितं वेद्यं विनष्टभ्रमम् ॥
दत्ताख्यं तदु माययाऽस्य तु मया शार्दूलविक्रीडितम्
प्रारब्धं करुणैव मन्दमतिना स्तोत्रं तदस्त्वीडितम् ॥ १ ॥

ईक्षापूर्वमचिन्त्यशक्तिरसृजद्विश्वं य एको विभुः ॥
साध्व्याः शापमृषेश्च लोकविपदो द्राग्वारयंत्याः प्रभुः ॥
पत्न्या अत्रिमुनेस्तपस्विन इतस्त्रेधाभंतां निर्मलं ॥
दुर्वासःशशिदत्तसंज्ञित इनः कुर्यात्स नो मङ्गलम् ॥ २ ॥

कष्टाद्दीपकशिष्यवन्निजगुरुं श्रीवेदधर्माह्वयं
कृष्टं कुणमहो निषेव्य वरदं विश्वेशहर्यान्हयम् ॥
सोऽनादृत्य सुरद्वयं स्वगुरुतो वव्रे यशोस्याऽमलम्
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ३ ॥

प्रन्हादः क्षुधितातिथिद्विजनुवः शप्तोऽसुरत्वं गतः
कृत्वाऽजेन रणं क्षणं हतमतिः सोऽनात्मवित्वाद्गतः ॥
यं भक्त्या शरणं यतोऽलभदिमामान्वीक्षिकीं निश्चलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ४ ॥

यं साध्याभिधदेवता उपगतास्ताभ्यो जगादामृतं
यो दुःसङ्गनिवृत्तिपूर्वकमरं धैर्यं तितिक्षामृतम् ॥
शान्तिं चापि तपोन्तरङ्गकतया मायानियन्ताऽचलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ५ ॥

यं वर्णाश्रमलिङ्गहीनममलं नग्नं स्थितं साबलं
नागः पिङ्गल ऊच आश्रममिदं किं ते वदेत्याह तम् ॥
योऽसौ पञ्चममाश्रमं समदृशः पूतस्य मे हीत्यलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ६ ॥

यो बुद्ध्याश्रितभूनगादिगुरुत आदेयहेयात्मकम्
शान्त्यादिप्रदशिक्षणं च यदवे पृष्टो जगौ स्वार्जितम् ॥
आत्मैवात्मगुरुः किलेति च यतो योऽदर्शयन्ध्यर्गलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ७ ॥
निष्ठां वीक्ष्य पुरा पुरारिरुभयीं योगर्द्धिमुच्चैर्ददौ
बाहूनां च सहस्रमाजिमरणं यश्चार्जुनायोद्गतिम् ॥
वन्दे भार्गवरामकामदमरं श्रीरेणुकाभीष्टदं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ८ ॥
रक्षः प्रत्युपकार्यदर्शयदहो त्रिर्विष्णुदत्ताय यं
दुर्दर्शोऽपि निमन्त्रितोऽग्निरवियुक् श्राद्धान्नभुक् सान्वयम् ॥
तं रक्षोऽप्यनयन्निजं पदमदो मोदात्मकं सोज्ज्वलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ९ ॥
भिक्षित्वान्नमुपादिशद्वरममूनन्वागतब्रह्मणे
यैः सप्तग्रहमुक्त आस मनुभिर्ब्रह्मात्मजो ब्रह्मणे ॥
तस्मै दुर्ग्रहनिग्रहाय महसे कुर्मो नमो मङ्गलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ १० ॥
आयूराजवरप्रदोऽपि नहुषो हुण्डेन मायाविना
तत्पोतं हृतमाशु हन्तुमजितो योऽरक्षदार्तिं विना ॥
पित्रोर्योगमकारयच्च जयिना तेनेष्टदोऽसावलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ ११ ॥
भ्रात्राऽजौ विजितो विचित्रचरितस्वाम्बार्पितश्लोकत-
श्चालर्कः शरणं यमाप कृपया साष्टाङ्गयोगं सचित् ॥
तस्मै येन मदालसाभुव उपादिष्टो वरिष्ठोऽमलं
दत्तात्रेयगुरुर्भजत्सुरतरुः कुर्यात्स नो मङ्गलम् ॥ १२ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तात्रेयस्तोत्रं संपूर्णम् ॥

१२१ पद्यम् ( चाल: जम्का अजब तडाका० )

भगवन् भक्तिरसं देहि स्याद्धन्यो येन तु देही ॥ ध्रु० ॥
सकामधर्मं हृदापि नेच्छोऽनर्थकरेऽस्मिन् तुच्छे ।
निरास्पदेऽनिलहतनावींव स्वार्थं को वाऽन्विच्छेत् ॥ १ ॥
अखंडभगवद्भजनविघ्नकृन्नियते कर्मण्यपि मे ।
सदानादरस्त्वद्भजनादरः परास्तु नाऽन्येच्छा मे ॥ २ ॥
ननु स्वधर्मत्यागे भजतां कृतार्थता चेदिष्टथा ।
येन यदि वाऽतो भ्रश्येद्वाऽपकः किं स न साधुः ॥ ३ ॥
न भक्तिरसिकोऽनर्थं याति क्वापि समर्थः ।
भक्तिवासनासद्भाग्यान्नो हीनोऽपि भजेत्स्वार्थं ॥ ४ ॥
भजतो जन्मान्तरेऽप्यभद्रं नीचगतो लभेत्किं ।
स्वधर्मनिरतो न चेद्भक्तो भद्रं क्वापि लभेत्किं ॥ ५ ॥
यद्यपि धर्मादुपरि सुखं स्यात्तदर्थयत्नो व्यर्थः ।
सुखानि दैवाद् दुःखानीवाऽऽयान्ति क्वापि समर्थ ॥ ६ ॥
यदधोलभ्यं चोर्ध्वमलभ्यं तदेव देव प्रेष्ठ ।
त्वत्पदभजनं जनिमृतिभंजनं मे देह्यमरश्रेष्ठ ॥ ७ ॥

---

१२२ पद्यम् ( चाल—जमका अजब तडका० )

भगवन्निर्विकार ईश त्वमसि सदोदित विगताश ॥ ध्रु० ॥
अपरोक्षस्त्वं नित्यप्राप्तः प्राप्तिस्त्वं कथमीश ॥
स्वयंज्योतिस्त्वमतो विकृतिर्नहि तव भवदवनाश ॥ १ ॥
मलिनो योऽसौ मलक्षालनाच्छुद्धो विकृतिं यातीश ॥
अज्ञानमलाऽस्पृष्टोऽस्यमलाऽतस्ते विकृतिः क्वेश ॥ २ ॥

यो हि जायते सचोत्पत्तिना विक्रियते जगदीश ॥
त्वं तु सदाऽजस्तवाधोऽक्षज विकार उत्पत्तित ईश ॥ ३ ॥
आगमगेयस्त्वमप्रमेयः कथं घटेत त्रीश ॥
ज्ञानलक्षणाऽतिशयाधानात्संस्कारस्तव धीश ॥ ४ ॥
त्वं देशाद्यैरपरिच्छिन्नो महानुभूतिस्त्रीश ॥
अस्तित्वाद्या विकृतिरविद्या कृता न तेऽस्ति परेश ॥५ ॥
त्वमेक एवाद्वितीय एत्राखिलानुभूतिः स्वेश ॥
विकारहेतोरभावतोऽतो न ते विकारोधीश ॥ ६ ॥
श्रुतिविषयस्य स्वयं प्रभावं तूक्तिविरामेधीश ॥
त्वदीषिता वाङ्मुखाश्चरंति वृत्तिव्याप्तिः सुमतेश ॥ ७ ॥

( अस्य श्लोकः भागवते )

एष स्वयंज्योतिरजाप्रमेयो महानुभूतिः स्वकलानुभूतिः ॥
एकोऽद्वितीयो वचसां विरामे येनेषिता वागसवश्चरन्ति ॥ १ ॥

---

## १२३ दत्तात्रेयस्तोत्रम् ॥

निर्मलं निश्चलं स्वांतं निशांतं यस्य संततम् ॥
त्यतीतरज उत्कृष्टमेकांतं दयितं मतम् ॥ १ ॥
स सर्वात्मापि सर्वेशः सर्वभूतगुहाशयः ॥
नियंता सर्वभूतानां सर्वशक्तिसमन्वितः ॥ २ ॥
प्रियश्चात्मवतां नित्यं दत्तात्रेयो जगद्गुरुः ।
योगेश्वरो योगिपूज्यो भक्तानां कल्पपादपः ॥ ३ ॥
विश्वरूपधरो विश्वविहारी विजिताहितः ॥
जन्ममृत्युजराव्याधिभयदोषनिवारणः ॥ ४ ॥
यतिसंन्यासिसुगतिः सर्वारिष्टनिवारणः ॥
संजसा तेज आत्मायं सदा ध्येयो मुमुक्षुभिः ॥ ५ ॥

## १२४ पद्यम् ( चालः सुंदरमुख तुंदिल० )

अत्रिपुत्र मेऽद्य पुत्र ईश कुत्र भो ।। चित्रमंत्र चित्रमत्र दर्शितं प्रभो ।।ध्रु०।।
पूर्वजनुषि कस्य रत्नमपहृतं मया । दद्भिषक्तिरिह विनष्टिरुह्यते यया ॥
शर्मकराऽधर्महराऽलं परीक्षया ।। (चाल) ।। श्रीमन् धीमन् भूमन् जय
भगवन् ततमहिमन् नुतधामन् त्राहि मां विभो ॥ १ ॥
परिहृत्याद्यानपत्यदोषमर्पितः ।। खलु परया ते दयया सद्गुणः सुतः ॥
केन चाद्य सोऽनवद्य कुत्र परिहृतः ।। (चाल) ।। त्वरया परया घृणया
दर्शय तं दत्त सुतं भगवंतं त्वार्चये विभो ॥ २ ॥ अत्रिपुत्र० ॥

---

## १२५ पद्यम् ( चाल—साध्य नसे मुनि कन्या० )

भज भज भगवत्कार्यं ।। तं विप्रं हापितमार्यं ॥ ध्रु० ॥
समाधिसिध्द्यै क्लेशविहृत्यै कृतक्रियो यो विप्रः ॥
कर्माशयहृत्तापाऽतापक्रुन्मूलोत्पाटनविप्र ॥ १ ॥
सुखमपि दुःखं पश्यत्याखंडितनुर्याऽवनिसंस्थः ॥
विप्रो देवः साक्षादेव प्रभुः स किमुपरिस्थः ॥ २ ॥
अभ्यासहताऽविद्या ये तानर्चत नित्यं हि यतः ॥
यदि ते कुपिता अप्यतिशान्ता शान्ति मानातीताः ॥ ३ ॥

---

## १२६ नरसिंहसरस्वतीस्तोत्रम्

विजयते जयते जय ते यतेरिहतमो हतमोहतमो नमः ॥
हृदिकदाय पदाय सदा यदा तदुदयोनदयो न वियोनयः ॥ १ ॥
उदयते नयतेर्नयतेर्यदा मनसि कामनिकामगतिस्तदा ॥
पदुदयो हृदयोकसि ते सिते भवति योवति योगिवरावरान् ॥ २ ॥

भवति भावभवोवभवो यदा भवति कामनिकामहृतिस्तदा ॥
भवति मानव मानवदुत्तमे भवतिरोधिरतो विरतोत्तमे ॥ ३ ॥

तव सतां वसतां मनसा नसा प्रपदयोः पदयोरजसांजसा ॥
सुसहितः सहितस्तव तावता यदवतारवता जनताविता ॥ ४ ॥

कृतफलं तु विहाय विहायसा सममजं भजतामज तामसात् ॥
मिलति तारकमत्र कमत्रसत् पदरजो भ्रमहारिमहारिसत् ॥ ५ ॥

तदजरामरकोशविलक्षणं सदजधीगुणवेत्तृकलक्षणम् ॥
भुवनहेत्वघहृत्त्रिपुराधिकं तव न जातु पदं कुपुराधिकम् ॥ ६ ॥

त्रिविधभेदपरं समदृश्यते विविधवेदपरं कमदृश्यते ॥
पदमियं यदुचिदूघनमुद्धिया सदनिदं प्रजहात्यघनुद्धिया ॥ ७ ॥

अज नमो जनमोहनमोहनः प्रिय नियोजय ते नयते मते ॥
य इह वेद निवेद निवेदवे त्यज पदं जपदं तपदं पदम् ॥ ८ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
नरसिंहसरस्वतीस्तोत्रं संपूर्ण ॥

---

## १२७ श्रीदत्तात्रेयाष्टोत्तरशतनामस्तोत्रम् ॥

ॐ अनसूयासुतोऽनंत आद्य आत्रेय आत्मदः ॥
इडापतिरिलेशार्च्य ईश ईडितसद्गुणः ॥ १ ॥

उन्मत्त उत्तमयशा ऊकृदूर्ध्वगतिप्रियः ॥
ऋणहर्ता ऋषिश्रेष्ठो ऋवंद्यो ऋजशिक्षकः ॥ २ ॥

ऌस्थवंद्यो ऌगतिदो ॡवंद्यो ॡपुरःसरः ॥
एष्यदिष्टज्ञ एकार्थ ऐकात्म्यप्रद ऐक्यदृक् ॥ ३ ॥

ओंकारवाच्य ओजोद औदासीन्यद औषधः ॥
अंतस्थोंतःकरणपा अश्वास्तनिजहृन्मलः ॥ ४ ॥

कर्मातीतः कार्तवीर्येंद्र खलहा खगपूजितः ॥
गतिगंगाजलस्नायी घोरहा घनचित्प्रभः ॥ ५ ॥
ङशिक्षको ङेतमना चतुरश्चंद्रमोग्रजः ॥
छंदपूरश्छंदईड्यो जयदाता जगत्पतिः ॥ ६ ॥
झंझाकरो झरस्नायी ञहर्ता ञविवर्जितः ॥
टीकाकृट्टिट्टिभकृट् ठवादिमतहृट्ठवित् ॥ ७ ॥
डामरेड्यो डमरुधृक् ढक्काकृड्ढुंढिराट्प्रियः ॥
णवीक्षणो णगम्यश्च तत्वविचापशामकः ॥ ८ ॥
थैथैकृत्थृत्कृतानार्यो दत्तो दाता दयानिधिः ॥
धनप्रदो धर्मगोप्ता नम्रो नष्टार्थलाभदः ॥ ९ ॥
परशक्तिः पापहर्ता फलदः फणिसूत्रभृत् ॥
बंधछिद्बलवज्जेता भयकृद्भयहृद्भवः ॥ १० ॥
मत्तहा माहुरस्थानो यज्ञभोक्ता यदूद्वहः ॥
रसदो रिपुसंहर्ता लाभदो लयसिद्धिदः ॥ ११ ॥
वशी वरेण्यो वरदः शांतः श्रीपुरभिक्षुकः ॥
षड्बाहुः षण्मतगतिः संसारारिश्च सद्गगः ॥ १२ ॥
हर्षप्रदो हिताशंसी ळांतार्णो ळविवर्जितः ॥
क्षराक्षरातिगः क्षंता ज्ञानदो ज्ञानिसद्गतिः ॥ १३ ॥
एवं वर्णक्रमेणेदं श्रीदत्तस्य महात्मनः ॥
अष्टोत्तरशतं नाम्नां प्रसीदेत्पठतां प्रभुः ॥ १४ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
दत्तात्रेयाष्टोत्तरनामस्तोत्रं संपूर्णम् ॥

---

## १२८ दत्तभजनम्

( दत्तपुराणान्तर्गतप्रत्यध्यायतात्पर्यम् )

वेदपादनुततोषित दत्त १. आवितशास्त्रविरोधक दत्त २. संमत-वेदशिरोमत दत्त ३. संपृष्टेश्वरसत्क्रिय दत्त ४. कर्मेद्धतत्वज्ञापक दत्त ५. स्मृतितः सन्निधिकारक दत्त, सह्यमहीधरवासिन्दत्त, काशी-गंगास्नायिन्दत्त, कमलापत्तनभिक्षुकदत्त, शांडिल्यानुग्राहक दत्त ६. योगाष्टांगज्ञेश्वर दत्त ७. योगफलाभिज्ञेश्वर दत्त ८. शिक्षितपातंजल-प्रद दत्त ९. अर्पितसायुज्यामृत दत्त १०. विक्षेपावृतिवर्जित दत्त, असंग अक्रिय अविकृत दत्त, स्वाश्रयशक्त्युद्बोधक दत्त, स्वैकांशाहित-विश्वक दत्त, जीवेश्वरतास्वीकृतदत्त, व्यष्टिसमष्ट्यंतर्गतदत्त, गुणतो रूप-त्रयधरदत्त, नानाकर्मगतिप्रददत्त ११. स्वभक्तमायानाशक दत्त १२. अनसूयात्र्याल्हादक दत्त १३. मत्स्याद्यवतारात्मक दत्त १४. प्रल्हा-दानुग्राहक दत्त. असुरसुरोरगशिक्षक दत्त १५. ज्ञानकांडसंदर्शक दत्त १६ नवविधभक्तिपरायणदत्त, स्वमंत्रजापकतारक दत्त १७. योगभ्रष्ट-द्विजनुतदत्त, सतीमाहात्म्यप्रमुदित दत्त, सत्यनसूयात्र्यर्भक दत्त १८. कृतवीर्यानुग्राहक दत्त १९. जंभाख्यासुरघातक दत्त, देवेंद्राभीष्टार्पक दत्त, अर्जुनहृद्यवरप्रददत्त २०. मोक्षेच्छ्वर्जुनसंस्तुत दत्त, शिल्पज्ञो-द्धतिशंसक दत्त, कामशास्त्रविज्ञापक दत्त, सप्तग्रहविद्रावक दत्त २१. विष्णदत्तवरदायक दत्त २२. कर्मविपाकख्यापक दत्त, झुटिंगपीडाहारक दत्त २३. भीतप्राज्ञाल्हादक दत्त २४. श्रवणादिविधिद्योतक दत्त २५. सयोगविज्ञानार्पक दत्त २६. विमुक्तचर्याजल्पक दत्त २७. शक्तभक्त-हितयोजक दत्त २८. भार्गवरामाल्हादक दत्त २९. अर्जुनसायुज्यप्रद दत्त ३०. रेणुकाभीष्टार्थप्रद दत्त ३१. पातितभूपकदंबक दत्त ३२. ऋतध्वजानुग्राहक दत्त ३३. मदालसानुग्राहकदत्त ३४. अलर्कराज्यो-

त्कर्षकदत्त ३५. अलर्कराज्यत्याजकदत्त ३६. योगसिद्धिसंदर्शकदत्त ३७ योगसुचर्याभाषकदत्त ३८. मृत्युलक्ष्मसंजल्पकदत्त ३९. अलर्कगीतोत्तमगुणदत्त, विहितालर्कनृपाश्रयदत्त ४०. आयूराजवरप्रददत्त ४१.नहुषाशेषारिष्टददत्त ४२. आयुःशोकद्रावकदत्त, इंदुमतीहृद्धर्षकदत्त ४३. प्रकटितनहुषसुतेजोदत्त, घातितहुंडासुरबलदत्त, आयुर्लिप्सापूरक दत्त ४४. यदुराजानुग्राहकदत्त, बहुगुरुतत्वग्राहकदत्त, श्रीयदुवंशाल्हादकदत्त ४५. मन्वंतरसत्कीर्तिगदत्त, सप्तद्वीपक्ष्माप्रियदत्त ४६. दिनकरवंशोत्कर्षकदत्त ४७. हिमकरवंशोद्धारकदत्त, पूरितभक्तमनोरथदत्त, उपासनाकांडप्रियदत्त ४८. देहाद्यौग्योद्बोधक दत्त, शरीरदोषादर्शकदत्त, तनुसाफल्यद्योतकदत्त, ऋचीकतपआख्यापकदत्त, भाषितसुंदासुरमृतदत्त ४९. जल्पितवैश्योत्तमगतदत्त, अभिहितविट्सुतदुर्गत दत्त ५०. नानाधर्मद्योतकदत्त ५१. निषेधविधिसंदर्शकदत्त ५२. वैष्णवधर्मादर्शकदत्त ५३. सन्माहात्म्यद्योतकदत्त ५४. माघस्नानख्यापकदत्त ५५. भाषितराक्षसमोचनदत्त, सुकृतोत्सुकजनरोचकदत्त ५६. सोमकीर्तिनृपतारकदत्त, अधर्मसाध्वसहारकदत्त, वर्णाश्रमवृषकारकदत्त, ब्रह्मचारिवृषबोधकदत्त ५७. गृहस्थधर्मद्योतकदत्त ५८. श्राद्धसुपद्धतिदर्शकदत्त ५९. दर्शितसत्तिथिनिर्णयदत्त ६०. कृतदुष्कर्मविनिर्णयदत्त, प्रायश्चित्तस्थापकदत्त ६१. कर्मविपाकज्ञापकदत्त ६२. सत्संसारद्योतकदत्त, वनस्थतपआदर्शकदत्त ६३. पंचप्रलयासंगतदत्त, संमतसंन्यासाश्रमदत्त ६४.

---

## १२९ दत्तस्तवस्तोत्रम्

भूतप्रेतपिशाचाद्या यस्य स्मरणमात्रतः ॥
दूरादेव पलायंते दत्तात्रेयं नमामि तम् ॥ १ ॥

यन्नामस्मरणाद्दैन्यं पापं तापश्च नश्यति ॥
भीतिग्रहार्तिदुःस्वप्नं दत्तात्रेयं नमामि तम् ॥ २ ॥
दद्रुस्फोटककुष्ठादि महामारी विषूचिका ॥
नश्यंत्यन्येऽपि रोगाश्च दत्तात्रेयं नमामि तम् ॥ ३ ॥
संगजा देशकालोत्था अपि सांक्रमिका गदाः ॥
शाम्यंति यत्स्मरणतो दत्तात्रेयं नमामि तम् ॥ ४ ॥
सर्पवृश्चिकदष्टानां विषार्तानां शरीरिणाम् ॥
यन्नाम शांतिदं शीघ्रं दत्तात्रेयं नमामि तम् ॥ ५ ॥
त्रिविधोत्पातशमनं विविधारिष्टनाशनम् ॥
यन्नाम क्रूरभीतिघ्नं दत्तात्रेयं नमामि तम् ॥ ६ ॥
वैर्यादिकृतमंत्रादिप्रयोगा यस्य कीर्तनात् ॥
नश्यंति देवबाधाश्च दत्तात्रेयं नमामि तम् ॥ ७ ॥
यच्छिष्यस्मरणात्सद्यो गतनष्टादि लभ्यते ॥
य ईशः सर्वतस्त्राता दत्तात्रेयं नमामि तम् ॥ ८ ॥
जयलाभयशःकामदातुर्दत्तस्य यः स्तवं ॥
भोगमोक्षप्रदस्येमं पठेद्दत्तप्रियो भवेत् ॥ ९ ॥

इति. श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
दत्तस्तवस्तोत्रं संपूर्णम्

---

## १३० पंचमाष्टकस्थालर्ककृतस्तोत्रम्

वन्दे देवं हेत्वात्मानं सच्चिद्रूपं सर्वात्मानं ॥
विश्वाधारं मुन्याकारं स्वेच्छाचारं वाग्हृद्दूरम् ॥ १ ॥
विश्वोपाध्या यो ब्रह्मेशोऽविद्योपाध्याप्यात्मानीशः ॥
तत्वज्ञानान्मायानाशे तर्ह्येकस्त्वं नेशोऽनशिः ॥ २ ॥

रज्ज्वज्ञानात्सर्पस्तत्र भ्रान्त्या भातीशैवं ह्यत्र ॥
जीवभ्रान्तिस्त्वेषा मिथ्या सा मेऽद्यारं नष्टाऽऽप्तोक्त्या ॥३॥
धन्योऽस्म्यद्य त्वद्दृक्पूतो जातोऽस्म्यद्य ब्रह्मीभूतः ॥
त्वं ब्रह्मैवासीशारूपो मायायोगान्नानारूपः ॥ ४ ॥
दत्तात्रेयः प्रज्ञामेयो वेदैर्गेयो योगिध्येयः ॥
त्वं विश्वात्मा कस्त्वामीशः स्तोतुं ध्यातुं ज्ञातुं वेशः ॥ ५ ॥
वृद्धः क्वापि प्रौढः क्वापि बालः क्वापि ब्रह्म क्वापि ॥
अंगी भोगी रागी क्वापि त्यागी योगी संगी क्वापि ॥ ६ ॥
स त्वं बुद्धः सिद्धः शुद्धः श्रद्धाबद्धोऽप्यन्याविद्धः ॥
श्रीशो मायाधीशो धीशो विज्ञानेशो निर्वाणेशः ॥ ७ ॥
धर्माधर्मातीतो गीतो वेदैर्भेदैर्हीनोनूनः ॥
त्वां तं संतं भक्त्या मुक्त्या ईशं त्रीशं वन्दे वन्दे ॥ ८ ॥

---

## १३१ चतुर्थाष्टकस्थार्जुनकृतस्तोत्रम्

मोहतमो मम नष्टं त्वद्वचनान्नहि कष्टम् ॥
शिष्टमिदं मयि हृष्टं हृत्परमात्मनि तुष्टम् ॥ १ ॥
ज्ञानरविर्हृदि भातः स्वावरणाख्यतमोऽतः ॥
क्वापि गतं भवदीक्षासौ खलु काममदीक्षा ॥ २ ॥
क्लेशरुजां हरणेन त्वच्चरणस्मरणेन ॥
अस्मि कृतार्थ इहेश श्रीश परेश महेश ॥ ३ ॥
प्रेयदुघं तव पादं को न भजेदविवादं ॥
दैववशाद्धृदि पेयं दर्शितवानसि मे यं ॥ ४ ॥
चित्रमिदं सदमेयः सोऽप्यभवद्धृदि मेयः ॥
देवसुरर्षिसुगेयः सोऽद्य कथं मम हेयः ॥ ५ ॥

आश्रिततापहरं तं पातकदैन्यहरं तम् ॥
नौमि शिवं भगवंतं पादमहं तव संतम् ॥ ६ ॥
यत्र जगद्भ्रम एषः कल्पित एव सशेषः ॥
भ्रान्तिलयेऽद्वय एवावेदि मयाद्य स एव ॥ ७ ॥
शान्तिपदं तव पादं स्वार्थदमाद्यमनंतम् ॥
नौमि शिवं भगवन्तं ह्यापितकामधनं तम् ॥ ८ ॥
देवोऽभावो राद्धः सिद्धः सत्यो नित्यो बुद्धः शुद्धः ॥
सर्वोपूर्वो हर्ता कर्ताऽभिन्नस्त्वं नः पाता माता ॥ ९ ॥

---

## १३२ अथ वेदपादस्तुतिः

अग्निमीळे परं देवं यज्ञस्य त्वां त्र्यधीश्वरम् ॥
स्तोमोऽयमग्रियोऽध्यस्ते हृदिस्पृगस्तु शन्तमः ॥ १ ॥
अयं देवाय दूराय गिरां स्वाध्याय सात्वताम् ॥
स्तोमोऽस्त्वनेन विन्देयं तद्विष्णोः परमं पदम् ॥ २ ॥
एता या लौकिकाः सन्तु हीना वाचोऽपि नः प्रियाः ॥
बालस्येव पितुष्टे त्वं स नो मृळ महाँ असि ॥ ३ ॥
अयं वां नात्मनोस्तत्त्वमधिगम्यास्ति दुर्मनाः ॥
हृद्रोगं मम सूर्य त्वं हरिमाणं च नाशय ॥ ४ ॥
प्रमन्महेऽस्मान्विद्धीति स्तोतारस्ते वयं नमः ॥
भगवो देव ते स्तोममारे अस्मे च शृण्वते ॥ ५ ॥
इन्द्रो मदाय यातीह सत्वरं सोमिनो यथा ॥
स्तोतॄनेहि तथाऽस्माँस्ते माध्वीर्गावो भवन्तु नः ॥ ६ ॥
द्वे विरूपेऽत्र मायायाऽस्तेऽत्र मग्नोऽस्मि पीडितः ॥
माभितः सन्तपन्तीह सपत्नीरिव पर्शवः ॥ ७ ॥

इदं श्रेष्ठमपि प्राप्य जन्म गन्ताध एव तत् ॥
कुरु प्रसादं ज्ञात्वैतत्तेनाहं भूरि चाकन ॥ ८ ॥

प्रवस्तुज्ञानाज्जहाति निष्कामश्चेन्मृतिं त्वहम् ॥
न तादृशोऽतः कामादि सर्वं रक्षो निबर्हय ॥ ९ ॥

सुषुमामूर्धियः स्तोमैरागच्छैते वयं विभो ॥
त्वदंशास्त्वं पतिर्नोऽसि देवो देवेषु मेधिरः ॥ १० ॥

वसू रूपं रूपमिह प्रतिरूपोऽसि नो पृथक् ॥
एतानि भूतानि विदुर्ब्राह्मणा ये मनीषिणः ॥ ११ ॥

तं नु त्वां किं ब्रुवेऽल्पज्ञो भगवन्तं क्षमस्व भोः ॥
ओषमागहि मां त्वं चेत्सखा सन्नातिमन्यसे ॥ १२ ॥

ता वासना घ्नन्ति यथा वृश्चिकस्यारसं विषम् ॥
अतो मां पाहि भूयिष्ठां नम उक्तिं विधेम ते ॥ १३ ॥

नि होता सीदसि विभो यस्त्वं यष्टुगृहे प्रिय ॥
तं त्वा हुवे ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते ॥ १४ ॥

सेमामविड्ढिप्रभृतिमीशिषे योऽव मानिशम् ॥
त्वं विश्वेषां यदीशानो ब्रह्मणा वेषि मे हवम् ॥ १५ ॥

मन्दः स्वकोऽयं दीनोऽज्ञ इति विद्वान्भवान्प्रभुः ॥
इन्द्र आशाभ्यः परि मां सर्वाभ्यो अभयं करत् ॥ १६ ॥

प्र य आरुपितां भ्रान्तिं त्वत्प्रसादाज्जहाति सः ॥
विमुच्यते तद्विप्रास्त्वां जागृवांसः समिन्धते ॥ १७ ॥

इच्छन्ति देवा अपि ते प्रसादाय नृजन्म तत् ॥
विद्वान्नामानि ते दत्त विश्वाभिर्गीर्भिरीमहे ॥ १८ ॥

इन्द्र त्वा भजतः सूरेर्दुर्लभं किं तरामि तत् ॥
भक्त्या क्लेशादि ते नावा गंभीराँ उदधींरिव ॥ १९ ॥

न ता रोद्धुं धियः शक्ता योगेनाऽपि ततः सदा ॥
त्रातारं धीमहीश त्वां धियो यो नः प्रचोदयात् ॥ २० ॥

वैश्वानराय दत्वान्नं विधिलब्धं सदैव ते ॥
भवामो भजने सक्ता अस्माकं शृणुधी हवम् ॥ २१ ॥

एवा त्वामिन्द्र विप्रासो जागृवांसो विपन्यवः ॥
स्तुवन्त्येभ्यो हि ते कोऽपि न जायाँ अस्ति वृत्रहन् ॥ २२ ॥

प्रऋभुभ्यो गृणद्भ्यस्ते मर्तेभ्योऽप्यमृतत्वमित् ॥
दत्तं स्मृत्वा तव मनोरथ आयातु पाजसा ॥ २३ ॥

इदमुत्यदिषं श्रेयो यज्जग्ध्वा परितृप्यति ॥
साधुस्तद्भजनं तेऽस्मे इषं स्तोतृभ्य आभर ॥ २४ ॥

त्वामग्ने मायिनं मायां जेतारमपराजितम् ॥
हित्वा कं शरणं यामः सनो बोधि श्रुधी हवम् ॥ २५ ॥

मही महेशोऽज्ञानेन भवानवतु मावृतम् ॥
यथा वै सूर्यं स्वर्भानुस्तमस्तविध्यदासुरः ॥ २६ ॥

प्रयञ्जती यदात्मानं मनीषा मनसा सह ॥
तदैव भवतैकान्तं जानता संगमेमहि ॥ २७ ॥

ऋतस्य गोपास्त्वं देहि मह्यं शं युञ्जते धियः ॥
भीताय नाधमानाय ऋषये सप्तवध्रये ॥ २८ ॥

त्वं हि पाताऽसि नो दत्त परिबाधस्व दुष्कृतम् ॥
कामादीन्यस्य बीजानि जहि रक्षांसि सुक्रतो ॥ २९ ॥

पिबा सोममिति श्रुत्वा यष्टुर्हूतिं शुभं द्रवत् ॥
आयासि पुरुरूप त्वमासु गोषूपपृच्यताम् ॥ ३० ॥

इन्द्रं वोतान्यं न पृथङ् मन्ये मायाभिरिद्भवान् ॥
पुरुरूप इतीक्षे त्वममित्राँ सुषहाङ्कृधि ॥ ३१ ॥
यज्ञा यज्ञाधीश सर्वे त्वन्मया अपि तेषु नः ॥
जपयज्ञो मतस्तेन समु पूष्णा गमेमहि ॥ ३२ ॥
स्तुषे नराप्यं तुष्टः सन्नथो यस्या अयोमुखम् ॥
मायां जित्वा भवान्तां मे विश्वाहा शर्म यच्छतु ॥ ३३ ॥
जुषस्व स्तोममीशैते प्रियासः सन्तु सूरयः ॥
वयं स्तोम प्रियानेन यच्छा नः शर्म दीर्घश्रुत् ॥ ३४ ॥
उग्रो जज्ञे मृत्युरयमदुग्धा इव धेनवः ॥
धियो मेऽनेनेहगीश न जातो न जनिष्यते ॥ ३५ ॥
प्रब्रह्मैहीदमाकर्ण्योर्वारुकमिव बन्धनात् ॥
मृत्युं जय प्रमादाख्यान्मृत्योर्मुक्षीय माऽमृतात् ॥ ३६ ॥
यदद्य वर्ष्म ते नैव पश्येम शरदः शतम् ॥
स्तोत्राय ते हते मृत्यौ जीवेम शरदः शतम् ॥ ३७ ॥
प्रत्युत्तमं महेशं त्वां मनामह इहागहि ॥
मृळा सुक्षत्र मृळय मा नो दुःशंस ईशत ॥ ३८ ॥
तिस्रो वाचस्तेऽत्र वरां क ईशानं न याचिषत् ॥
भक्त्या गृणीमस्त्वां स्तोत्रैस्तेभिर्न स्तूयमागहि ॥ ३९ ॥
दूराद्विहाय सर्वं त्वामृषयो ये च तुष्टुवुः ॥
मर्ता अमर्त्यस्य ते तद्भूरि नाम मनामहे ॥ ४० ॥
य इन्द्र त्वं यो नमसा स्वध्वरो हीति संस्तुतः ॥
इन्द्रो ब्रह्मेन्द्र ऋषिरित्युपब्रह्माणि नः शृणु ॥ ४१ ॥
वयमु त्वा वरं देवमस्मभ्यं शर्म सप्रथः ॥
मनामहे पृणंतं तदभित्वामिन्द्र नोनुमः ॥ ४२ ॥

प्रकृतान्यपि सूक्तानि शृण्वन्तं जातवेदसम् ॥
त्वां गृणन्ति न के त्वं हि येषामिन्द्रो युवा सखा ॥ ४३ ॥

त्वावतः पाहि नो मर्त्यान्यत इन्द्र भयामहे ॥
आदिश्य पदभक्तिं ते ततो नो अभयं कृधि ॥ ४४ ॥

आत्वा रथं न तुरगैः स्तोत्रैस्त्वा वर्तयामसि ॥
स त्वं न इन्द्र मृळय यस्य ते स्वादु सख्यमित् ॥ ४५ ॥

आ प्रबोधं भवोऽबोधः स्वप्नवद्दुःखदोऽशुचिः ॥
ततितान् दुःखितान्नृन्नः पाहि त्वं शृणुधी गिरः ॥ ४६ ॥

इन्द्राय साम ते गातुं न क्षमो नाम ते गृणे ॥
बण्महाँऽअसि सूर्य त्वं सत्रादेव महाँऽअसि ॥ ४७ ॥

सोमः पुनानोंतारामो मया त्वं नाधिरक्षितः॥
ईक्षे तुच्छान्बहिर्भोगान्योषा जारमिव प्रियम् ॥ ४८ ॥

प्रण इन्दोरपि स्मेरं रूपं ते दर्शयामलम् ॥
नृन्स्तोतॄन्पाह्यंहसो नो जहि रक्षांसि सुक्रतो ॥ ४९ ॥

हिन्वन्ति द्वैतमस्त्यस्माद्भयं विन्दति मामिह ॥
यदन्ति दूरके यच्च पवमान वि तज्जहि ॥ ५० ॥

धर्ता कारकशक्तीनां सर्वेषां त्वमिहैक इत् ॥
यशोऽत्रेदं पवित्रं ते विततं ब्रह्मणस्पते ॥ ५१ ॥

असर्जि भवता विश्वमनित्यमवशं बृहत् ॥
त्वं संस्मर त्वच्छरण वत्सं जातं न धेनवः ॥ ५२ ॥

पुरोजितीश भो भूमन्तत्र माममृतं कृधि ॥
यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ॥ ५३ ॥

अयं स इति विद्वान्त्सन्यमाय घृतवद्धविः ॥
कुतो जुहोम्यतोऽदेवा यमाय जुहुता हविः ॥ ५४ ॥

निवर्तध्वमितो देवा भद्रं नो अपि वातय ॥
मनो हरे मां पाह्यार्तं पिता पुत्रमिव प्रियम् ॥ ५५ ॥
प्रमा प्रमाता प्रमेयं त्रिपुटीह न विद्यते ॥
रूपं तेऽविकृतं सत्वं मधुमन्मे परायणम् ॥ ५६ ॥
प्रहोतारोऽत्रैव मनोन्वाहुवामह इज्यतः ॥
गमादि मनसो नास्य यो यज्ञस्य प्रसाधनः ॥ ५७ ॥
ये यज्ञेनार्चन्त्यनेन सर्वे नन्दंति ते त्वया ॥
नान्येऽतस्त्वप्रिया एव विरूपासो दिवस्परि ॥ ५८ ॥
देवानां नु वशे योऽस्य सुमङ्गलीरियं वधूः ॥
स्नेहेषु त्वच्च्युतो भोगी पतिर्बन्धेषु बध्यते ॥ ५९ ॥
विहितं सर्वमित्ते त्वमतो ज्यायांश्च पूरुषः ॥
पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ॥ ६० ॥
ह्ये जाये इति वदन्या सालावृकहृत्समा ॥
तन्मयो न स वेदामुमात्मानं तव पूरुष ॥ ६१ ॥
उभा उपाधितोऽत्रैकः पाकेत मनसान्वितः ॥
त्वां यदीक्षेत तं माता रेह्ळि स उ रेह्ळि मातरम् ॥ ६२ ॥
तदिदात्मन्हृदि वपुः पश्यन्तस्ते मनीषया ॥
मुनयो वातरशनाः पिशङ्गा वसतेऽमलाः ॥ ६३ ॥
स्वं चिन्मयं बुवा रूपं संजानाना उपासते ॥
यो अस्य पारे रजसः स नः पर्षदतिद्विषः ॥ ६४ ॥
इषे त्वोर्जे चौदनेन नित्यहोमेऽपि गव्यतः ॥
यजन्त्यहं त्वकामस्त्वां श्रेष्ठतमाय कर्मणे ॥ ६५ ॥
अग्न आयाहीति गातुं त्वाऽक्षमः स्तौमि केवलम् ॥
निषीद मे हृदि यथा निहोता सत्सि बर्हिषि ॥ ६६ ॥

शं नो देवीः प्रसादात्ते संतु धीवृत्तयोऽनिशम् ॥
आत्मप्रवाहाः स्वारस्याच्छंयोरभिस्रवन्तु नः ॥ ६७ ॥

ज्ञातेऽस्मिन्पाशमुक्तिः सकलविदिति तत्स्यादनिर्देश्यमेकम् ।
सूक्ष्मं चातीन्द्रियं सत्तदयमिति गिरा शाब्दनिर्देश्यमेव ॥
वाक्यैस्तत्त्वं विरोधेऽपि सति सुमतिभिःसोऽयमित्यादिवत्तद्-
भागत्यागेन लक्ष्यं वरगुरुकृपया लभ्यमैक्यं हि तज्ज्ञैः ॥ ६८ ॥

इति श्री. प. प. वासुदेवानंदसरस्वतीविरचिता
श्रीदत्तपुराणान्तर्गतवेदपादस्तुतिः संपूर्णा ॥

---

## १३३ मंत्रात्मकश्लोकाः॥

अनसूयात्रिसंभूतो दत्तात्रेयो दिगंबरः ॥
स्मर्तृगामी स्वभक्तानामुद्धर्ता भव संकटात् ॥ १ ॥

दरिद्रविप्रगेहे यः शाकं भुक्त्वोत्तमाश्रियं ॥
ददौ श्रीदत्तदेवः स दारिद्र्याच्छ्रीप्रदोऽवतु ॥ २ ॥

दूरीकृत्य पिशाचार्तिं जीवयित्वा मृतं सुतम् ॥
योऽभूदभीष्टदः पातु स नः संतानवृद्धिकृत् ॥ ३ ॥

जीवयामास भर्तारं मृतं सत्या हि मृत्युहा ॥
मृत्युंजयः स योगींद्रः सौभाग्यं मे प्रयच्छतु ॥ ४ ॥

अत्रेरात्मप्रदानेन यो मुक्तो भगवानृणात् ॥
दत्तात्रेयं तमीशानं नमामि ऋणमुक्तये ॥ ५ ॥

जपेच्छ्लोकमिमं देवपित्रर्षिपुंनृणापहं ॥
सोऽनृणो दत्तकृपया परंब्रह्माधिगच्छति ॥ ६ ॥

अत्रिपुत्रो महातेजा दत्तात्रेयो महामुनिः ॥
तस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ ७ ॥

नमस्ते भगवन्देव दत्तात्रेय जगत्प्रभो
सर्वबाधाप्रशमनं कुरु शांतिं प्रयच्छ मे ॥ ८ ॥
अनसूयासुत श्रीश जनपातकनाशन ॥
दिगंबर नमो नित्यं तुभ्यं मे वरदो भव ॥ ९ ॥
श्रीविष्णोरवतारोऽयं दत्तात्रेयो दिगंबरः ॥
मालाकमंडलूच्छूलडमरूशङ्खचक्रधृक् ॥ १० ॥
नमस्ते शारदे देवि सरस्वति मतिप्रदे ॥
वस त्वं मम जिह्वाग्रे सर्वविद्याप्रदा भव ॥ ११ ॥
दत्तात्रेयं प्रपद्ये शरणमनुदिनं दीनबंधुं मुकुंदम्
नैर्गुण्ये संनिविष्टं पथि परमपदं बोधयंतं मुनीनाम् ॥
भस्माभ्यङ्गं जटाभिः सुललितमुकुटं दिक्पटं दिव्यरूपं
सह्याद्रौ नित्यवासं प्रमुदितममलं सद्गुरुं चारुशीलम् ॥ १२ ॥

## १३४ श्रीनृसिंहसरस्वतीस्तोत्रं ॥

कोट्यर्कभं कोटिसुचंद्रशांतं विश्वाश्रयं देवगणार्चितांघ्रिं ॥
भक्तप्रियं त्वात्रिसुतं वरेण्यं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ १ ॥
मायातमोर्कं विगुणं गुणाढ्यं श्रीवल्लभं स्वीकृतभिक्षुवेषं ॥
सद्भक्तसेव्यं वरदं वरिष्ठं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ २ ॥
कामादिषण्मत्तगजांकुशं त्वामानंदकंदं परतत्वरूपम् ॥
सद्धर्मगुप्त्यै विधृतावतारं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ३ ॥
सूर्येंदुगुं सज्जनकामधेनुं मृषोद्यपंचात्मकविश्वमस्मात् ॥
उदेति यस्मिन्नमतेस्तमेति वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ४ ॥
रक्ताब्जपत्रायतकांतनेत्रं सद्दंडकुंडीपरिहापिताघं ॥
श्रितस्मितज्योत्स्नमुखेंदुशोभं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ५ ॥

नित्यं त्रयीमृग्यपदाब्जधूलिं निनादसार्द्धं द्विकलास्वरूपम् ॥
त्रितापकल्पाश्रितकल्पवृक्षं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ६ ॥

दैन्यादिभीकष्टदवाग्निमीड्यं योगाष्टकज्ञानसमर्पणोत्कं ॥
कृष्णानदीपंचसरिद्युतिस्थं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ७ ॥

स्तोत्रे क ते मेस्त्युरुगायशक्तिश्चतुर्मुखो वै विमुखोऽत्र जातः ॥
स्तुवन्द्विजिह्वोभवदीरयन्त्वां वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ८ ॥

श्रीनृसिंहसरस्वतीस्तोत्रं संपूर्णम् ॥

---

## १३५ श्रीनृसिंहसरस्वतीस्तोत्रं

प्राग्ब्रह्म त्वमजोऽक्रियोऽपि बहुलं स्यामित्यभूद्धीस्तया
सृष्ट्वैवांडभुवं ततो जगदिदं सृष्टं सधर्मं गुणैः ॥
स्वैः स्वं भो रमयन्विहंसि सदरीनत्रावतीर्यानिशम्
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ १ ॥

कल्याकृष्टहृदुज्झितक्रतुनरत्रस्ताध्वराशीर्मुदे
प्रातः सूर्य इवोदितोस्यज महामोहांधकारं ग्रसन् ॥
सद्धर्माश्रमसेतुमत्र शिथिलप्रायं सुदार्ढ्यं नयन्
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ २ ॥

सर्वानंदनिधानरूपममलं स, त्वं सुखं मूर्तिमत्
प्रादुष्कृत्य जनांतरमृगक्रीडावनं पावनम् ॥
संसारावटमग्नमुद्धरसि भो स्वीकृत्य तुर्याश्रमं
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ३ ॥

मूके गां दृशमंधके सुतनयं वंध्यासु चासून्मृते
सौभाग्यं विधवासु पल्लवमहो दत्तं सुशुष्केंधने ॥
एवंभूत इयान्तवैष महिमा त्रैलोक्यसंस्थाक्षमो
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ४ ॥

मुक्तावास मुमुक्षुकल्पविटपिन्भो कामिनां कामधुक्
दारिद्र्यानलमेघ दुष्कृतदवाग्ने तापिताराम ते ॥
श्रुत्यन्विष्टरजः पदं श्रुतविवादातीततत्वं महद्
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ५ ॥

भो योगीश्वर भावितं तव पदं तीर्थाश्रयं सज्जना-
जीवं कामिसुदैवतं च कमलालीलास्थलं निर्मलं ॥
विद्वद्वादकरंडकं सुकृतसंस्थानं महत्पात्रनम्
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ६ ॥

वेदागोचर ते चरित्रममलं शक्तोऽत्र कः कृत्स्नशो
वक्तुं वन्ह्यविनेंदुभूखपवनात्मेतीह मूर्त्यष्टकम् ॥
एतद्विश्वमयं च नान्यदिह वा ॐकाररूपेशित-
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ७ ॥

कुंडीदंडकरं प्रशांतममलं संन्यासिरूपं तव
श्रीभीमामरजायुतिस्थितमजं ध्येयं शरण्यं मयि ॥
ज्ञानं तारकमीश सत्यमनिशं ब्रह्मन्स्थिरीकुर्वदो
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ८ ॥

श्रीनृसिंहसरस्वतीस्तोत्रं सपूर्णम् ॥

---

## १३६ मानसपूजा

परानंदमयो विष्णुर्हृत्स्थो वेद्योप्यतींद्रियः ॥
सदा संपूज्यते भक्तैर्भगवान्भक्तिभावनः ॥ १ ॥
अचिंत्यस्य कुतो ध्यानं कूटस्थाऽऽवाहनं कुतः ॥
क्वासनं विश्वसंस्थस्य पाद्यं पूतात्मनः कुतः ॥ २ ॥
क्वानर्घोरुक्रमस्यार्घ्यं विष्णोराचमनं कुतः ॥
निर्मलस्य कुतः स्नानं क्व निरावरणेऽबरम् ॥ ३ ॥
स्वसूत्रस्य कुतः सूत्रं निर्लेपस्य च लेपनम् ॥
निस्तृषः सुमनोभिः किं किमक्लेद्यस्य धूपतः ॥ ४ ॥
स्वप्रकाशस्य दीपैः किं किं भक्ष्याद्यैर्जगद्भृतः ॥
किं देयं परितृप्तस्य विराजः क्व प्रदक्षिणाः ॥ ५ ॥
किमनंतस्य नतिभिः स्तौति को वागगोचरम् ॥
अंतर्बहिः प्रपूर्णस्य कथमुद्वासनं भवेत् ॥ ६ ॥
सर्वतोपीत्यसंभाव्यो भाव्यते भक्तिभावनः ॥
सेव्यसेवकभावेन भक्तैर्लीलानृविग्रहः ॥ ७ ॥
तवेशातींद्रियस्यापि पारंपर्याश्रुतां तनुम् ॥
प्रकल्प्याश्मादावर्चंति प्रार्चयेर्चां मनोमयीम् ॥ ८ ॥
कलसुश्लोकगीतेन भगवन्दत्त जागृहि ॥
भक्तवत्सल सामीप्यं कुरु मे मानसार्चने ॥ ९ ॥
श्रीदत्तं खेचरीमुद्रामुद्रितं योगिसद्गुरुम् ॥
सिद्धासनस्थं ध्यायेऽभीवरप्रदकरं हरिम् ॥ १० ॥
दत्तात्रेयाह्वयाम्यत्र परिवारैः सहार्चने ॥
श्रद्धाभक्त्येश्वरागच्छ ध्यातधाम्नांजसा विभो ॥ ११ ॥

सौवर्णं रत्नजडितं कल्पितं देवतामयम् ॥
रम्यं सिंहासनं दत्त तत्रोपविश यंत्रिते ॥ १२ ॥

पाद्यं चंदनकर्पूरसुरभि स्वादु वारि ते ॥
गृहाण कल्पितं तेन दत्तांघ्री क्षालयामि ते ॥ १३ ॥

गंधाब्जतुलसीबिल्वशमीपत्राक्षतान्वितम् ॥
सांबवर्घ्यं स्वर्णपात्रेण कल्पितं दत्त गृह्यताम् ॥ १४ ॥

सुस्वाद्वाचमनीयांबु हैमपात्रेण कल्पितम् ॥
तुभ्यमाचम्यतां दत्त मधुपर्कं गृहाण च ॥ १५ ॥

पुष्पवासितसत्तैलमंगेष्वालिप्य दत्त भोः ॥
पंचामृतैश्च गंगाद्भिः स्नानं ते कल्पयाम्यहम् ॥ १६ ॥

भक्त्या दिगंबराचांत जलेदं दत्त कल्पितम् ॥
काषायपरिधानं तद् गृहाणैणेयचर्म च ॥ १७ ॥

नानासूत्रधरैते ते ब्रह्मसूत्रे प्रकल्पिते ॥
गृहाण देवतमये श्रीदत्त नवतंतुके ॥ १८ ॥

भूतिमृत्स्नासुकस्तूरीकेशरान्वितचंदनम् ॥
रत्नाक्षताः कल्पितास्त्वामलंकुर्वेथ दत्त तैः ॥ १९ ॥

सच्छमीबिल्वतुलसीपत्रैः सौगंधिकैः सुमैः ॥
मनसा कल्पितैर्नानाविधैर्दत्तार्चयाम्यहम् ॥ २० ॥

लाक्षासिताभ्रश्रीवासश्रीखंडागुरुगुग्गुलैः ॥
युक्तोऽग्नियोजितो धूपो हृदा स्वीकुरु दत्त तम् ॥ २१ ॥

स्वर्णपात्रे गोघृताक्तवर्तिप्रज्वलितं हृदा ॥
दीपं दत्त सकर्पूरं गृहाण स्वप्रकाशक ॥ २२ ॥

सषड्रसं षड्विधान्नं नैवेद्यं गव्यसंयुतम् ॥
कल्पितं हैमपात्रे ते भुंक्ष्व दत्तांब्वदः पिब ॥ २३ ॥
प्रक्षाल्यास्यं करौ चाद्भिर्दत्ताचम्य प्रगृह्यताम् ॥
तांबूलं दक्षिणां हैमीं कल्पितानि फलानि च ॥ २४ ॥
नीराज्य रत्नदीपैस्त्वां प्रणम्य मनसा च ते ॥
परितस्त्वत्कथोद्धातैः कुर्वे दत्त प्रदाक्षिणाः ॥ २५ ॥
मंत्रवन्निहितो मूर्ध्नि दत्त ते कुसुमांजलिः ॥
कल्प्यंते मनस गीतवाद्यनृत्योपचारकाः ॥ २६ ॥
प्रेर्यमाणप्रेरकेण त्वया दत्तेरितेन ते ॥
कृतेयं मनसा पूजा श्रीमंस्तुष्टो भवानया ॥ २७ ॥
दत्त मानसतल्पे मे सुखनिद्रां रहः कुरु ॥
रम्ये व्यायतभक्त्यामतूलिकाढ्ये सुवीजिते ॥ २८ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
श्रीदत्तात्रेयमानसपूजा संपूर्णा ॥

---

## १३७ श्रीदत्तात्रेयापराधक्षमापनस्तोत्रम् ॥

रसज्ञा वशा तारकं स्वादु लभ्यं गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ १ ॥
वियोन्यंतरे देवदार्ढ्याद्विभो प्राग्गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ २ ॥
मया मातृगर्भस्थितिप्राप्तकष्टाद्गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ३ ॥
मया जातमात्रेण संमोहितेन गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ४ ॥

मया क्रीडमासक्तचित्तेन बाल्ये गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ५ ॥

मया यौवनेऽज्ञानतो भोगतोषाद्गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ६ ॥

मया स्थाविरेऽनिघ्नसर्वेंद्रियेण गृहीतं कदाचिन्न ते नाम दत्त ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ७ ॥

हृषीकेश मे वाङ्मनःकायजातं हरेऽज्ञानतो ज्ञानतो विश्वसाक्षिन् ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ८ ॥

स्मृतो ध्यात आवाहितोऽस्यर्चितो नो न गीतः स्तुतो वंदितो नो न जप्तः ॥
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥ ९ ॥

दयाब्धिर्भवाद्दङ्न सागाश्च मादृग्भवत्याप्तमंतोर्भवान्मे शरण्यः ॥
यथालंबनं भूर्हि भूनिःसृतांघ्रेरिति प्रार्थितं दत्तशिष्येण सारं ॥ १० ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तात्रेयापराधक्षमापनस्तोत्रं संपूर्णम् ॥

---

## १३८ दकारादिदत्तात्रेयाष्टोत्तरशतनामस्तोत्रम्

दत्तं वंदे दशातीतं दयाब्धिं दहनं दमम् ॥
दक्षं दरघ्नं दस्युघ्नं दर्शं दर्पहरं दवम् ॥ १ ॥

दातारं दारुणं दान्तं दास्यादं दानतोषणम् ॥
दानं दानप्रियं दावं दासत्रं दारवर्जितम् ॥ २ ॥

दिक्पं दिवसपं दिक्स्थं दिव्ययोगं दिगंबरम् ॥
दिव्यं दिष्टं दिनं दिश्यं दिव्यांगं दितिजार्चितम् ॥ ३ ॥

दीनपं दीधितिं दीप्तं दीर्घं दीप्तं च दीप्तगुम् ॥
दीनसेव्यं दीनबंधुं दीक्षादं दीक्षितोत्तमम् ॥ ४ ॥
दुर्ज्ञेयं दुर्ग्रहं दुर्गं दुर्गेशं दुःखभंजनम् ॥
दुष्टघ्नं दुग्धपं दुःखं दुर्वासोग्र्यं दुरासदम् ॥ ५ ॥
दूतं दूतप्रियं दूष्यं दूष्यत्रं दूरदर्शिपम् ॥
दूरं दूरतरं दूर्वाभं दूरांगं च दूरगम् ॥ ६ ॥
देवार्च्यं देवपं देवं देयज्ञं देवतोत्तमम् ॥
देवज्ञं देहिनं देशं देशिकं देहिजीवनम् ॥ ७ ॥
दैन्यं दैन्यहरं दैवं दैन्यदं दैविकांतकम् ॥
दैत्यघ्नं दैवतं दैर्घ्यं दैवज्ञं दैहिकार्तिदम् ॥ ८ ॥
दोषघ्नं दोषदं दोषं दोषित्रं दोर्द्वयान्वितम् ॥
दोषज्ञं दोहपं दोषेट्बंधुं दोर्ज्ञं च दोहदम् ॥ ९ ॥
दौरात्म्यघ्नं दौर्मनस्यहरं दौर्भाग्यमोचनम् ॥
दौष्ट्यत्रं दौष्कुल्यदोषहरं दौर्हृद्यभंजनम् ॥ १० ॥
दंडज्ञं दंडिनं दंडं दंभघ्नं दंभिशासनम् ॥
दंत्यास्यं दंतुरं दंशिघ्नं दंडघ्नं च दंडदम् ॥ ११ ॥
अनंतानंतनामानि संति तेऽनंतविक्रम ॥
वेदोऽपि चकितो यत्र नुर्वाग्दूदूर का कथा ॥ १२ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
दकारादिदत्तात्रेयाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

---

## १३९. श्रीगुरुचरिताध्यायसारांशश्लोकाः ॥

अध्याये प्रथम इहेष्टवन्दनाख्यं
प्रोक्तं मंगलमथ नामधारकाख्यम् ॥
प्राप्येष्टं स्तुत इह धाम हर्षणीयं
दत्तोदर्शयदु तनुः प्रहर्षिणीयम् ॥ १ ॥

प्रसिद्धः सृष्टियुगस्थितीरिह जगौ सर्गे द्वितीये विधेः
संवादं कलिना च दीपकगुरूपाख्यानकं सद्विधेः ॥
यत्राकारि हि दीपकेन गुरुसत्सेवाख्यविक्रीडितं
कुर्यात्कोऽत्र तथा करोत्यपि शशः शार्दूलविक्रीडितम् ॥ २ ॥

तृतीयेऽध्यायेऽभोनशनमिति मौनेः प्रथमतो-
ऽम्बरीषोपाद्विष्णुव्रतहतिभिया वैष्णवमतः ॥
प्रजानेका योनीरिति शपति दुर्वाससि हरि-
स्तमादाच्छापं यन्निजसहनताभूच्छिखरिणी ॥ ३ ॥

तुर्ये त्रीशाः सत्वहृत्यै यथान्नं
स्मेहुंतेऽदात्रानसूया तथान्नं ॥
बाला भूत्वा दुग्धमस्याः पपुस्ते ।
यत्कीर्तिर्दिक्शालिनी सर्वदाऽऽस्ते ॥ ४ ॥

दत्ताय ददौ द्विजाङ्गनान्नं श्राद्धात्पुरतः स पञ्चमेऽभूत् ॥
श्रीपादाभिधः सुतोऽन्धपङ्गूद्धृद्द्राविराडभूत्परिव्राट् ॥ ५ ॥

शिवो दशास्याय ददौ स्वलिङ्गं प्रगृह्य तस्माद्गणपस्ततस्तत् ॥
उपेन्द्रवज्रात्ममुखेरितः कौ महाबलेशं निदधौ स षष्ठे ॥ ६ ॥

भूपेन्द्रवंशोन्नतयेऽत्र सप्तमे गोकर्णमाहात्म्यमुवाच गौतमः ॥
तद्ब्रह्महत्यालयकृद्गतिं वदन् चण्डालिकायाःप्रशशंस भूभृते॥७॥

सकुसुतविधवा सा मर्तुकामा प्रदोष-
व्रतकथनत ईशस्तान्निवर्त्याष्टमेऽन्तात् ॥
स विबुधमकरोत्तज्जं च जन्मान्तरेऽस्याः
सुत इह भविता दिङ्मालिनी यस्य कीर्तिः ॥ ८ ॥

आख्यानकीर्तिश्रुतितोऽस्य मुक्ति-
र्भवान्तरेऽसौ रजकाय राज्यम् ॥
दास्यन्तिरोऽभून्नवमेऽत्र कृष्णा-
तटेऽपि संपूरयति स्वतृष्णाम् ॥ ९ ॥

पथि तस्करघातितभक्तं सार्थमजीवयदेत्य चिरस्य ॥
विनिहत्य च तान्दशमे श्रीपादतिवेगवती गतिरस्य ॥ १० ॥

एकादशे नृहरिसंज्ञक आस सोऽबा-
पुत्रः प्रदोषफलदः प्रणवं पठिष्यन् ॥
भूत्वाप्यवाक्श्रुतिगणानुपनीत ऊच
उद्धर्षणीं स्वजननीं बहुधा करिष्यन् ॥ ११ ॥

माणवकाक्रीडितकृद्द्वादश आश्वास्य विभुः ॥
मातरमेत्य च काशीं न्यास्यभवत्स निराशीः ॥ १२ ॥

प्रसूमुखैर्जनिभुवि सङ्गतः स्वकैस्त्रयोदशेऽनुगयुगुपेत्य गोतमीं ॥
मृतोत्सुकं जठररुगार्तमुद्धरन्व्यदर्शयद् भुवि रुचिरां प्रभुर्गतिम् ॥ १३ ॥

सायंदेवं शक्रमिताध्याय उवाच
त्रीशो म्लेच्छं याहि न भीस्ते स तथेति ॥
गत्वा भीतम्लेच्छनृपेणार्चित एत्य
नृत्यन् रेजे मत्तमयूरो हि यथा सः ॥ १४ ॥

चित्रपदोक्तित ईशस्तीर्थगमाय स शिष्यान् ॥
पञ्चदशे कथयित्वा तद्विधिमीरयदेव ॥ १५ ॥

षोडशे गुरुरथोद्धतात्मने धौम्यशिष्यचरितोपदेशतः ॥
ब्राह्मणाय विदमर्पयद् गुरुद्रोहिणेऽलमनुतप्तचेतसे ॥ १६ ॥

आर्यावमानितोऽदादार्यायै मूढविप्र इह जिह्वां ॥
सप्तदशे तत्प्रेरित ईशमवाप्यालभत्ततो जिह्वाम् ॥ १७ ॥

भिक्षार्थं गत्वा कुसुमितलतावेल्लितद्वारदेशं
गेहं विप्रस्य प्रभुरतिदरिद्रस्य भुक्त्वापि शाकम् ॥
छित्वा वल्लीं स्ववसतिमगात्तल्लतामूलदेशे
लेभेऽर्थौघं द्विजवर इहाष्टादशे चाशिषोऽपि ॥ १८ ॥

अमरापुर ऊनविंशकेऽनुगगङ्गानुजपा उदुंबरे ॥
वरदे स निधाय पादुके गुरुराश्वास्य च योगिनीरगात् ॥१९॥

प्रेतार्तिहृताऽर्भौ दत्तौ मृत एकः ।
वर्ण्यापतदंत्रां विंशे तनुमध्याम् ॥ २० ॥

विद्युन्मालावत्संबन्धं पुत्रादेः सन् चोक्त्वा बोधम् ॥
सत्यै चक्रे जीवोपेतं सैके विंशेऽसौ तत्पोतम् ॥ २१ ॥

गन्धर्वं प्राप्य भोमामरदुहितृयुतिं भिक्षार्थमथ गुरु-
र्गत्वा दीनद्विजौको गतरदमहिषीं वंध्यां भरवहाम् ॥
दृष्ट्वा दुग्धं ययाचे तदनु सुवदना स्त्रीः क्षीरमदुह-
द् द्वाविंशे ऽदात्पयोऽस्मै तदु वरदगुरुः पीत्वागमदसौ ॥ २२ ॥

राट् त्रयोविंश आकर्ण्य सत्तद्यशः स्रग्विणीं स्वां पुरीमानयत्तद्वशः ॥
श्रीगुरू रक्षसेऽदाद्गतिं राजवद्राजदत्ते मठे विश्ववासोऽवसत् ॥ २३ ॥

निन्दाकर्तृयतित्रिविक्रमं प्राप्य श्रीगुरुराश्वदर्शयत् ॥
सैन्यं न्यासिवपुः क्षणं चतुर्विंशे यानगराजवद्विराट् ॥२४॥

मत्तावाप्तौ श्रुतिनयविज्ञौ म्लेच्छाज्ञप्तौ द्विजविजिगीषू ॥
भिक्षुर्निन्ये श्रितशिबिकौ तौ गुर्वग्र्यं पंचसहितविंशे ॥ २५ ॥

चित्रपदोक्तिभिरीशः षड्युतविंश उवाच ॥
वेदतदङ्गविशाखा यं प्रणमन्ति हि लेखाः ॥ २६ ॥

अपि क इह यदीक्षणादपराजिताः स बुरुडवदनाच्छ्रुतीः समवाचयत् ॥
अनयदुभमिते द्विजौ च पिशाचतां सुगतिमथ गतौ च तौ द्विषदुद्रुतः ॥ २७ ॥

अकथयदसावष्टाविंशे स्वकर्मविपाकतो
विविधकुगतिं हीनत्वाप्तिं सचिह्नपुनर्भवम् ॥
तदघहतये प्रायश्चित्तं च कृच्छ्रजपादिकं
पतितमकरोद् भूयोऽङ्गं सा मनोहरिणी कथा ॥ २८ ॥

नवद्वययुते नतेन मुनिना स पृष्टोऽवदत्
विभूतिमहिमानमानतपदाम्रपायावदत् ॥
कुमारहरवादमप्यथ स वामदेवो ददौ
गतिं भसितधारणेम विधिवच्च पृथ्वीधरः ॥ २९ ॥

गोपीनाथोऽत्रिसुतभजनात्पुत्रमापोद्वहोर्ध्वं
तत्स्त्री रुग्णं तमनयदथो पत्तनं गाणगाख्यम् ॥
मन्दाक्रान्ताध्वनि स तु पुरस्योपकण्ठं ममार
त्रिंशे तत्स्त्रीनिकटमथ गतो भूतिरुद्राक्षधृक्सन् ॥ ३० ॥

स्त्रीधर्ममुवाच कुपूर्मितेऽध्याये धिषणोक्तमुपस्थिताम् ॥
विन्ध्याद्रिचरित्रसमन्विताऽगस्त्यर्षिसतीचरितं च सन् ॥ ३१ ॥

रुक्मवतीमूचे प्रणतां तामष्टसुता सौभाग्यवती स्याः ॥
प्रेतमपि द्वात्रिंश इहास्या वल्लभमाशूत्थापयदीशः ॥ ३२ ॥

भुजगशिशुभृता नीता कुलयुगिह पुराग्न्याढ्ये ॥
स्वपुरमपि सती वेश्या तत इह विकपी भूपौ ॥ ३३ ॥

कृतकरपुटराजप्रार्थितर्षिः सुतमृतिहतये रुद्राभिषेकम् ॥
श्रुतिपुरमितसर्गेकारयद्राट्तनयमुत मृतितोजीवयद्द्राक् ॥ ३४ ॥

सुरहितदकचकथा वृत्ता शरपुरमित इह सोमाख्यं ॥
व्रतमपि यत इह सीमंतिन्यलभदपि च दयितं नष्टम् ॥ ३५ ॥

तर्कपूर्युजि हलमुखी स्त्री सुशिक्षणमिषत ईट् ॥
आह्निकाचरणमवदच्छाक्त्यसंमतमु सुधिये ॥ ३६ ॥

अमिताक्षरोक्तिगुरुराह सुचिरसुरपूजनादिसकलाह्निकवित् ॥
अशनादिधर्मशयनादिविधिः स्वरपूर्मितेऽत्र हतभक्तविधिः ॥ ३७ ॥

त्रिलोकपर्याप्तकृतोदनेन संभोजिता विप्रमुखा अनेन ॥
अष्टत्रियुक्ते ह्युपजातयोऽपि भक्ताय दत्तो गुरुणा वरोऽपि ॥ ३८ ॥

नवत्रिमितसर्गे व्यधात्स्थविरवन्ध्यां ॥
कुमारललितां विप्पलार्चनत ईशः ॥ ३९ ॥

खयुगामितेऽत्र कुष्ठविनिवृत्त्यै नरहरयेऽवदत्समिदर्चां ॥
तदु विटपी द्विजश्च शुचिरासीदियमजकीर्तिरिन्नवमालिनी ॥ ४० ॥

अवददिह परीक्ष्य सायंदेवं कुयुगमिते भगवान्गुरूक्तलब्ध्यै ॥
विधिजमुपगतः सुपुष्पिताग्रागमवन आर्य उवाच काशियात्राम् ॥ ४१ ॥

वातोर्मीतिर्द्वियुगाढ्ये स सर्गे शिष्टां यात्रां कथयन्दर्शयित्वा ॥
काशीं दारादिनुतश्चानयित्वा सायंदेवं गुरुराह व्रतं सत् ॥ ४२ ॥

सायंदेवाय त्रियुगपरिमितेध्याये प्राहेशोऽनंतव्रतमिह च परत्रेष्टम् ॥
यस्याचीर्णेन व्यपगतदुरितो यायात्कौण्डिण्यः पार्थश्च सुगतिमितो-
संबाधाम् ॥ ४३ ॥

क्षणतः श्रुतिवेदसंमितेऽस्मिन्ननयद्यतिराज एकरूपः ॥
श्वयगमात्मरतं स तंतुकं चानयदाशु निवेद्य राट्चारित्रम् ॥४४॥

यद्धीरासीद्भ्रमरविलसिता नंद्यबोक्त्या कुरुगुपशमधीः ॥
प्राप्येशं द्राक्स शुचिकविरभूद् गुर्वीक्षातोऽक्षयुगमित इह॥४५॥

स्वप्न उपेत्य स आदद ईशो रसकृतयुक्त इहार्चनमग्रथम् ॥
केसरिदत्तमभूद्द्रुतमध्यात्मकपददस्य कविः स च शिष्यः ॥ ४६ ॥

दीपावल्यां संप्रार्थितः सप्तशिष्यैः
सप्तग्रामान्तत्क्षेत्रसंस्थोऽप्यगात्सः ॥
अष्टात्मा भूत्वा सप्तवेदाढ्यसर्गे
लोके यन्मूर्तिर्विश्रुता वैश्वदेवी ॥ ४७ ॥

क्षेत्रे गुरूक्तवदशेषमपक्कधान्यं
चिच्छेद शूद्र उपगां विनिवारयन्तीम् ॥
सिंहोन्नताक्ष इव चात्मवधूं निवार्य
लेभेऽमितर्धिमिभवेदयुजीशभक्त्या ॥ ४८ ॥

सर्गैकवाक्संमित इन्द्रवज्रालेपोपमाघक्षतिकृद्रागिन्याः ॥
तत्क्षेत्रमाहात्म्यमुवाच सोष्टतीर्थानि चादर्शयदत्र सभ्यः ॥४९॥

स्वशरयुते पुरोक्तरजकोभवद्यवनराज आस वृषकृत्
पृथुपिटकस्तदङ्क उदितस्तदीयशमकृद्द्विजो नृपकथाम् ॥
अवददथो ययौ स गुरुं स्मृतिं प्रथमजन्मनोऽलभदथो
गतरुगसौ सुयानगमजं गजाश्वललितं पुरं स्वमनयत् ॥ ५० ॥

राजपुरादेत्य स च नीजपीठं कीर्तिरभून्मम सुशुचिरतन्वी
स्थेयमिहातः परमिह न साक्षादित्यवर्नाषुयुजि स च विचार्य॥
स्वानपि चाश्वास्य बहुवरदानैः पुष्पकृतासनगत इदमाह
मद्भजनाद्वः सुगतिरिह तिष्ठे सत्यमितीडरमभवदहश्यः ॥५१॥

श्रवणेच्छाश्रुतानां च तदन्येषां स्मृतिर्यतः ॥
सैकपञ्चाशदध्यायसारभूतार्थमालिका ॥ ५२ ॥

तीर्णा आशु तरन्त्यस्मात्तरिष्यन्त्यघतो नराः ॥
तीर्थं गुरुचरित्राख्यमवगाह्यमिदं बुधैः ॥ ५३ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचिता
श्रीगुरुसंहिता-समश्लोकीगुरुचरिता-ध्यायसारावतरणिका संपूर्णा ॥

---

## १४० बालाशिषः

स्वांशेनेदं ततं येन स त्वमीशात्रिनन्दन ॥
मुञ्च मुञ्च विपभ्द्योऽमुं रक्ष रक्ष हरे शिशुम् ॥ १ ॥

प्रातर्मध्यन्दिने सायं निशि चाप्यथ सर्वतः ॥
दुर्दृग्गोधूलिभूतार्तिगृहमातृग्रहादिकान् ॥ २ ॥

छिन्धि छिन्ध्यखिलारिष्टं कमण्डलवरिशूलधृक् ॥
त्राहि त्राहि विभो नित्यं त्वद्रक्षालंकृतं शिशुम् ॥ ३ ॥

सुप्तं स्थितं चोपविष्टं गच्छंतं क्वापि सर्वतः ॥
भो देवावश्विनावेष कुमारो वामनामयः ॥ ४ ॥

दीर्घायुरस्तु सततं सहओजोबलान्वितः ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचिता
श्रीदत्तपुराणान्तर्गतबालाशिषः

---

## १४१ श्रीदत्तात्रेयहृदयम्

प्रल्हाद एकदारण्यं पर्यटन्मृगयामिषात् ॥
भाग्याद्ददर्श सह्याद्रौ कावेर्यां निद्रितं भुवि ॥ १ ॥
कर्माद्यैर्वर्णलिङ्गाद्यैरप्रतर्क्यं रजस्वलम् ॥
नत्वा प्राहावधूतं तं निगूढामलतेजसम् ॥ २ ॥
कथं भोगीव धत्तेऽस्वः पीनां तनुमनुद्यमः ॥
उद्योगात्स्वं ततो भोगो भोगात्पीना तनुर्भवेत् ॥ ३ ॥
शयानोऽनुद्यमोऽनीहो भवानिह तथाप्यसौ ॥
पीना तनुं कथं सिद्धो भवान्वदतु चेत्क्षमम् ॥ ४ ॥
विद्वान्दक्षोऽपि चतुरश्चित्रप्रियकथो भवान् ॥
दृष्ट्वापीह जनांश्चित्रकर्मणो वर्तते समः ॥ ५ ॥
इत्थं श्रीभगवांस्तेन प्रह्लादेनात्रिनंदनः ॥
संपृष्टः प्राह सन्तुष्टः कृपालुः प्रहसन्निव ॥ ६ ॥
श्रीनृसिंहोऽवतीर्णोत्र यदर्थं स त्वमेव हि ॥
दैत्यजोऽपि मुनिच्छात्र शृणु भागवतोत्तम ॥ ७ ॥
मन्दः स्वज्ञो भ्रमंस्तृष्णानद्येमं लोकमागतः ॥
कर्मयोगेन मुक्तिस्वर्मोहद्वारं यदृच्छया ॥ ८ ॥
निवृत्तोस्म्यत्र यततां व्यत्ययं वीक्ष्य शर्मणे ॥
आत्मनोस्य सुखं रूपं क्लिष्टे नष्टे स्वयंप्रभम् ॥ ९ ॥
ज्ञात्वा संस्पर्शजान्भोगान्दुःखात्स्वप्स्यामि दैवभुक् ॥
विस्मृत्यामुं जनः स्वार्थं सन्तं यात्युग्रसंसृतिम् ॥ १० ॥
स्वार्थं मायावृतं त्यक्त्वा तदर्थ्यन्यत्र धावति ॥
शैवालछन्नकं त्यक्त्वा यथांब्वर्थी मरीचिकाम् ॥ ११ ॥

अभाग्यस्य क्रिया मोघाः सुखप्राप्त्यै प्रयोजिताः ॥
तत्साफल्येऽप्यसद्भिः किं कार्यं मर्त्यस्य कृच्छ्रजैः ॥ १२ ॥

कामार्तेच्छोर्मोहशोकरागद्वेषश्रमादयः ॥
यतोऽजितात्मनो नैति निद्रापि भयशङ्कया ॥ १३ ॥

प्राणार्थेच्छा हि मधुकृच्छिक्षितेन मयोज्झिता ॥
राजार्थिहिंस्रचोरद्विट्कालेभ्यो न बिभेम्यतः ॥ १४ ॥

निरिच्छः परितुष्टात्मा यदृच्छालाभतोऽस्मि सन् ॥
बहुकालं शये नो चेद्विद्वान् धैर्यान्महाहिवत् ॥ १५ ॥

भूर्यल्पं स्वादु वाऽस्वादु कदन्नं मानवर्जितम् ।
समानं क्वापि भुञ्जेह्नि निशि भुक्त्वापि वा न वा ॥ १६ ॥

हरत्यन्यः पतिं हत्वा कृच्छ्राप्तं मधुवद्धनम् ॥
शिक्षितं मधुकृत्तोऽतो विरक्तोऽस्म्यपरिग्रहः ॥ १७ ॥

दैवाप्तं चर्म वल्कं वा वस्त्रं क्षौमं वसे न वा ॥
क्वचिच्छयेऽश्मभस्मादौ कशिपौ वा जने वने ॥ १८ ॥

क्वचित्स्नातोऽलंकृतोऽहं स्रग्वी सुवसनो न वा ॥
रथेभाश्वैश्चरे क्वापि मुनिवत्क्वापि मुग्धवत् ॥ १९ ॥

नाहं निन्दे न च स्तौमि स्वभावाविषमं नरं ॥
एतेषां श्रेय आशास उतैकात्म्यमथात्मनि ॥ २० ॥

ब्रह्मासक्तो ब्रह्मनिष्ठो ब्रह्मात्मा ब्रह्मधीरहम् ॥
संस्कृते ब्राह्मणेऽन्त्ये वा समदृग्गवि शुन्यपि ॥ २१ ॥

समासमाभ्यां विषमसमे पूजात ओदनम् ॥
नाद्यादित्यज्ञगृहिणो दोषो न समदृग्यतेः ॥ २२ ॥

स्वरूपेऽवासनस्तिष्ठाम्यान्वीक्षिक्यानया दिवि ॥
योऽमूमिच्छेत्तु तस्यायमुपायो विदुषः सुखः ॥ २३ ॥

हुनेद्रिकल्पं चित्तौ तां मनस्यर्थभ्रमे तु तत् ॥
वैकारिके तं मायायां तां स्वस्मिन्विरमेत्ततः ॥ २४ ॥
शुद्धः सोऽहं परात्मैक इति दाढर्ये विमुच्यते ॥
हृदयं मे सुगुप्तं ते प्रोक्तं तत्त्वं विचारय ॥ २५ ॥
इतीशेनोपदिष्टः स ज्ञात्वात्मानं प्रपूज्य च ॥
तदाज्ञप्तो ययौ राज्यं कुर्वन्नपि स दैवभुक् ॥ २६ ॥
राज्यश्रीपुत्रदाराढ्योऽप्यलिप्तः स्वात्मदृक्सदा ॥
भुक्त्वारब्धं चिरं राज्यं दत्वा पुत्रे विरोचने ॥ २७ ॥
मुक्तसंगश्चचार क्ष्मां समदृक्स गुरूक्तवत् ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तपुराणान्तर्गतं श्रीदत्तात्रेयहृदयं संपूर्णम् ॥

---

## १४२ श्रीदत्तात्रेयकवचम् ॥

श्रीपादः पातु मे पादावूरू सिद्धासनस्थितः ॥
पायाद्दिगंबरो गुह्यं नृहरिः पातु मे कटिं ॥ १ ॥
नाभिं पातु जगत्स्रष्टोदरं पातु दलोदरः ॥
कृपालुः पातु हृदयं षड्भुजः पातु मे भुजौ ॥ २ ॥
स्रक्कुंडीशूलडमरुशंखचक्रधरः करान् ॥
पातु कंठं कंबुकंठः सुमुखः पातु मे मुखम् ॥ ३ ॥
जिह्वां मे वेदवाक्पातु नेत्रे मे पातु दिव्यदृक् ॥
नासिकां पातु गंधात्मा पातु पुण्यश्रवाः श्रुती ॥ ४ ॥
ललाटं पातु हंसात्मा शिरः पातु जटाधरः ॥
कर्मेंद्रियाणि पात्वीशः पातु ज्ञानेंद्रियाण्यजः ॥ ५ ॥

सर्वांतरांतःकरणं प्राणान्मे पातु योगिराट् ॥
उपरिष्टादधस्ताच्च पृष्ठतः पार्श्वतोऽग्रजः ॥ ६ ॥

अंतर्बहिश्च मां नित्यं नानारूपधरोऽवतु ॥
वर्जितं कवचेनाव्यात्स्थानं मे दिव्यदर्शनः ॥ ७ ॥

राजतः शत्रुतो हिंस्राद् दुष्प्रयोगादितोघतः ॥
आधिव्याधिभयार्तिभ्यो दत्तात्रेयः सदावतु ॥ ८ ॥

धनधान्यगृहक्षेत्रस्त्रीपुत्रपशुकिंकरान् ।
ज्ञातींश्च पातु नित्यं मेऽनसूयानंदवर्धनः ॥ ९ ॥

बालोन्मत्तपिशाचाभो द्युनिट्संधिषु पातु मां ॥
भूतभौतिकमृत्युभ्यो हरिः पातु दिगंबरः ॥ १० ॥

य एतद्दत्तकवचं संनह्याद्भक्तिभावितः ॥
सर्वानर्थविनिर्मुक्तो ग्रहपीडाविवर्जितः ॥ ११ ॥

भूतप्रेतपिशाचाद्यैर्देवैरप्यपराजितः ॥
भुक्त्वात्र दिव्यभोगान्स देहांते तत्पदं व्रजेत् ॥ १२ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविरचितं
श्रीदत्तात्रेयकवचं संपूर्णम् ॥

---

## १४३ भजनम्

१ जगदुत्पत्तिस्थितिकारक दत्त. २ नानारूपविधारक दत्त. ३ यदूर्जुनमुखतारक दत्त. ४ कृष्णामरजातीरग दत्त. ५ गुणमयमायोद्बोधक दत्त. ६ आब्रह्माद्युत्पादक दत्त. ७ मोक्षार्हनराल्हादक दत्त. ८ गतरागद्वेषप्रिय दत्त. ९ स्वेच्छोपात्तचिदात्मक दत्त. १० स्वकथागायकतारक दत्त. ११ नामधारकप्रार्थित दत्त. १२ नामधारकाल्हादक दत्त. १३ सिद्धख्यापितसद्गुण दत्त. १४ युगमर्यादास्थापक

दत्त. १५ सद्गुरुसेवोद्बोधक दत्त. १६ गुरुशिष्यकथाशंसक दत्त. १७ दीपकाशिष्योद्धारक दत्त. १८ मानसपुत्रोत्पादक दत्त. १९ अत्रिमहर्ष्याल्हादक दत्त. २० अनसूयानुग्राहक दत्त. २१ त्रिमूर्ति-वेषविधारक दत्त. २२ निजभजकेच्छापूरक दत्त. २३ मत्स्याद्यव-तारात्मक दत्त. २४ अगनगधरणीदेशिक दत्त. २५ शिक्षितवा-गोत्तमगुण दत्त. २६ आकाशगुणग्राहक दत्त. २७ गृहीतनिर्मल-जलगुण दत्त. २८ अग्न्याचार्यपावक दत्त. २९ चंद्रच्छात्र श्रीगुरु दत्त. ३० भास्करशिष्य श्रीगुरुदत्त. ३१ कपोतशिक्षितसद्गुण दत्त. ३२ अजगरशिक्षिततोषित दत्त. ३३ समुद्रशिक्षितसद्गुण दत्त. ३४ पतंगाशिष्य श्रीगुरुदत्त. ३५ मधुकृच्छात्र श्रीगुरुदत्त. ३६ स्वीकृतदंतावलगुण दत्त. ३७ मधुहरशिष्य श्रीगुरुदत्त. ३८ मृग शिक्षोज्झितगीतक दत्त. ३९ मत्स्यच्छात्र श्रीगुरुदत्त. ४० वेश्या शिक्षास्ताशक दत्त. ४१ कुररत्यक्तपरिग्रह दत्त. ४२ बालकशिष्य श्रीगुरु दत्त. ४३ कन्याकंकणगुणवद्दत्त. ४४ गृहीतसर्वोत्तमगुण दत्त. ४५ शरकारात्तैकायन दत्त. ४६ गृहीतपेशस्कृद्गुण दत्त. ४७ वृत्तो-र्णनाभ्याचार्यक दत्त. ४८ गृहीतदेहोत्तमगुण दत्त. ४९ श्रीयदुराजो-द्धारक दत्त. ५० प्रह्लादानुग्राहक दत्त. ५१ कृतवीर्यात्मजतारक दत्त. ५२ श्रीपादश्रीवल्लभ दत्त. ५३ मातापित्राल्हादक दत्त. ५४ सहो-दरानुग्राहक दत्त. ५५ महाबळेश्वरपूजक दत्त. ५६ गोकर्णक्षेत्राश्रित दत्त. ५७ कृष्णावेणीतटगत दत्त. ५८ मूढद्विजसुततारक दत्त. ५९ शनिप्रदोषकद्योतक दत्त. ६० ब्राह्मण्यर्थितपूरित दत्त. ६१ चौरसमूहविघातक दत्त. ६२ संजीवितमृतभूसुर दत्त. ६३ प्रदोष-पूजासुफलद दत्त. ६४ नृसिंहसरस्वतीसंज्ञक दत्त. ६५ जनित-प्रणवोच्चारक दत्त. ६६ प्रकटितसर्वश्रुतिगुण दत्त. ६७ तत्त्वज्ञानो-द्बोधक दत्त. ६८ मातापित्रेष्टार्पक दत्त. ६९ काशीयात्रागामिन्दत्त.

७० स्वीकृतसंन्यासाश्रम दत्त. ७१ वेदांतार्थोद्बोधक दत्त. ७२ योगाष्टांगख्यापक दत्त. ७३ कृष्णसरस्वतीछात्रक दत्त. ७४ जननीदर्शनकारक दत्त. ७५ शुलार्तद्विजतारक दत्त. ७६ सायंदेवाल्हादक दत्त. ७७ तीर्थसुसेवाशंसक दत्त. ७८ भासितसद्गुरुसेवन दत्त. ७९ छिन्नरसज्ञाल्हादक दत्त. ८० द्विजदारिद्र्यदवानल दत्त. ८१ गंगानुजहृद्धर्षक दत्त. ८२ वंध्यादोषाशंसक दत्त. ८३ पिशाचबाधानाशक दत्त. ८४ तत्त्वज्ञानादेशक दत्त. ८५ जीवितमृतत्रिप्रात्मज दत्त. ८६ वंध्यामहिषीदोहक दत्त. ८७ राजाभीष्टसुपूरक दत्त. ८८ पिशाचतारकसद्गुरु दत्त. ८९ हृतात्रिविक्रमदुर्मद दत्त. ९० श्रुत्युपदेशकतारक दत्त. ९१ कर्मविपाकद्योतक दत्त. ९२ नारीधर्मद्योतक दत्त. ९३ संजीवितमृतभूसुर दत्त. ९४ रुद्राक्षमहित्वोदित दत्त. ९५ नार्युपदेशानिषेधक दत्त. ९६ सोमव्रतफलशंसक दत्त. ९७ कर्मकांडसंजल्पक दत्त. ९८ स्वल्पान्नर्द्धिविधारक दत्त. ९९ वंध्यादोषनिवारक दत्त. १०० शुष्ककाष्ठसंजीवक दत्त. १०१ सायंदेवोद्धारक दत्त. १०२ तंतुकभक्तिद्योतक दत्त. १०३ कविवरयुग्मोत्कर्षक दत्त. १०४ स्वीकृतसप्तकलेवर दत्त. १०५ शूद्रमनोरथपूरक दत्त. १०६ गंधर्वपुरद्योतक दत्त. १०७ रजकमनोरथपूरक दत्त. १०८ श्रीगुरुचरितवरप्रददत्त. ॥

---

## १४४ दकारादिश्रीदत्तसहस्रनामस्तोत्रम् ॥

यावद्द्वैतभ्रमस्तावन्न शान्तिर्न परं सुखं।
अतस्तदर्थं वक्ष्येऽदः सर्वात्मत्वावबोधकम्

ॐ दत्तात्रेयो दयापूर्णो दत्तो दत्तकधर्मकृत्।
दत्ताभयो दत्तधैर्यो दत्तारामो दरार्दनः ॥ १ ॥

दवो दवघ्नो दकदो दकपो दकदाधिपः ।
दकवासी दकधरो दकशायी दकप्रियः ॥ २ ॥
दत्तात्मा दत्तसर्वस्वो दत्तभद्रो दयाघनः ।
दर्पको दर्पकरुचिर्दर्पकातिशयाकृतिः ॥ ३ ॥
दर्पकी दर्पककलाभिज्ञो दर्पकपूजितः ।
दर्पकोनो दर्पकोक्षवेगहृद्दर्पकार्दनः ॥ ४ ॥
दर्पकाक्षीड् दर्पकाक्षीपूजितो दर्पकाधिभूः ।
दर्पकोपरमो दर्पमाली दर्पकदर्पकः ॥ ५ ॥
दर्पहा दर्पदो दर्पत्यागी दर्पातिगो दमी ।
दर्भधृग्दर्भकृद्दर्भी दर्भस्थो दर्भपीठगः ॥ ६ ॥
दनुप्रियो दनुस्तुत्यो दनुजात्मजमोहहृत् ।
दनुजघ्नो दनुजजिद्दनुजश्रीविभञ्जनः ॥ ७ ॥
दमो दमीड् दमकरो दमिवन्द्यो दमिप्रियः ।
दमादियोगविहम्यो दम्यलीलो दमात्मकः ॥ ८ ॥
दमार्थी दमसंपन्नलभ्यो दमनपूजितः ।
दमदो दमसंभाव्यो दममूलो दमीष्टदः ॥ ९ ॥
दमितो दमिताक्षश्च दमितेन्द्रियवल्लभः ।
दमूना दमुनाभश्च दमदेवो दमालयः ॥ १० ॥
दयाकरो दयामूलो दयावश्यो दयान्वतः ।
दयावान् दयनीयेशो दयितो दयितप्रियः ॥ ११ ॥
दयनीयानसूयाभूर्दयनीयात्रिनन्दनः ।
दयनीयार्थप्रियकरो दयात्मा च दयानिधिः ॥ १२ ॥
दयार्द्रो दयिताश्वत्थो दयाश्लिष्टो दयाघनः ।
दयाविष्टो दयाभीष्टो दयाप्तो दयनीयदृक् ॥ १३ ॥

दयावृतो दयापूर्णो दयायुक्तान्तरस्थितः ।
दयालुर्दयनीयेक्षो दयासिन्धुर्दयोदयः ॥ १४ ॥

दरद्रावितवातश्च दरद्रावितभास्करः ।
दरद्रावितवह्निश्च दरद्रावितवासवः ॥ १५ ॥

दरद्रावितमृत्युश्च दरद्रावितचन्द्रमाः ।
दरद्रावितभूतौघो दरद्रावितदैवतः ॥ १६ ॥

दरास्त्रधृग्दरदरो दराक्षो दरहेतुकः ।
दरदूरो दरातीतो दरमूलो दरप्रियः ॥ १७ ॥

दरवाद्यो दरदवो दरधृग्दरवल्लभः ।
दक्षिणावर्तदरपो दरोदस्नानतत्परः ॥ १८ ॥

दरप्रियो दस्रवन्द्यो दस्रेष्टो दस्रदैवतः ।
दरकण्ठो दराभश्च दरहन्ता दरानुगः ॥ १९ ॥

दररावद्रावितारिर्दररावार्दितासुरः ।
दररावमहामन्त्रो दरार्पितभीर्दरीट् ॥ २० ॥

दरधृग्दरवासी च दरशायी दरासनः ।
दरकृद्दरहृच्चापि दरगर्भो दरातिगः ॥ २१ ॥

दरिद्रपो दरिद्री च दरिद्रजनशेवधिः ।
दरीचरो दरीसंस्थो दरीक्रीडो दरीप्रियः ॥ २२ ॥

दरीलभ्यो दरीदेवो दरीकेतनहृत्स्थितिः ।
दरार्तिहृद्दलनकृद्दलप्रीतिर्दलोदरः ॥ २३ ॥

दलादनर्ष्यनुग्राही दलादनसुपूजितः ।
दलादगीतमहिमा दलादलहरीप्रियः ॥ २४ ॥

दलाशनो दलचतुष्टयचक्रगतो दली ।
द्विऽयस्त्रपद्मगतिविद्दशास्त्राब्जविभेदकः ॥ २५ ॥

द्विषड्दलाब्जभेत्ता च व्यष्टास्राब्जविभेदकः ।
द्विदलस्थो दशशतपत्रपद्मगतिप्रदः ॥ २६ ॥

व्यक्षरावृत्तिकृद्व्यक्षो दशास्यवरदर्पहा ।
दवप्रियो दवचरो दवशायी दवालयः ॥ २७ ॥

दवीयान्दववक्त्रश्च दविष्ठायनपारकृत् ।
दवमाली दवदवो दवदोषनिशातनः ॥ २८ ॥

दवसाक्षी दवत्राणो दवारामो दवस्थगः ।
दशहेतुर्दशातीतो दशाधारो दशाकृतिः ॥ २९ ॥

दशषड्बन्धसंविद्दो दशषड्बन्धभेदनः ।
दशाप्रदो दशाभिज्ञो दशासाक्षी दशाहरः ॥ ३० ॥

दशायुधो दशमहाविद्याचर्यो दशपञ्चदृक् ॥
दशलक्षणलक्ष्यात्मा दशषड्वाक्यलाक्षितः ॥ ३१ ॥

दर्दुरव्रातविहितध्वनिज्ञापितवृष्टिकः ।
दशपालो दशबलो दशेन्द्रियविहारकृत् ॥ ३२ ॥

दशेन्द्रियगणाध्यक्षो दशेन्द्रियदृगूर्ध्वगः ।
दशैकगुणगम्यश्च दशेन्द्रियमलापहा ॥ ३३ ॥

दशेन्द्रियप्रेरकश्च दशेद्रियनिबोधनः ।
दशैकमानमेयश्च दशैकगुणचालकः ॥ ३४ ॥

दशभूर्दर्शनाभिज्ञो दर्शनादर्शितात्मकः ।
दशाश्वमेधतीर्थेष्टो दशास्यरथचालकः ॥ ३५ ॥

दशास्यगर्वहर्ता च दशास्यपुरभञ्जनः ।
दशास्यकुलविध्वंसी दशास्यानुजपूजितः ॥ ३६ ॥

दर्शनप्रीतिदो दर्शयजनो दर्शनादरः ।
दर्शनीयो दशबलपक्षभिच्च दशार्तिहा ॥ ३७ ॥

दशातिगो दशाशागो दशमन्थविशारदः ।
दशप्राणविहारी च दशप्राणगतिर्दशिः ॥ ३८ ॥

दशांगुलाधिकात्मा च दाशार्हो दशषट्सुभुक् ।
दशप्रागाद्यङ्गुलीककरनम्राद्रिडन्तकः ॥ ३९ ॥

दशब्राह्मणभेदज्ञो दशब्राह्मणभेदकृत् ।
दशब्राह्मणसंपूज्यो दशनार्तिनिवारणः ॥ ४० ॥

दोषज्ञो दोषदो दोषाधिपबन्धुर्द्विषद्धरः ।
दोषैकदृक्पक्षघाती दष्टसर्पार्तिशामकः ॥ ४१ ॥

दधिक्राश्च दधिक्रावगामी दध्यङ्मुनीष्टदः ।
दधिप्रियो दधिस्नातो दधिगो दधिसिन्धुगः ॥ ४२ ॥

दधिभो दधिलिप्ताङ्गो दध्यक्षतविभूषणः ।
दधिद्रप्सप्रियो दभ्रवेद्यविज्ञातविग्रहः ॥ ४३ ॥

दहनो दहनाधारो दहरो दहरालयः ।
दह्रहृद्दहराकाशो दहराछादनान्तकः ॥ ४४ ॥

दग्धभ्रमो दग्धकामो दग्धार्तिर्दग्धमत्सरः ।
दग्धभेदो दग्धमदो दग्धाधिर्दग्धवासनः ॥ ४५ ॥

दग्धारिष्टो दग्धकष्टो दग्धार्तिर्दग्धदुष्क्रियः ।
दग्धासुरपुरो दग्धभुवनो दग्धसत्क्रियः ॥ ४६ ॥

दक्षो दक्षाध्वरध्वंसी दक्षपो दक्षपूजितः ।
दाक्षिणात्यार्चितपदो दाक्षिणात्यसुभावगः ॥ ४७ ॥

दक्षिणाशो दक्षिणेशो दक्षिणासादिताध्वरः ।
दक्षिणार्पितसल्लोको दक्षवामादिवर्जितः ॥ ४८ ॥

दक्षिणोत्तरमार्गज्ञो दक्षिण्यो दक्षिणार्हकः ।
द्रुमाश्रयो द्रुमावासो द्रुमशायी द्रुमप्रियः ॥ ४९ ॥

द्रुमजन्मप्रदो द्रुस्थो द्रुरूपभवशातनः ।
द्रुमत्वगम्बरो द्रोणो द्रोणीस्थो द्रोणपूजितः ॥ ५० ॥

द्रुघणी द्रुघणाख्यश्च द्रुशिष्यो द्रुमधर्मधृक् ।
द्रविणार्थो द्रविणदो द्रावणो द्राविडप्रियः ॥ ५१ ॥

द्रावितप्रणताघो द्राक्फलो द्राक्केन्द्रमार्गवित् ।
द्राघीयआयुर्दधामो द्राघीयान्द्राक्प्रसादकृत् ॥ ५२ ॥

द्रुततोषो द्रुतगतिर्व्यतीतो द्रुतभोजनः ।
द्रुफलाशी द्रुदलभुग्द्वेषद्रुत्याप्लुवादरः ॥ ५३ ॥

द्रुपदेड्यो द्रुतमतिर्द्रुतीकरणकोविदः ॥
द्रुतप्रमोदो द्रुतिधृग्द्रुतिक्रीडाविचक्षणः ॥ ५४ ॥

दृढो दृढाकृतिर्दार्ढ्यो दृढसत्वो दृढव्रतः ।
दृढच्युतो दृढबलो दृढार्थासक्तिवारणः ॥ ५५ ॥

दृढधीर्दृढभक्तिर्दृग्दृढभक्तिवरप्रदः ।
दृढदृग्दृढभक्तिज्ञो दृढभक्तो दृढाश्रयः ॥ ५६ ॥

दृढदण्डो दृढयमो दृढप्रदो दृढाङ्गकृत् ।
दृढकायो दृढध्यानो दृढाभ्यासो दृढासनः ॥ ५७ ॥

दृग्दो दृग्दोषहरणो दृष्टिद्वंद्वविराजितः ।
दृक्पूर्वो दृज्ज्ञानोतीतो दृक्पूतगमनो दृगीट् ॥ ५८ ॥

दृगिष्टो दृष्टविषमो दृष्टिहेतुर्दृषत्तनुः ।
दृग्लभ्यो दृक्त्रययुतो दृग्बाहुल्यविराजितः ॥ ५९ ॥

द्युपतिर्द्युपदृग्द्युस्थो द्युमणिर्द्युप्रवर्तकः ।
द्युदेहो द्युगमो द्युस्थो द्युभूर्द्युर्द्युलयो द्युमान् ॥ ६० ॥

द्युनिद्गतिद्युतिद्यूनस्थानदोषहरो द्युभुक् ।
द्यूतकृद्द्युतहृद्द्यूतदोषहृद्द्यूतदूरगः ॥ ६१ ॥
दृप्तो दृप्तार्दनो द्योस्थो द्योपालो द्योनिवासकृत् ।
द्रावितारिर्द्रावितालपमृत्युर्द्रावितकैतवः ॥ ६२ ॥
द्यावाभूमिसन्धिदर्शी द्यावाभूमिधरो द्युदृक् ।
द्योतकृद् द्योतहृद् द्योती द्योताक्षो द्योतदीपनः ॥ ६३ ॥
द्योतमूलो द्योतितात्मा द्योतोद्यौर्द्योतिताखिलः ।
द्वयवादिमतद्वेषी द्वयवादिमतान्तकः ॥ ६४ ॥
द्वयवादिजयी दीक्षाद्वयवादिनिकृन्तनः ।
द्व्यष्टवर्षवया द्व्यष्टनृपवन्द्यो द्विषट्क्रियः ॥ ६५ ॥
द्विषत्कलानिधिर्द्वीपिचर्मधृग्द्व्यष्टजातिकृत् ॥
द्व्यष्टोपचारदयितो द्व्यष्टस्वरतनुर्द्विभित् ॥ ६६ ॥
द्व्यक्षराख्यो द्व्यष्टकोटिस्वजपीष्टार्थपूरकः ।
द्विपाद् द्व्यात्मा द्विगुर्द्वीशो द्व्यतीतो द्विप्रकाशकः ॥ ६७ ॥
द्वैतीभूतात्मको द्वैधीभूतचिद्द्वैधशामकः ।
द्विसप्तभुवनाधारो द्विसप्तभुवनेश्वरः ॥ ६८ ॥
द्विसप्तभुवनान्तस्थो द्विसप्तभुवनात्मकः ।
द्विसप्तलोककर्ता द्विसप्तलोकाधिपो द्विपः ॥ ६९ ॥
द्विसप्तविद्याभिज्ञो द्विसप्तविद्याप्रकाशकः ।
द्विसप्तविद्याविभवो द्विसप्तेन्द्रपदप्रदः ॥ ७० ॥
द्विसप्तमनुमान्यश्च द्विसप्तमनुपूजितः ।
द्विसप्तमनुदेवो द्विसप्तमन्वन्तरर्धिकृन् ॥ ७१ ॥
द्विचत्वारिंशदुद्धर्ता द्विचत्वारिकलास्तुतः ।
द्विस्तनीगोरसास्पृग्द्विहायनीपालको द्विभुक् ॥ ७२ ॥

द्विसृष्टिर्द्विविधो द्वीड्यो द्विपथो द्विजधर्मकृत् ।
द्विजो द्विजातिमान्यश्च द्विजदेवो द्विजातिकृत् ॥ ७३ ॥
द्विजप्रेष्ठो द्विजश्रेष्ठो द्विजराजसुभूषणः ।
द्विजराजाग्रजो द्विड्द्वीड् द्विजाननसुभोजनः ॥ ७४ ॥
द्विजास्यो द्विजभक्तो द्विजातिभृद्द्विजसत्कृतः ।
द्विविधो ऽव्यावृतिर्द्वंद्ववारणो द्विमुखादनः ॥ ७५ ॥
द्विजपालो द्विजगुरुर्द्विजराजासनो द्विपात् ।
द्विजिह्वसूत्रो द्विजिह्वफणछत्रो द्विजिह्वभृत् ॥ ७६ ॥
द्वाशशात्मा द्वापरदृग्द्वादशादित्यरूपकः ।
द्वादशीशो द्वादशारचक्रधृग्द्वादशाक्षरः ॥ ७७ ॥
द्वादशीपारणो द्वादश्यर्च्यो द्वादशषड्बलः ।
द्वासप्ततिसहस्राङ्गनाडीगतिविचक्षणः ॥ ७८ ॥
द्वंद्वदो द्वंद्वदो द्वंद्वबीभत्सो द्वंद्वतापनः ।
द्वंद्वार्तिहृद्द्वंद्वसहो द्वयी द्वंद्वातिगो द्विगः ॥ ७९ ॥
द्वारदो द्वारविद्द्वास्थो द्वारधृग्द्वारिकाप्रियः ।
द्वारकृद्द्वारगो द्वारनिर्गमक्रममुक्तिदः ॥ ८० ॥
द्वारभृद्द्वारनवकगतिसंसृतिदर्शकः ।
द्वैमातुरो द्वैतहीनो द्वैतारण्यविनोदनः ॥ ८१ ॥
द्वैतास्पृग्द्वैतगो द्वैताद्वैतमार्गविशारदः ।
दाता दातृप्रियो दावो दारुणो दारदाशनः ॥ ८२ ॥
दानदो दारुवसतिर्दास्यज्ञो दाससेवितः ।
दानप्रियो दानतोषो दानज्ञो दानविग्रहः ॥ ८३ ॥
दास्यप्रियो दासपालो दास्यदो दासतोषणः ।
दावोष्णहृद्दान्तसेव्यो दान्तज्ञो दान्तवल्लभः ॥ ८४ ॥

दातदोषो दातकेशो दावचारी च दावपः ।
दायकृद्दायभुग्दारस्वीकारविधिदर्शकः ॥ ८५ ॥

दारमान्यो दारहीनो दारमेधिसुपूजितः ।
दानवान्दानवारातिर्दानवाभिजनान्तकः ॥ ८६ ॥

दामोदरो दामकरो दारस्नेहोतचेतनः ।
दार्वीलेपो दारमोहो दारिकाकौतुकान्वितः ॥ ८७ ॥

दारिकादोद्धारकश्च दातदारुकसारथिः ॥
दाहकृद्दाहशान्तिज्ञो दाक्षायण्यधिदैवतः ॥ ८८ ॥

द्रांबीजो द्रांमनुर्दान्तशान्तोपरतवाञ्छितः ।
दिव्यकृद्दिव्यविद्दिव्यो दिविस्पृग्दिविजार्थदः ॥ ८९ ॥

दिक्पो दिकपतिपो दिग्विद्दिगन्तरलुठद्यशाः ।
दिग्दर्शनकरो दिष्टो दिष्टात्मा दिष्टभावनः ॥ ९० ॥

दृष्टो दृष्टान्तदो दृष्टातिगो दृष्टान्तवर्जितः ।
दिष्टं दिष्टपरिच्छेदहीनो दिष्टनियामकः ॥ ९१ ॥

दिष्टास्पृष्टगतिर्दिष्टेड्दिष्टकृद्दिष्टचालकः ।
दिष्टदाता दिष्टहन्ता दुर्दिष्टफलशामकः ॥ ९२ ॥

दिष्टव्याप्तजगद्दिष्टशंसको दिष्टयत्नवान् ।
दितिप्रियो दितिस्तुत्यो दितिपूज्यो दितीष्टदः । ॥ ९३ ॥

दितिपाखण्डदावो दिग्दिनचर्यापरायणः ।
दिगंबरो दिव्यकान्तिर्दिव्यगन्धोपि दिव्यभुक् ॥ ९४ ॥

दिव्यभावो दीप्तिविकृद्दोषहृद्दीप्तलोचनः ।
दीर्घजीवी दीर्घदृष्टिर्दीर्घाङ्गो दीर्घबाहुकः ॥ ९५ ॥

दीर्घश्रवा दीर्घगतिर्दीर्घवक्षाश्च दीर्घपात् ।
दीनसेव्यो दीनबन्धुर्दीनपो दीपितान्तरः ॥ ९६ ॥

दीनोद्धर्ता दीप्तकान्तिर्दीप्रक्षुरसमायनः ।
दीप्यन् दीक्षितसंपूज्यो दीक्षादो दीक्षितोत्तमः ॥ ९७ ॥
दीक्षणीयेष्टिकृद्दीक्षादीक्षाद्वयविचक्षणः ।
दीक्षाशी दीक्षितान्नाशी दीक्षाकृद्दीक्षितादरः ॥ ९८ ॥
दीक्षिताघ्र्यो दीक्षिताद्यो दीक्षिताभीष्टपूरकः ।
दीक्षापटुर्दीक्षितात्मा दीप्यद्दीक्षितगर्वहृत् ॥ ९९ ॥
दुष्कर्महा दुष्कृतज्ञो दुष्कृद्दुष्कृतिपावनः ।
दुष्कृत्साक्षी दुष्कृतहृद् दुष्कृद्धा दुष्कृदार्तिदः ॥ १०० ॥
दुष्क्रियान्तो दुष्करकृद्दुष्क्रियाघनिवारकः ।
दुष्कुलत्याजको दुष्कृत्पावनो दुष्कुलान्तकः ॥ १०१ ॥
दुष्कुलाघहरो दुष्कृद्वातिदो दुष्करक्रियः ।
दुष्कलंकविनाशी दुष्कोपो दुष्कण्टकार्दनः ॥ १०२ ॥
दुष्कारी दुष्करतपा दुःखदो दुःखहेतुकः ।
दुःखत्रयहरो दुःखत्रयदो दुःखदुःखदः ॥ १०३ ॥
दुःखत्रयार्तिविद् दुःखिपूजितो दुःखशामकः ।
दुःखहीनो दुःखहीनभक्तो दुःखविशोधनः ॥ १०४ ॥
दुःखकृद्दुःखदमनो दुःखितारिश्च दुःखनुत् ।
दुःखातिगो दुःखलहा दुःखेटार्तिनिवारणः ॥ १०५ ॥
दुःखेटदृष्टिदोषघ्नो दुःखगारिष्टनाशकः ।
दुःखेचरदशार्तिघ्नो दुष्टखेटानुकूल्यकृत् ॥ १०६ ॥
दुःखोदर्कोच्छादको दुःखोदर्कगतिसूचकः ।
दुःखोदकार्थसन्त्यागी दुःखोदर्कार्थदोषदृक् ॥ १०७ ॥
दुर्गा दुर्गार्तिहृद् दुर्गी दुर्गेशो दुर्गसंस्थितः ।
दुर्गमो दुर्गमगतिर्दुर्गारामश्च दुर्गभूः ॥ १०८ ॥

दुर्गानवकसंपूज्यो दुर्गानवकसंस्तुतः ।
दुर्गभिद् दुर्गतिर्दुर्गमार्गगो दुर्गमार्थदः ॥ १०९ ॥
दुर्गतिघ्नो दुर्गतिदो दुर्ग्रहो दुर्ग्रहार्तिहृत् ।
दुर्ग्रहावेशहृद् दुष्टग्रहनिग्रहकारकः ॥ ११० ॥
दुर्ग्रहोच्चाटको दुष्टग्रहजिद् दुर्गमादरः ।
दुर्दृष्टिबाधाशमनो दुर्दृष्टिभयहापकः ॥ १११ ॥
दुर्गुणो दुर्गुणातीतो दुर्गुणातीतवल्लभः ।
दुर्गन्धनाशो दुर्घातो दुर्घटो दुर्घटक्रियः ॥ ११२ ॥
दुश्चर्यो दुश्चरित्रारिर्दुश्चिकित्स्यगदान्तकः ।
दुश्चित्ताल्हादको दुश्चिच्छास्ता दुश्चेष्टशिक्षकः ॥ ११३ ॥
दुश्चिन्ताशमनो दुश्चिद्दुश्छन्दविनिवर्तकः ।
दुर्जयो दुर्जरो दुर्जिज्जयी दुर्जेयचित्तजित् ॥ ११४ ॥
दुर्जाप्यहर्ता दुर्वार्ताशान्तिर्दुर्जातिदोषहृत् ।
दुर्जनारिर्दुश्च्यवनो दुर्जनप्रान्तहापकः ॥ ११५ ॥
दुर्जनार्तो दुर्जनार्तिहरो दुर्जलदोषहृत् ।
दुर्जीवहा दुष्टहन्ता दुष्टार्तपरिपालकः ॥ ११६ ॥
दुष्टविद्रावणो दुष्टमार्गभिद् दुष्टसंगहृत् ।
दुर्जीवहत्यासंतोषो दुर्जनाननकीलनः ॥ ११७ ॥
दुर्जीववैरहृद् दुष्टोच्चाटको दुस्तरोद्धरः ।
दुष्टदण्डो दुष्टखण्डो दुष्टध्रुग्दुष्टमुंडनः ॥ ११८ ॥
दुष्टभावोपशमनो दुष्टविद् दुष्टशोधनः ।
दुस्तर्कहृद्दुस्तर्कारिर्दुस्तापपरिशान्तिकृत् ॥ ११९ ॥
दुर्दैवहृद्दुन्दुभिघ्नो दुन्दुभ्याघातहर्षकृत् ।
दुर्धीहरो दुर्नयहृद्दुःपक्षिध्वनिदोषहृत् ॥ १२० ॥

दुष्प्रयोगोपशमनो दुष्प्रतिग्रहदोषहृत् ।
दुर्बलाप्तो दुर्बोधात्मा दुर्बन्धच्छिद्दुरत्ययः ॥ १२१ ॥
दुर्बाधाहृद्दुर्भयहृद्दुर्भ्रमोपशमात्मकः ।
दुर्भिक्षहृद्दुर्यशोहृद् दुरुत्पातोपशामकः ॥ १२२ ॥
दुर्मन्त्रयन्त्रतन्त्रच्छिद् दुर्मित्रपरितापनः ।
दुर्योगहृद्दुराधर्षो दुराराध्यो दुरासदः ॥ १२३ ॥
दुरत्ययस्वमायाब्धितारको दुरवग्रहः ।
दुर्लभो दुर्लभतमो दुरालापाघशामकः ॥ १२४ ॥
दुर्नामहृद् दुराचारपावनो दुरपोहनः ।
दुराश्रमाघहृद्दुर्गपथलभ्यचिदात्मकः ॥ १२५ ॥
दुरध्वपारदो दुर्भुक्पावनो दुरितार्तिहा ।
दुराश्लेषाघहर्ता दुर्मैथुनैनोनिबर्हणः ॥ १२६ ॥
दुरामयान्तो दुर्वैरहर्ता दुर्व्यसनान्तकृत् ।
दुःसहो दुःशकुनहृद्दुःशीलपरिवर्तनः ॥ १२७ ॥
दुःशोकहृद्दुःशङ्काहृद्दुःसङ्गभयवारणः ।
दुःसहाभो दुःसहदृग्दुःस्वप्नभयनाशनः ॥ १२८ ॥
दुःसङ्गदोषसञ्जातदुर्मनीषाविशोधनः ।
दुःसङ्गिपापदहनो दुःक्षणाघनिवर्तनः ॥ १२९ ॥
दुःक्षेत्रपावनो दुःक्षुद्भयहृद् दुःक्षयार्तिहृत् ।
दुःक्षत्रहृच्च दुर्ज्ञेयो दुर्ज्ञानपरिशोधनः ॥ १३० ॥
दूतो दूतेरको दूतप्रियो दूरश्च दूरदृक् ।
दूनचित्ताल्हादकश्च दूर्वाभो दूष्यपावनः ॥ १३१ ॥
देदीप्यमाननयनो देवो देदीप्यमानभः ।
देदीप्यमानरदनो देश्यो देदीप्यमानधीः ॥ १३२ ॥

देवेष्टो देवगो देवी देवता देवतार्चितः ।
देवमातृप्रियो देवपालको देववर्धकः । ॥ १३३ ॥
देवमान्यो देववन्द्यो देवलोकप्रियंवदः ।
देवारिष्टहरो देवाभीष्टदो देवतात्मकः ॥ १३४ ॥
देवभक्तप्रियो देवहोता देवकुलादृतः ।
देवतन्तुर्देवसंपद्देवद्रोहिसुशिक्षकः ॥ १३५ ॥
देवात्मको देवमयो देवपूर्वश्च देवभूः ।
देवमार्गप्रदो देवाशिक्षको देवगर्वहृत् ॥ १३६ ॥
देवमार्गान्तरायघ्नो देवयज्ञादिधर्मधृक् ।
देवपक्षी देवसाक्षी देवदेवेशभास्करः ॥ १३७ ॥
देवारातिहरो देवदूतो दैवतदैवतः ।
देवर्भातिहरो देवगेयो देवहविर्भुजः ॥ १३८ ॥
देवश्राव्यो देवदृश्यो देवर्णी देवभोग्यभुक् ।
देवीशो देव्यभीष्टार्थो देवीड्यो देव्यभीष्टकृत् ॥ १३९ ॥
देवीप्रियो देवबीजो देशिको देशिकार्चितः ।
देशिकेड्यो देशिकात्मा देवमातृकदेशपः ॥ १४० ॥
देहकृद्देहधृग्देही देहगो देहभावनः ।
देहपो देहदो देहचतुष्टयविहारकृत् ॥ १४१ ॥
देहीतिप्रार्थनीयश्च देहबीजनिकृन्तनः ।
देवनास्पृग्देवनकृद्देहास्पृग्देहभावनः ॥ १४२ ॥
देवदत्तो देवदेवो देहातीतोऽपि देहभृत् ।
देहदेवालयो देहासङ्गो देहस्थेष्टगः ॥ १४३ ॥
देहधर्मा देहकर्मा देहसंबन्धपालकः ।
देयात्मा देयविद्देशापरिच्छिन्नश्च देशकृत् ॥ १४४ ॥

देशपो देशवान् देशी देशज्ञो देशिकागमः ।
देशभाषापरिज्ञानी देशभूर्देशपावनः ॥ १४५ ॥

देश्यपूज्यो देवकृतोपसर्गविनिवर्तकः ।
दिविषद्विहितावर्षातिवृष्ट्यादीतिशामकः ॥ १४६ ॥

दैवीगायत्रिकाजापी दैवसंपत्तिपालकः ।
दैवीसंपत्तिसंपन्नमुक्तिकृद्दैवभावगः ॥ १४७ ॥

दैवसंपत्त्यसंपन्नछायास्पृग्दैत्यभावहृत् ।
दैवदो दैवफलदो दैवादित्रिक्रियेश्वरः ॥ १४८ ॥

दैवानुमोदनो दैन्यहरो दैवज्ञदेवतः ।
दैवज्ञो दैववित्पूज्यो दैविको दैन्यकारणः ॥ १४९ ॥

दैन्याञ्जनहृतस्तंभो दोषत्रयशमप्रदः ।
दोषहर्ता दैवभिषग्दोषदो दोर्द्वयान्वितः ॥ १५० ॥

दोषज्ञो दोहदाशंसी दोग्धा दोष्यन्तितोषितः ।
दौरात्म्यदूरो दौरात्म्यहृद्दौरात्म्यार्तिशान्तिकृत् ॥ १५१ ॥

दौरात्म्यदोषसंहर्ता दौरात्म्यपरिशोधनः ।
दौर्मनस्यहरो दौत्यकृद्दौत्योपास्तशाक्तिकः ॥ १५२ ॥

दौर्भाग्यदोऽपि दौर्भाग्यहृद्दौर्भाग्यार्तिशान्तिकृत् ।
दौष्ट्यत्रो दौष्कुल्यदोषहृद्दौष्कुल्याधिशामकः ॥ १५३ ॥

दंदशूकपरिष्कारो दंदशूककृतायुधः ।
दन्तिचर्मपरीधानो दन्तुरो दन्तुरारिहृत् ॥ १५४ ॥

दन्तुरघ्नो दण्डधारी दण्डनीतिप्रकाशकः ।
दांपत्यार्थप्रदो दंपत्यर्च्यो दंपत्यभीष्टदः ॥ १५५ ॥

दंपतिद्वेषशमनो दंपतिप्रीतिवर्धनः ।
दन्तोलूखलको दंष्ट्री दन्त्यास्यो दन्तिपूर्वगः ॥ १५६ ॥

दंभोलिभृद्दंभहर्ता दंण्डयविद्दंशवारणः ।
दन्द्रम्यमाणशरणो दन्त्यश्वरथपत्तिदः ॥ १५७ ॥

दन्द्रम्यमाणलोकार्तिकरो दण्डत्रयाश्रितः ।
दण्डपाण्यर्चपद्दण्डिवासुदेवस्तुतोऽवतु ॥ १५८ ॥

इति श्रीमद्दकारादिदत्तनामसहस्रकं ।
पठतां शृण्वतां वापि परानन्दपदप्रदम् ॥ १५९ ॥

इति श्री. प. प. श्रीवासुदेवानन्दसरस्वतीविहित-
दकारादिदत्तसहस्रनामस्तोत्रं संपूर्णम् ॥

---

# अथ षोडशावताराणां सामान्यतः तंत्रोक्ताः पूजोपचारमंत्राः ॥

मंत्रात्मा मंत्रराजोयं परमात्मात्मभूः स्वयं । गूढश्चरति तंत्रेषु मंत्रबीजार्थगर्जितः । त्वयान्वितं जगत्सर्वं तत्त्वमसि न संशयः । शून्याकारं निराकारं साकारं सर्वतोमुखं । मंत्रराज महाराज योगिराज जगत्पते । सुवर्णवर्णः सर्वात्मा त्वमेकोसि जगद्गुरुः । इति आवाहनं ॥ येषु येषु च भावेषु भक्त्या त्वां परमेश्वर । साधवो भायवंत्यात्मा त्वं तथा तत्र भाससे । भेदाभेदौ न च स्थित्या मंत्रराज जगत्पते । त्वमेवैकः परस्त्राता न चैवान्योस्ति तत्त्वतः । इति आसनं ॥ सर्वतः पाणिपादं तद्रूपं जगन्नगात्मकं । न तज्ञातद्विवेकेन विश्वेशं विदितं परं । इति पाद्यं ॥ त्वमेव सर्वयोगानां भोक्ता साक्षी गुरुर्गतिः । फलं तत्कारणं बीजस्थानं त्वमसि तत्वतः । इति अर्घ्यं ॥ अमृतादमृतं मर्त्या भजंति भवनाशनं । मंत्रराजमिदं पुण्यं दुःखांकुरविमर्दनं । इति आचमनं ॥ असंगो ह्यजरः साक्षी नित्यसिद्धो निरामयः । नित्यानंदमयो देवः सर्वत्राप्यमलो बुधः । इति स्नानं ॥ स्वमायया प्रगुप्तात्मा मायानाश्रयमोहिनी । 'यस्यायं पुरुषः पूर्णः परमात्मा परं पदं । इति वस्त्रं ॥ ब्रम्हनामकसूत्रं तु ब्रम्हसूत्रं प्रकीर्तितं । ब्रम्हैव ब्रम्हसूत्रं तद्यस्मिन्प्रोतं चराचरम् । इति यज्ञोपवीतं ॥ उत्तमं पुरुषं पूर्णमगोचर-मनामयं । ध्याये त्वां देवदेवेश मंत्रराज नमोऽस्तुते ॥ इति गंधं ॥ अतर्क्योयमनंतोयमद्वयः पुरुषेश्वरः । पूर्णानंदो घनश्यामः सिद्धरा-जोब्जलोचनः । इति अक्षताः ॥ नानाश्चर्यमयं देवं नानाश्चर्यविनिर्गतं । निगमागमगोपारं गोपतिं श्रीपतिं भजे । इति अलंकारः ॥ यस्मिन्भाति जगत्सर्वं भासा यस्य प्रवर्तने । तस्मै सर्वगुणाभासमूर्तये ब्रह्मणे नमः । इति पुष्पाणि ॥ यद्भाति रोचते यच्च येनेदं ततमेव हि । सत्यं तच्चिन्मयं ब्रह्म स्वयमेवावभासते । इति धूपः । चिन्मयं चैव चिद्वस्तु चेतनं

घननिर्मलं । ब्रह्मैव मंत्रराजोयं सुरराजो जनप्रियः । इति दीपः ॥ सर्व-दुःखांतकज्ञाता सर्ववित्स परः स्वभुक् । सर्वात्मा सर्वसर्वज्ञः सर्वसर्वोत्तम-मोत्तमः । इति पूर्वापोशनं ॥ मंत्रराजमूर्तये स्वाहा । मंगलमूर्तये स्वाहा । सज्जनप्रियाय स्वाहा । साधूनां पतये स्वाहा । परब्रह्ममूर्तये दत्तात्रेयाय स्वाहा । इति उत्तरापोशनं । प्रणवेनादावंते चापोशनमिति । नैवेद्यं ॥ कर्ता कर्म च कार्यं चतुर्थं कर्मणः फलं । ब्रह्मैव भासते सर्वं मंत्रेश्वर-प्रसादतः । इति फलं ॥ वेदवेदार्थसंसारविसारं सर्वमंगलं । सर्व-भूतमयं ब्रह्म वंदे मंत्रमयं शिवं । इति करोद्वर्तनं ॥ योगारिष्टहरं देवं भोगमोक्षफलप्रदं । मंगलं परमं धाम शंकरं प्रणमाम्यहं । इति पुनर्धूपं ॥ भावस्याभावको भावो नाभावो भावभावभाक् । भासते भावरूपात्मा भावना भावभावना । भावाभावौ च संत्यज्य भावस्वभावभाक् । तस्मै शुद्धाय शांताय मंगलाय च ते नमः । इति तांबूलं ॥ अदृश्यं दृश्यते दृश्यं तददृश्यं दृश्यते न हि । दृश्यादृश्यविदृश्यत्वाद्रूपं ते मंगलं परं इति दक्षिणा ॥ ज्ञात्वा ज्ञेयं वेदनं च ज्ञायते यत्पदं न हि । सत्यं तच्चिन्मयं ब्रह्म स्वयमेवावभासते । इति महावस्त्रं । स्वप्रकाशः प्रकाशात्मा परमात्मा परात्परः । परब्रह्मात्मभूतात्मा परमात्मा परात्परः । परब्रह्मात्मभूतात्मा स्वयंज्योतिः सदाशिवः । इति महानीराजनं ॥ मंत्रेश्वर महाराज मंत्र-बीज जनाश्रय । प्रभो त्वं देवदेवेश सर्वोसि त्वं जगत्पते । सत्यज्ञा-नानंदमयं रूपं ते मंगलं परं । दत्तात्रेय मंत्रराज ज्ञानबीज नमोस्तुते । इति मंत्रपुष्पांजलि ॥ भद्रं त्वमेव सर्वत्र सच्चिदानंदमव्ययं । प्रसीद देवदेवेश दत्तात्रेय नमोस्तुते । इति देवस्योपरि जलं भ्रामयेत् । नमस्ते दिव्यरूपाय नमस्ते बोधमूर्तये । मंत्रमयाय देवाय दत्तात्रेयाय ते नमः । इति प्रार्थनाक्षमापनं ॥ प्रत्युपचारं तत्तदवतारनाम चतुर्थ्यंतं नमोंतमुक्त्वोपचारो देय इति सामान्यतः पूजाविधिः ॥

❀ ॐ ●

॥ श्रीरस्तु ॥ ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ ॥ शुभं भवतु ॥

# श्रीदत्तात्रेयषोडशावतारचरितानि

## १४५ प्रथमचरित्रप्रारंभः

श्रीगणेशाय नमः ॥ श्रीदत्तगुरुभ्यो नमः

वेदधर्मा दीपकं प्रति कथयति—

यदुक्तमाथर्वणिके विधात्रे
क्षेत्रे च सत्याभिध आत्ममूर्तेः ॥
श्रीविष्णुनोपासनमात्ममुक्त्यै
भक्त्यैकगम्यस्य तदत्र वच्मि ॥ ॥ १ ॥

नारायणं लोकगुरुं शरण्यं । कारुण्यसिंधुं विधिनोपगम्यं ॥
ब्रह्माभिवाद्याह हराद्य चिंतां । किं तारकं तद्वद वेदवेद्य ॥ २ ॥

एवं निशम्यात्मभुवो नियोगं । सांगं निजोपासनमुक्तवान् सः
त्वं सात्विकं मामकमेकमेव । भावज्ञ धामातितरामुपास्व ॥ ३ ॥

दत्तोऽहं ते मयेत्यात्मदानेनाहमवातरम् ॥
दत्तोऽहमिति तद्रूपमुपास्यं निखिलैः सदा ॥ ४ ॥

रामाद्या येऽवतारा इह वृषधृतये स्वाश्रमाद्यादरास्तै-
स्त्रैकाल्म्येऽप्येष वर्णोत्तम इतरनुतः स्वाश्रमस्थैश्च वंद्यः ॥
श्रीदत्तोऽत्याश्रमस्थः खलु सकलसुहृद्योऽवधूतोऽर्च्य आत्मा
ऽऽकल्पं वर्वर्ति देवर्ष्यसुरसुरनुतस्त्र्यात्मकत्वात्परात्मा ॥ ५ ॥

न मे पार्थास्ति कर्तव्यमित्याद्यैर्भगवांस्त्रिभिः ॥
श्लोकैः संकरसंशांत्यै लोकसंग्रहकृज्जगौ ॥ ६ ॥

रामकृष्णादिभिः पूर्वं लोकसंग्रहसिद्धये ।
मर्यादापालनार्थाय स्वावतारानुसारतः ॥ ७ ॥

प्रत्युत्थानाभिवादाद्यैः सर्वज्ञैरपि सेविताः ।
विप्राश्रिता वसिष्ठाद्या गुरवो गौरवादरैः ॥ ८ ॥

तैः सर्वैरवधूतोऽयं श्रीदत्तो भगवान् स्वयं ।
अयोनिसंभवत्वाच्चात्याश्रमित्वाच्च सर्वथा ॥ ९ ॥

सेवनीयो वंदनीयो भूयो भूयो न संशयः ।
किं पुनर्मानवैरज्ञैः परार्धानैर्हितेच्छुभिः ॥ १० ॥

निरुपाधिकमेकं यन्निर्गुणं निर्विकारकं ।
निरंजनं निरवधि चैतन्यात्मकमद्वयम् ॥ ११ ॥

परिपूर्ण परं ब्रह्म सच्चिदानंदविग्रहं ।
नित्यं शुद्धं नित्यमुक्तं विबुद्धं सर्वकारणं ॥ १२ ॥

नैव किंचित्कृतं तेन स्वरूपेणोद्भवादिकं ।
सत्तामात्रस्वरूपत्वान् सर्वाधारतयापि च ॥ १३ ॥

सर्वस्यापि विवर्तोपादानत्वान्निर्विकारतः ।
सर्वं कृतमिवेत्याहुस्तेनैव परमात्मना ॥ १४ ॥

शुद्धाद्वैतस्वरूपत्वात्तेन किंचित्कृतं न हि ।
निर्गुणेऽस्मिन्निर्विकारे सर्वमारोपयंति हि ॥ १५ ॥

वेदा अपि प्रवृत्ता यद्वर्णने तेऽपि सर्वथा ।
चकिता हि यतो वाचो निवर्तंत इति श्रुतेः ॥ १६ ॥

उपाधित्वेन चादाय स्वात्मशक्तिं स एव हि ।
अभवद्देवदेवेशः सर्वज्ञः सर्वकारणं ॥ १७ ॥

अव्यक्तादिकमेतेन सर्वं सृष्टं चराचरं ।
वेदशास्त्रपुराणाद्यावादिकर्ता स गीयते ॥ १८ ॥

स कुर्वाणोऽप्यकर्तैव कुर्वन्नपि न लिप्यते ।
आदिकर्ता स भगवानव्यक्तत्वं स्वयं गतः ॥ १९ ॥

ततः स सूक्ष्मभूतानि त्रिगुणानि बभूव ह।
तेषां सत्वांशतः पंच धीन्द्रियाणि पृथक् तथा ॥ २० ॥
तत्सत्वांशैक्यतो जातमंतःकरणमेव तत्।
चतुर्विधं विमर्शादिवृत्तिभेदेन चाभवत् ॥ २१ ॥
सूक्ष्मभूतरजोंऽशेभ्यः पंचकर्मेन्द्रियाणि च।
तद्रजोंऽशैक्यतः प्राणो वृत्तिभेदात्स पंचधा ॥ २२ ॥
तेभ्यो लिंगशरीराणि तदैक्यं सूत्रमुच्यते।
पंचीकृतेभ्यो भूतेभ्यः स्थूलसृष्टिरजायत ॥ २३ ॥
ब्रह्मांडं च तदंतस्थाः कृता लोकाश्चतुर्दश।
अन्नपानादिभोग्यं च देहा अपि चतुर्विधाः ॥ २४ ॥
वैश्वानरस्य देहोऽयं चराचरजगन्मयः।
विराडित्युच्यते यस्माद्देववर्णादिसृष्टयः ॥ २५ ॥
आपो नारा इति प्रोक्ता अयमं तस्य ताः पुरा।
अतो नारायणोऽसौ तन्नाभेः कः समवर्तत ॥ २६ ॥
स तप्त्वा तप आसाद्य सर्गसामर्थ्यमीशितुः।
सनकादीन् ससर्जादौ सप्त मानसिकांस्ततः ॥ २७ ॥
मरीच्यत्रिमुखान्स्वांगछायातः कर्दमं मुनिम्।
स्ववामदक्षिणांगाभ्यां शतरूपां मनुं च सः ॥ २८ ॥
ताभ्यां प्रियव्रतोत्तानपादौ कन्यात्रयं तथा।
आकूतिर्देवहूतिश्च प्रसूतिश्चेति विश्रुतं ॥ २९ ॥
कर्दमाय ददौ देवहूतिं स्वायंभुवो मनुः।
अभवन्नव कन्या हि देवहूत्यां प्रजापतेः ॥ ३० ॥
मरीच्यादिमुनिभ्यस्ता विधिना प्रददौ मुनिः।
सपत्नीका मरीच्याद्याः सृष्ट्यर्थं ब्रह्मणेरिताः ॥ ३१ ॥

यो ब्रह्मविद्वरीयान् स द्वितीयोऽत्रिर्विधेः सुतः ।
नैच्छत् किमपि कर्तुं हि स्वानंदरसनिर्वृतः ॥ ३२ ॥
जीवतो वाक्यकरणात्पितुः पुत्रस्य पुत्रता ।
इत्यजोऽनुशशासात्रिं ब्रह्मा सृष्टिप्रवर्तकः ॥ ३३ ॥
परतो यस्य नोत्थानं स्वतोऽपि न कथंचन ।
अवृत्तित्वान्न तस्यास्ति विधिर्नापि निषेधकः ॥ ३४ ॥
सद्ब्रह्मविद्वरीयस्त्वाच्चिकीर्षोर्लोकसंग्रहम् ।
अत्रेस्तु वृत्तिसद्भावादासीत्परत उत्थितिः ॥ ३५ ॥
ततः स्वपितुरादेशं कर्तुमत्रिः समुत्थितः ।
अत एवाह मैत्रेयो भगवान् श्लोकमुत्तमं ॥ ३६ ॥
ब्रह्मणा नोदितः सृष्टावत्रिर्ब्रह्मविदां वरः ।
सह पत्न्या ययावृक्षं कुलाद्रिं तपसि स्थितः ॥ ३७ ॥
इत्युक्तेः शोभनं त्वेतत्सर्वमेव न संशयः ।
अन्वर्थकोऽत्रिर्भगवान्सहपत्न्या तपोऽतपत् ॥ ३८ ॥
धर्मार्थकामेषु नातिचरितव्या वधूरिति ।
पुत्रार्थी सह पत्न्यैव तपस्तप्तुं गतो मुनिः ॥ ३९ ॥
भगवांस्तत्र तदनुग्रहायाविरभूत्स्वयं ।
कार्तिके शुक्लपक्षे तु पूर्णिमायां ज्ञवासरे ॥ ४० ॥
आद्ये यामे मुहूर्ते च योगिराजो ह्यवातरत् ।
निराकारोऽप्युपासार्थं साकारत्वं गतः प्रभुः ॥ ४१ ॥
शुद्धस्फटिकसंकाशः परानंदमयः पुमान् ।
नित्यशुद्धस्वात्मरूपनिष्ठत्वाद्योगिनामिव ॥ ४२ ॥
योगप्रवर्तकत्वाच्च योगिराज इति स्मृतः ।
योगिराजजयंतीयं दुःखयोगवियोगदा ॥ ४३ ॥

अस्यामेव जयंत्यां स पूजयित्वा प्रयत्नतः ।
पूजांतेऽर्घ्यत्रयं दद्यान्मंत्रैरेतैरुपासकः ॥ ४४ ॥

(मंत्राः) मायागुणविमुक्ताय सर्वलोकेश्वराय च ।
योगिराजाय देवाय कर्मणार्घ्यं ददाम्यहं ॥ १ ॥ ४५ ॥

अद्वयानंदरूपाय योगमायाधराय च ।
योगिराजाय देवाय० ॥ २ ॥ ४६ ॥

अव्यक्ताव्यक्तरूपाय निर्गुणाय गुणात्मने ।
योगिराजाय देवाय० ॥ ३ ॥ ४७ ॥

कायेन यत्कृतं कर्म वचसा यत्कृतं मया ।
मनसा यत्कृतं तेऽस्तु योगिराज समर्पणं ॥ ४८ ॥

एवमर्घ्यत्रयं दत्वा नमोंऽतं प्रणवादिकं ।
योगिराजमनुं भक्त्या जपेत्तद्गतमानसः ॥ ४९ ॥

नारिकेलफलं दत्वा प्रयतः प्रार्थयेत्प्रभुं ।
योगिराजजयन्त्याख्यं यन्मयैतद्व्रतं कृतं ॥ ५० ॥

अनेन प्रीयतां योगिराजः श्रीभगवान्स्वयं ।
एवं संप्रार्थ्य देवेशं यथाविभवविस्तरं ॥ ५१ ॥

ब्राह्मणान्भोजयित्वाऽथ भुंजीत स्वसुहृद्युतः ।
कथां च शृणुयादेतां पापतापप्रणाशिनीं ॥ ५२ ॥

श्रीदत्तस्यावतारोऽयं योगिराज इति स्मृतः ।
प्रथमोऽथ द्वितीयोऽत्रिवरदाख्यो निगद्यते ॥ ५३ ॥

इति श्रीयोगिराजावतारो नाम प्रथमोऽध्यायः संपूर्णः ॥

---

## १४६ अथ द्वितीयचरित्रप्रारंभः ।

श्रीगणेशाय नमः ॥ श्रीअत्रिवरदाय नमः ॥

योगोगिराज उक्तोऽत्रिवरदोऽपि स एव हि ।
रूपांतरेण द्वितीयावतारोऽभूत्स उच्यते ॥ १ ॥

अत्रिः पित्राज्ञया तप्त्वा तपः परमदुष्करं ।
ऋक्षाद्रौ परमे तीर्थे वायुभक्षो जितेंद्रियः ॥ २ ॥

प्राणायामेन संयम्य मनो वर्षशतं शुचिः ।
अतिष्ठदेकपादेन सकृद्दृष्टं महौजसं ॥ ३ ॥

ज्ञानानंदघनं नित्यं प्रधानगुणतः परं ।
योगिराजं महात्मानं चिंतयामास सर्वदा ॥ ४ ॥

प्रजामात्मसमां मह्यं ददातु भगवानयं ।
इति संचिंत्य तपसि स्थितोऽत्रिर्मुनिसत्तमः ॥ ५ ॥

शतवर्षेषु यातेषु तपसोग्रेण मस्तकात् ।
निर्गतं सुमहत्तेजस्त्रैलोक्यमतपत्ततः ॥ ६ ॥

भूचराः खेचरा जीवाः सर्वे देवाः सदानवाः ।
परमोग्रेण तपसा संजाता भयविह्वलाः ॥ ७ ॥

सर्वे देवाश्च ऋषयो ब्रह्मविष्णुमहेश्वरान् ।
स्वस्त्यर्थं शरणं जग्मुः सर्वे ते भयविह्वलाः ॥ ८ ॥

देवर्षिप्रार्थिता ब्रह्महरिशर्वा दयालवः ।
मा भैष्टेत्यभयं दत्वा समारुह्य स्वधारणम् ॥ ९ ॥

चिह्निताः स्वस्वचिह्नैस्ते मुनेराश्रममुत्तमं ।
आगत्योत्थापयामासुस्तपसोऽत्रिं स्वतेजसा ॥ १० ॥

ततः पराग्दशिः सोऽत्रिः स्वस्वचिन्हैश्च चिन्हितान् ।
दृष्ट्वा ब्रह्महरीशान्प्राब्रवीदर्हणांजलिः ॥ ११ ॥
एक एव मया ध्यातो यूयं त्रय इहागताः ।
किमर्थमिति भातीदं चित्रं हृद्वागगोचराः ॥ १२ ॥
एवं मे संशयं छेत्तुं भगवंतः क्षमाः किल ।
यदत्र चापलं मे तत्क्षंतव्यं भक्तवत्सलैः ॥ १३ ॥
ते ऊचुस्तात भद्रं ते सत्संकल्पस्त्वमेव हि ।
यो ध्यातोऽत्र त एवामी वयं जानीहि नोऽद्वयान् ॥ १४ ॥
अस्माकं मुनिशार्दूल भेदो न परमार्थतः ।
कर्तव्योऽत्र न संदेहो यत एकात्मका वयं ॥ १५ ॥
निजोपाधिगुणानेव गृहीत्वाऽत्र वयं त्रयः ।
सृष्टिस्थितिविनाशार्थं त्रिविधत्वं गता इव ॥ १६ ॥
पश्य नोऽलौकिकं रूपं पूर्वदृष्टं प्रयत्नतः ।
इत्युक्त्वांऽतर्हितास्ते तु तदाऽपश्यत्पुरो मुनिः ॥ १७ ॥
योगिराजं महात्मानं योगमार्गप्रवर्तकं ।
शुद्धस्फटिकसंकाशं भासयंतं दिशो दश ॥ १८ ॥
क्षणेन दृश्यते तत्तु त्रिगुणात्मकमुत्तमं ।
योऽत्रिणाऽऽराधितो योगतपसाऽकल्मषेण सः ॥ १९ ॥
योगाध्यक्षो योगिराजो योगसंसिद्धिदः प्रभुः ।
अत्रिसंकल्पसिध्यर्थं वरदानार्थमुद्यतः ॥ २० ॥
तप्तकांचनसंकाशः षड्भुजः सुस्मिताननः ।
यथाद्भुतो निद्रितो ना प्रज्ञानालंबनेन हि ॥ २१ ॥
बहिर्मुखो भवत्येवं भगवानप्ययं तथा ।
चित्प्रकृत्यवलंबेन शबलत्वमुपेत्य सः ॥ २२ ॥

भूत्वा बहिर्मुख इव देवो भक्तानुकंपया।
आविर्बभूव सहसा कार्तिके मासि पुण्यदे ॥ २३ ॥
कृष्णपक्षे प्रतिपदि रोहिण्यां गुरुवासरे ।
प्रथमे प्रहरे चैव मुहूर्ते प्रथमे विभुः ॥ २४ ॥
अवतारो द्वितीयोऽत्रिवरदाख्योऽयमीशितुः ।
तप्तकांचनसंकाशः षड्भुजः सुस्मिताननः ॥ २५ ॥
त्रिगुणात्मकमायायुक् त्रिमूर्तिवरवेषधृक् ।
त्रिमूर्तित्वाद् ब्रह्मविष्णुशिवलक्षणलक्षितः ॥ २६ ॥
मालाकमंडलुरधःकरपद्मयुग्मे ।
मध्यस्थपाणियुगले डमरुत्रिशूले ॥
यस्य स्त ऊर्ध्वकरयोः शुभशंखचक्रे ।
ध्यायेत्तमत्रिवरदं भुजषट्कयुक्तम् ॥ २७ ॥
ब्रह्मचिह्नमधःपाण्योर्विष्णुचिह्नं च मध्ययोः ।
ऊर्ध्वयोः करयो रुद्रचिन्हं ज्ञेयं विचक्षणैः ॥ २८ ॥
न निष्प्रयोजनानि स्युरायुधानि जगद्गुरोः ।
स्वकार्यसिद्धिहेतूनि न च तानि कथंचन ॥ २९ ॥
अद्वितीयस्य तस्यात्र मालया कस्य वा जपः ।
निष्क्रियस्याविकारस्य का कमंडलुना क्रिया ॥ ३० ॥
किं स्वानंदनिमग्नस्य विभोर्डमरुशंखतः ।
अद्वयस्य भयाभावात् किं शस्त्राभ्यां प्रयोजनं ॥ ३१ ॥
स्वभक्तानुग्रहायैव विभोर्मालादिधारणं ।
एकस्मिन्नस्य वपुषि स्वरूपद्वयकल्पना ॥ ३२ ॥
दक्षिणेनांगभागेन देव आदिगुरुर्मतः ।
वामेनाप्यंगभागेन मायावीश्वर उच्यते ॥ ३३ ॥

दक्षिणेऽस्याक्षमाला तु लसत्यादिगुरोः करे।
आदिक्षांता द्विपंचाशद्वर्णास्तैरक्षमालिका ॥ ३४ ॥
यत्किंचिन्मंत्रजातं तत्सर्वं वर्णात्मकं मतं।
सबीजं सरहस्यं तन्मोक्षसाधनमुच्यते ॥ ३५ ॥
निगमागमसंभूतं गृहीतं दक्षिणे करे।
मुमुक्षुभ्योऽधिकारिभ्यो मंदेभ्यो दातुमेव तत् ॥ ३६ ॥
तत ऊर्ध्वकरे चापि डमरुर्दक्षिणे गुरोः।
मुमुक्षुभ्यो मध्यमाधिकारिभ्यो मोक्षहेतवे ॥ ३७ ॥
पूर्वपक्षादिरूपेण शब्दज्ञानप्रकाशकम्।
वेदादिशास्त्रं डमर्वायुधेन परिकल्पितं ॥ ३८ ॥
नित्यानित्यविवेकाद्यैरुपायैस्तेन सर्वदा।
अनुगृह्णाति भगवान्मुमुक्षुभ्योऽपि मध्यमान् ॥ ३९ ॥
तत ऊर्ध्वकरेणात्तं तेन चक्रं सुदर्शनं।
मुमुक्षुभ्योऽप्युत्तमाधिकारिभ्यः सद्य एव हि ॥ ४० ॥
अज्ञानध्वांतनाशेन मुक्तये सुतरां शुभत्।
सुदर्शनं द्वादशारं गृहीतं निशितं दृढं ॥ ४१ ॥
अविद्याकामकर्मात्मभववृक्षनिकृंतनं।
कर्मबंधच्छेदनेनाऽऽवरणापगमेन च ॥ ४२ ॥
स्वात्मज्योतिःप्रकाशाय चक्रमेकमलं गुरोः।
एवं क्रमेण मोक्षोपयोगित्वाच्छ्रीगुरोरिदं ॥ ४३ ॥
दक्षिणांगं मुमुक्षूणां मोक्षायैव हि केवलं।
मायावीशस्य वामांगं कथ्यतेऽथ महेशितुः ॥ ४४ ॥
आपः कर्माणि यत्रालं कमंडयंते कमंडलुः।
अधोगतेन सव्येन पाणिना स धृतः किल ॥ ४५ ॥

कर्मणां फलदानेऽतो न स्वातंत्र्यं मनागपि ।
अतो व्यासः फलमत इत्यादि स्फुटमब्रवीत् ॥ ४६ ॥
जीवकर्मानुसारेण जीवान्नं दातुमीश्वरः ।
करे जीवनसंपूर्णं दधौ वामे कमंडलुं ॥ ४७ ॥
श्रुतिर्धाता यथापूर्वमिति प्राह यतस्ततः ।
जीवानां कर्मणां चानादित्वं ज्ञेयं विचक्षणैः ॥ ४८ ॥
ब्रह्मैव सन्नयं जीवोऽब्रह्मत्वं मन्यते स्वयं ।
आत्मानं मायया देहतादात्म्याध्यासमेत्य सः ॥ ४९ ॥
शश्वज्जन्मादिसंसारभाक्तदर्थं हि जीवनं ।
तत्कृतं संभृतं पूर्णं तेन स्वीयकमंडलौ ॥ ५० ॥
द्वितीयवामहस्ते तु त्रिशूलं निशितं द्युमत् ।
सदाचारव्यवहृतिप्रायश्चित्तस्वरूपकं ॥ ५१ ॥
जगतः स्थितिरेतेन कल्पिता परमात्मना ।
पुंसां धर्मार्थकामाख्यत्रिवर्गोऽनेन सिध्यति ॥ ५२ ॥
तृतीयवामहस्तस्थशंखो दिव्यो महारवः ।
जगतः स्थितये तेन त्रिविधा कर्मचोदना ॥ ५३ ॥
अपूर्वादिस्वरूपात्र ज्ञापिता परमात्मना ।
ततो जगच्चक्रमिदं बंभ्रमीतीश्वराज्ञया ॥ ५४ ॥
एवमीश्वरभागोऽयं जगत्स्थित्यै परेशितुः ।
तथाऽन्यगुरुभागश्च मायाभ्रमनिवर्तकः ॥ ५५ ॥
एवंविधं श्रीभगवत्स्वरूपं मासि कार्तिके ।
कृष्णपक्षे प्रतिपदि प्रपूज्यार्घ्याणि दापयेत् ॥ ५६ ॥
( अर्घ्याणि ) मायागुणविमुक्ताय सर्वलोकेश्वराय च ।
अत्रिवरदरूपाय कर्मणार्घ्यं ददाम्यहं ॥ ५७ ॥ १ ॥

अद्वैतानंदरूपाय मोहमायाश्रयाय ते ।
अत्रिवरदरूपाय कर्मणार्घ्यं ददाम्यहं ॥ ५८ ॥ २ ॥
अव्यक्ताव्यक्तरूपाय निर्गुणाय गुणात्मने ।
अत्रिवरदरूपाय कर्मणार्घ्यं ददाम्यहं ॥ ५९ ॥ ३ ॥
एवमर्घ्यत्रयं दत्वा कदलीफलमर्पयेत् ।
प्रीतोऽत्रिवरदोनेन स्वात्मानमपि दास्यति ॥ ६० ॥
एवंविधोऽत्रिवरदाख्यावतारो द्वितीयकः ।
दत्तात्रेयाख्यावतारस्तृतीयः प्रोच्यतेऽपरः ॥ ६१ ॥

इति अत्रिवरदाख्यो द्वितीयोऽवतारः ॥

---

## १४७ अथ तृतीयचरित्रप्रारंभः ।

॥ श्रीगणेशाय नमः ॥ श्रीदत्तगुरुभ्यो नमः ॥

भगवानत्रिवरदो वरदानाय चात्रये ।
आविरासीत्स एवाह वरं वरय भो मुने ॥ १ ॥
दुर्लभं त्रिषु लोकेषु यदलभ्यं दिवौकसाम् ।
तत्ते नूनं प्रदास्यामि भक्त्याऽऽकृष्टोऽस्मि यत्त्वया ॥ २ ॥
सद्भक्त्याप्यनसूयाया वशवर्ती यतस्ततः ॥
युवाभ्यां संप्रदास्यामि यदभीष्टं वृणीष्व तत् ॥ ३ ॥
इति श्रुत्वा भगवत उदारं वचनं मुनिः ।
अनसूयामुखं वीक्ष्य सस्मितं प्रांजलिर्जगौ ॥ ४ ॥
न भूतले न पाताले न स्वर्गेऽन्यत्र वापि च ।
वरणीयं ममास्त्येव यतः कामो न मेऽपरः ॥ ५ ॥
यदि प्रसन्नो भगवान्वरं दास्यति मे तदा ।
देयो भवादृशः पुत्रो नान्यत्किमपि कांक्षितम् ॥ ६ ॥

तच्छ्रुत्वाऽत्रिवचो गूढं स्वगतं प्राह धीश्वरः।
दयाक्षमारूपगुणशीलौदार्यशमादिभिः ॥ ७ ॥
मत्समोऽस्त्यपरो नातो मुनेः पुत्रो भवाम्यहम्।
नोचेन्मे सत्यसंधत्वं नश्येदेव न संशयः ॥ ८ ॥
इति निश्चित्य भगवान्दंपत्योः पश्यतोः सतोः।
सत्त्वप्रधानं स्वं रूपं धृत्वा प्राहात्रये स्मयन् ॥ ९ ॥
मयाऽहं तेऽत्रये दत्तस्त्वदधीनोऽस्मि सर्वथा।
इत्युक्त्वा बालभावेन दंपत्योः पुरतः स्थितः ॥ १० ॥
कार्तिके कृष्णपक्षे तु द्वितीयायां भृगोर्दिने।
मृगर्क्षे प्रथमे यामे मुहूर्ते प्रथमेऽपि च ॥ ११ ॥
आविरासीन्मुनेरग्रे दत्तात्रेयो दिगंबरः।
वरदानमृतं कर्तुं सर्वलोकैकमोहनः ॥ १२ ॥
इंद्रनीलप्रतीकाशश्चंद्रवक्त्रश्चतुर्भुजः
सर्वांगरुचिरो देवः रूपनिर्जितमन्मथः ॥ १३ ॥
शांडिल्योपनिषद्यस्य दत्तात्रेयस्य मंगलं।
ध्यानमुक्तं समासेन तदिदं ध्यातृमंगलं ॥ १४ ॥
दत्तात्रेयं शिवं शांतमिंद्रनीलनिभं प्रभुं।
आत्ममायारतं देवमवधूतं दिगंबरम् ॥ १५ ॥
भस्मोद्धूलितसर्वांगं जटाजूटधरं विभुं।
चतुर्बाहुमुदारांगं प्रफुल्लकमलेक्षणं ॥ १६ ॥
ज्ञानयोगनिधिं विश्वगुरुं योगिजनप्रियं।
भक्त्यानुकंपिनं सर्वसाक्षिणं सिद्धसेवितं ॥ १७ ॥
इत्यौपनिषदं रूपं ध्यात्वाऽत्रिर्जायया सह।
प्रणिपत्याह देवेशं भक्तकामदुघं प्रभुं ॥ १८ ॥

भगवन्भक्तभावज्ञ भावगम्य जनार्दन ।
त्वयाऽऽत्मदानमेतेन रूपेणेह कृतं खलु ॥ १९ ॥

अथापि नावयोस्तृप्तिरौरसात्मजकांक्षिणोः ।
अतएवौरसत्वं च समागच्छतु नौ भवान् ॥ २० ॥

एतत्सुमंगलं रूपं लोकोद्धाराय भूतले ।
तिष्ठत्वत्र जगन्नाथ प्रसन्नो भव नौ प्रभो ॥ २१ ॥

इत्यात्रिणाऽर्थितो देवो भगवानत्रिनंदनः ।
तथेत्यंगीचकाराजोऽव्ययोपि स्ववशोऽनघः ॥ २२ ॥

अवतारस्तृतीयोऽयं दत्तात्रेयाभिधो विभोः ।
संपूज्य विधिवद्दद्यादर्घ्याणि प्रीतये हरेः ॥ २३ ॥

( अर्घ्याणि ) दत्ताय दिव्यरूपाय तेजोरूपनिवासिने ।
भक्तसंतापनाशाय कर्मणार्घ्यं ददाम्यहं ॥ १ ॥ २४ ॥

अव्यक्ताद्वैतरूपाय निर्गुणाय गुणात्मने ।
परब्रह्मस्वरूपाय कर्मणार्घ्यं ददाम्यहं ॥ २ ॥ २५ ॥

मोक्षबीजाय मुक्ताय मुक्तनाथाय ते गुरो ।
सच्चिदानंदरूपाय कर्मणार्घ्यं ददाम्यहं ॥ ३ ॥ २६ ॥

एवमर्घ्यत्रयं दत्वा देवं संप्रार्थ्य पूर्ववत् ।
इक्षून्दद्यात्ततो देवः प्रीतो दास्यति चिंतितं ॥ २७ ॥

तृतीयोऽस्यावतारोऽयं दत्तात्रेयाभिधः स्मृतः ।
चतुर्थः कथ्यतेऽथायं कालाग्निशमनाभिधः ॥ २८ ॥

इति श्रीदत्तात्रेयाख्यस्तृतीयोऽवतारः

---

## १४८ अथ चतुर्थचरितप्रारंभः

॥ श्रीगणेशाय नमः ॥ श्रीदत्तगुरुभ्यो नमः ॥

चतुर्थोऽस्यावतारस्तु कालाग्निशमनाभिधः ।
अनसूयात्रितपसः फलभूतोऽयमेव हि ॥ १ ॥
निवृत्तस्तपसः सोऽत्रिर्जायया सह धर्मवित् ।
निजाश्रमं समासाद्य ध्याननिष्ठोऽभवत्तदा ॥ २ ॥
ततो बहुतिथे काले तापसोऽग्निर्मुनेस्तनौ ।
कालाग्निवत्प्रववृधे दुष्प्रधर्षोऽतिदारुणः ॥ ३ ॥
सोऽन्तरंगं ददाहात्रेः सर्वज्ञो भगवान्प्रभुः ।
ज्ञात्वा कारुणिकः शीघ्रं तच्छांत्यै सहसा स्वयम् ॥ ४ ॥
यथात्मा मूर्धसीमानं भित्वा विशति चांतरं ।
तथाऽत्रिमूर्धतः सोऽयं प्रविश्यांतः सुशीतलः ॥ ५ ॥
हृत्पुंडरीके दहरे परमे व्योम्नि निर्मले ।
कोटिचंद्रप्रतीकाश आपादतलमस्तकं ॥ ६ ॥
अत्रिमस्तकसंजातं कालाग्निं प्रशमय्य सः
मुनिं सुखमयं कृत्वा तस्थौ शांतस्वरूपधृक् ॥ ७ ॥
ततोऽत्रिः शांतहृदयो नेत्रे उन्मील्य चाग्रतः ।
अनसूयामृतुस्नातां लोभनीयतमाकृतिम् ॥ ८ ॥
पुत्रकामां महाभागां ददर्श तपसा ज्वलन् ।
देदीप्यमानं नेत्राभ्यामत्रेस्तेजो विनिर्गतं ॥ ९ ॥
द्यावापृथिव्योः संधिं तव्द्याप्य लोकस्य पश्यतः ।
अनसूयांतरं वेगात्प्राविशत्पुण्ययोगतः ॥ १० ॥
मार्गशीर्षे सिते पक्षे सप्तम्यां शोभने दिने ।
आविवेशानसूयायां गर्भभावं गतं तु तत् ॥ ११ ॥

नवभिर्दिवसैर्मासान्प्रकल्प्य नवमासिकः ।
स्ववचःपालनार्थाय स्वभक्तानुजिघृक्षया ॥ १२ ॥
अजोऽव्ययोपि सर्वात्माऽनसूयागर्भसंभवः ।
अभवच्चित्रकृल्लोके मनसोऽविषयोऽपि यः ॥ १३ ॥
अनसूया गर्भिणीति लोके चित्रं प्रदर्शितं ।
अयोनिसंभवो देवो मासि मासोत्तमे शुभे ॥ १४ ॥
स्वविभूतौ मार्गशीर्षे सर्वलोकसुखावहे ।
मनोहरे सुप्रसवे शुक्लपक्षे ज्ञवासरे ॥ १५ ॥
प्रदोषे पूर्णिमायां भे मृगशीर्षाभिधे शुभे ।
पतत्सु पुष्पवर्षेषु देवमुक्तेषु नाकतः ॥ १६ ॥
आवीरासीज्जगन्नाथोऽनसूयातोऽतिमायिकः ।
स्कांदोक्तो जन्मकालोयं पाद्मे यद्यपि चोच्यते ॥ १७ ॥
मार्गे मासि सिते पक्षे चतुर्दश्यां बुधे दिने ।
रोहिण्यां प्रथमे यामे ह्यवतीर्णो दिगंबरः ॥ १८ ॥
पूर्वमुक्तं समासेन सप्तम्यां गर्भधारणं ।
ततः परं तिथेर्वृद्धिः श्रीदत्तोत्पत्तिवासरे ॥ १९ ॥
सा चतुर्दश्यौदयिकी साकल्यवचनाच्च सा ।
प्रदोषकाले संगृह्य चतुर्दश्यां जनिः स्मृता ॥ २० ॥
तत्र तं पूजयेद्देवं कालाग्निशमनाभिधम् ।
आविर्भूतं जगत्त्रातुं दुर्वासश्चंद्रसंयुतम् ॥ २१ ॥
चंद्रोऽभूद्ब्रह्मणोंऽशो दत्तो विष्णुस्तु योगवित् ।
दुर्वासाः शंकरांशश्च ते त्रयोऽप्येकरूपकाः ॥ २२ ॥
इत्थं मार्गेऽवतीर्णं तं यथाविभवविस्तरं ।
संपूज्य देवमर्घ्याणि प्रदद्यात्परितुष्टये ॥ २३ ॥

(अर्घ्याणि) अमायायात्मरूपाय कालाग्निशमनाय च ।
तोयतत्त्वनिवासाय कर्मणार्घ्यं ददाम्यहं ॥ १ ॥ २४ ॥
ज्ञानानन्दैकदीपायानसूयानंदनाय च ।
भक्तारिष्टविनाशाय कर्मणार्घ्यं ददाम्यहं ॥ २ ॥ २५ ॥
निर्विकल्पाय शुद्धाय सिद्धाय परमात्मने ।
मायागुणविमुक्ताय कर्मणार्घ्यं ददाम्यहं ॥३॥ २६ ॥
एवमर्घ्यत्रयं दत्वा दद्यात्पंचामृतं सुधीः ।
तत्प्रीतयेऽमृतरसद्रव्यं वा दापयेत्तदा ॥ २७ ॥
दत्तात्रेयोऽवतु स्वीयान्कालाग्निशमनाभिधः ।
बालभावं समाश्रित्य योऽनसूयापयोऽपिबत् ॥ २८ ॥

इति श्रीकालाग्निशमनो नाम चतुर्थोऽवतारः

---

## १४९ अथ पञ्चमचरितप्रारम्भः

श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥

यदा दत्तोऽवतीर्णोऽयं कालाग्निशमनाभिधः ।
अत्रेर्गृहेऽवतीर्णो हि परमात्मा सनातनः ॥ १ ॥
तं द्रष्टुमागतास्तत्र देवाश्च ऋषयोपि च ।
गंधर्वाश्चारणाः सिद्धास्तथान्ये योगपारगाः ॥ २ ॥
आत्मानं दर्शयामास भगवान्योगिवल्लभः ।
अनादिनिधनो देवो योऽनसूयात्रिसंभवः ॥ ३ ॥
त्यक्त्वाऽर्भकस्वरूपं स तेषां संपश्यतां सतां ।
आविश्चकार भगवाञ्ज्योतीरूपं सनातनं ॥ ४ ॥

साक्षिरूपं स्वयंज्योतिः प्रत्यक्त्वेनैव चिंत्यताम् ।
अनायासेन मोक्षः स्यादित्यदर्शयदात्मभूः । ॥ ५ ॥
पूर्वरूपादन्यरूपं महातेजोयुतं विभुम् ।
तस्मिन्संददृशुः सर्वे तं योगिजनवल्लभं ॥ ६ ॥
देवादीन्विस्मितान्दृष्ट्वा तान्वागीशः प्रभुर्गिरा ।
श्लक्ष्णया बोधयामास स्वमाहात्म्यं सनातनं ॥ ७ ॥
न मे जन्म न मे कर्म न मे गर्भेऽपि संस्थितिः ।
निर्गुणोऽजो निराकारो योऽस्मि सोऽस्मि यथा तथा॥ ८ ॥
न मे देहः कुतः कालः संभवोऽपि न संशयः ।
मायागुणविमुक्तोऽहं भक्तानुग्रहकाम्यया ॥ ९ ॥
स्वरूपाज्जात इव च दर्शयामि स्वमायया ।
स्वभक्ताननुगृह्णामि सर्वलोकसुखावहः ॥ १० ॥
यद्बालत्वं समाश्रित्य दर्शितं रूपमुत्तमम् ।
तत्सर्वं लोकमोक्षाय चरितं विमलं मम ॥ ११ ॥
गच्छंतु निर्जराः सर्वे ऋषयश्च ममाज्ञया ।
सर्वात्मा सर्वगः साक्षी सर्वत्रावस्थितः प्रभुः ॥ १२ ॥
असंगोऽहमनंतोऽहमद्वयः प्रभुरीश्वरः ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १३ ॥
इत्यजत्वं चाक्रियत्वमसंगित्वं ममात्मनः ।
तथैव भवतां ज्ञेयं नात्र कार्या विचारणा ॥ १४ ॥
तच्छ्रुत्वा वचनं तस्य दत्तात्रेयस्य ते सुराः ।
ऋषयः पितरः सर्वे स्वं स्वं स्थानमुपागमन् ॥ १५ ॥
पंचमस्त्ववतारोऽयं यो योगिजनवल्लभः ।
मार्गशीर्षे शुक्लपक्षे पौर्णिमायां गुरोर्दिने ॥ १६ ॥

दिनमध्येऽवतीर्णोऽयं योगीन्द्रप्रियरूपधृक् ।
संपूज्य विधिना देवं तमर्घ्याणि प्रदापयेत् ॥ १७ ॥

(अर्घ्याणि) योगारिष्टविनाशायानसूयानंदनाय च ।
दत्तात्रेयाय देवाय कर्मणार्घ्यं ददाम्यहं ॥ १८ ॥

योगविज्ञननाथाय भक्तानंदकराय च ।
दत्तात्रेयाय देवाय कर्मणार्घ्यं ददाम्यहं ॥ १९ ॥

विश्वेश्वराय सिद्धाय विश्वरूपधराय च ।
पृथ्वीतत्वानिवासाय कर्मणार्घ्यं ददाम्यहं ॥ २० ॥

एवमर्घ्यत्रयं दत्वा दद्यान्मौक्तिकमुत्तमम् ।
यद्वा भक्ष्यविशेषस्य दानं दद्यात्स्वशक्तितः ॥ २१ ॥

सर्वेषामवताराणां सामान्यार्चनमुच्यते ।
नाममंत्रो नमोंतोऽत्र प्रणवादिः प्रकीर्तितः ॥ २२ ॥

मंत्रात्मा मंत्रराजाय दत्तात्रेयाय ते नमः ॥

इति श्रीवासुदेवानन्दसरस्वतीविरचितं योगिजन-
वल्लभावतारकथनं नाम पंचमावतारः ॥

---

## १५० अथ षष्ठचरितप्रारंभः ।

॥ श्रीगणेशाय नमः ॥ श्रीदत्तगुरुभ्यो नमः ॥

अवतारो योगिजनवल्लभाख्योऽयमीरितः ।
स एव योगिनां ध्येयः पूज्योऽभूद्योगसिद्धिदः ॥ १ ॥

तेनैव रूपेण विभुर्योगिनां मंडले स्थितः ।
योगिविघ्नान्निवार्याशु योगिनां गतिदोऽस्ति सः ॥ २ ॥

कालाग्निशमनाख्यो यः सोऽनसूयांकगोऽभवत् ।
नानाकौतुककृत्साध्वीस्तन्यपानरतोऽभवत् ॥ ३ ॥

कदाचिद्दैववशतः संजाते देशविप्लवे ।
ईतित्रस्ता हि मुनयो ऋषयोऽन्ये च मानवाः ॥ ४ ॥

अनसूयागर्भरत्नं दत्तात्रेयं दिगंबरं ।
शरण्यं शरणं प्राप्ताः सर्वे दीनतरास्तदा ॥ ५ ॥

स्तन्यपानरतोऽपीशस्तेषां विक्लवितं वचः ।
श्रुत्वा तेभ्योऽभयं दत्वा स्वसामर्थ्येन विश्वभृत् ॥ ६ ॥

अन्नपानादिदानेन लीलाविश्वंभरोऽभवत् ।
लीलया विश्वरूपाणि मुनिभ्यः स व्यदर्शयत् ॥ ७ ॥

तानि रूपाणि दृष्ट्वा ते सर्वेऽपि गतसाध्वसाः ।
साश्चर्यास्तुष्टुवुर्देवं लीलाविश्वंभराभिधम् ॥ ८ ॥

लीलाविश्वंभरः सोऽपि वेदाध्ययनतत्परः ।
शिष्यानध्यापयामास कदाचिद्ध्यानतत्परः ॥ ९ ॥

वीक्ष्य तं तादृशं देवं नित्यं दर्शनलालसाः ।
मुमुचुर्न महात्मानं संत्यज्याध्ययनादिकम् ॥ १० ॥

तेभ्यः कदाचित्सर्वेशः सुखदुःखसमन्वितं ।
प्रप्रंचं वनरूपेण दर्शयामास लीलया ॥ ११ ॥

अहंकारो महानद्रिर्व्यस्तपादपसंश्रयः ।
कामो व्यात्तमुखः सिंही मन्यवः कुपिताहयः ॥ १२ ॥

जलाशयो मनोमोह आपोऽगाधा हि तत्र च ।
क्रियायोगा हि ते वृक्षा निष्फलाः सफलाः क्वचित् ॥ १३ ॥

इत्येवं दर्शयित्वाऽथ तानुवाच महेश्वरः ।
इदं कालवनं कष्टं प्रायो दुःखकरं परम् ॥ १४ ॥

आपातरमणीयानि दृष्टान्यत्र फलानि तु ।
छाया विषमयी चापि पानीयं विषमेव हि ॥ १५ ॥
कष्टदं दर्शनादेव किमु तत्सेवितं पुनः ।
तस्मान्न स्थेयमत्राद्य भवद्भिः सद्धितेच्छुभिः ॥ १६ ॥
इति श्रुत्वाऽपि तद्वाक्यं मोहविभ्रंशितांतराः ।
अश्रद्धाय फलासक्त्या समंतात्परिबभ्रमुः ॥ १७ ॥
त्रितापदवतो दग्धाः कुपितैर्मधुपालिभिः ।
एकांते पिबतो लुब्धान्मधु काप्यविवेकिनः ॥ १८ ॥
तदा तिरोऽभवद्देवः सर्वे ते फललंपटाः ।
इतस्ततः प्रधावंतः केवलं क्लेशभागिनः ॥ १९ ॥
उपपन्ने क्षये तत्र तदा ते सस्मरुः परं ।
पुनस्तत्र सुखं दृष्ट्वा क्षणादेव विसस्मरुः ॥ २० ॥
फलमाधुर्यसंसक्त्या त्यक्तेशस्मरणाः पुनः ।
अवापुः सुतरां दुःखं विवेकपरिवार्जिताः ॥ २१ ॥
तांस्तादृशान्निरीक्ष्येशः करुणावरुणालयः ।
किंचित्स्वाभिमुखान् ज्ञात्वा मायावनमलोपयत् ॥ २२ ॥
तदा दत्तमदृष्ट्वा ते शुशुचुर्विरहार्दिताः ।
तदा प्रादुरभूद्देवः स्वरूपेणांबरे स्थितः ॥ २३ ॥
तदा ते चकिता ऊचुर्भगवन् क्व गतं वनं ।
दत्तात्रेयः स भगवान् प्रहस्याह कुमारकान् ॥ २४ ॥
यत एव समुत्पन्नं तस्मिन्नेव लयं गतं ।
एवमेव हि संसारो नात्र कार्या विचारणा ॥ २५ ॥
तस्मात्तं दुःखदं त्यक्त्वा यः सदा मत्परो भवेत् ।
तत्स्थोऽपि तदसारज्ञ आत्मज्ञानाद्विमुच्यते ॥ २६ ॥

त ऊचुर्भगवन्नात्मा कस्तज्ज्ञानं कथं भवेत्।
वयं तु साधनैर्हीना दीना नो भगवान् गतिः ॥ २७ ॥
श्रीदत्त आह सर्वेषामंतरात्माऽहमेव हि।
मज्ज्ञानं कर्मणा भक्त्या ज्ञानेन परिमुच्यते ॥ २८ ॥
त ऊचुर्भगवन्देव कथं नो मुक्तिरीदृशाम्।
ज्ञानेन कर्मणा भक्त्या हीना दीना वयं तव ॥ २९ ॥
त्वया सह चरिष्यामो नित्यं त्वद्दर्शनोत्सुकाः।
त्वां त्यक्तुमक्षमास्तस्मात् प्रसीद करुणां कुरु ॥ ३० ॥
इति तन्निश्चयं ज्ञात्वा कथं यास्यंत्यमी गृहान्।
संगो हि योगभंगाय तस्मादेवं करोम्यहं ॥ ३१ ॥
एवं विचार्य भगवान्निममज्ज सरोवरं।
तत्रापि ते सरस्तीरे तस्थुः सर्वे शतं समाः ॥ ३२ ॥
ततस्तद्वंचनार्थाय नारीं मायामयीं वराम्।
गृहीत्वा पाननिरतामुत्ततार जलात्प्रभुः ॥ ३३ ॥
स्त्रीसंसर्गिणं मामेते त्यजेयुरिति तेऽपि तम्।
सुरापानरतं नार्याऽऽलिंगितं तं न तत्यजुः ॥ ३४ ॥
तेजीयसां न दोषायेत्येवं निश्चित्य केचन।
भक्तिमंतो भगवताऽनुगृहीतास्त एव हि ॥ ३५ ॥
संयोगो वा वियोगो वा कथं सर्वात्मनो भवेत्।
अथापि लोकशिक्षार्थं दर्शयत्येवमीश्वरः ॥ ३६ ॥
संगात्संजायते कामस्ततः क्रोधादयोऽघदाः।
शोकमोहादयः सर्वे संगादेव भवंति हि ॥ ३७ ॥
योगभंगकरः संगः प्रतिकूलोऽविवेकिनाम्।
विवेकिनां तु सत्संगः सर्वदा योगसिद्धिदः ॥ ३८ ॥

यस्मात्त्याज्यो बहिःसंगः संगस्त्याज्यस्तथांतरः ।
इत्युपादिशदीशोऽयं लीलाविश्वंभरो विभुः ॥ ३९ ॥
पौषमासे पूर्णिमायां पुष्यर्क्षे बुधवासरे ।
स सूर्योदयवेलायामवतीर्णो महाद्युतिः ॥ ४० ॥
श्रद्धाभक्त्या तमभ्यर्च्य यथाविभवविस्तरं ।
त्रीण्यर्घ्याणि प्रदेयानि योगिवल्लभतुष्टये ॥ ४१ ॥
( अर्घ्याणि ) पूर्णब्रह्मस्वरूपाय लीलाविश्वंभराय च ।
दत्तात्रेयाय देवाय कर्मणार्घ्यं ददाम्यहं ॥ ४२ ॥
अद्वैतानंदरूपाय विश्वरूपाय शंभवे ।
अन्नमयाय देवाय कर्मणार्घ्यं ददाम्यहं ॥ ४३ ॥
लीलाविग्रहरूपायानसूयानंदनाय च ।
संसारश्रमनाशाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ४४ ॥
एवमर्घ्यत्रयं दत्वाऽन्नं दद्यात्तस्य तुष्टये ।
तेन तुष्टोऽभिलषितं लीलाविश्वंभरोऽर्पयेत् ॥ ४५ ॥

इति श्रीमद्वासुदेवानंदसरस्वतीविरचितलीलाविश्वंभराख्य-
षष्ठावतारवर्णनं नाम षष्ठोऽध्यायः ॥

---

## १५१ अथ सप्तमचरितप्रारम्भः

॥ श्रीगणेशाय नमः ॥ ॥ श्रीगुरुचरणारविंदाभ्यां नमः ॥

लीलाविश्वंभरस्यैवं चरितं प्रोक्तमुत्तमं ।
सिद्धराजस्य चरितमथ वक्ष्ये समासतः ॥ १ ॥
लीलाविश्वंभरो देवः कदाचित्पर्यटन्निजम् ।
रूपमाच्छाद्य बदरीवनं प्राविशदेककः ॥ २ ॥

परिभ्रमंस्तत्र तत्र लीलाविश्वंभरो विभुः ।
तत्रासन् बहवः सिद्धाः क्लेशसाधितसिद्धयः ॥ ३ ॥
सिद्धिसामर्थ्ययोगेन कामक्रोधपरायणाः ।
केचिन्नग्ना अनग्नाश्च मौनिनोऽमौनिनस्तथा ॥ ४ ॥
ध्यानस्था आसनस्थाश्च सदसद्वादवादिनः ।
तान्दृष्ट्वा भगवांस्तेषां प्रभावं संपरीक्षितुं ॥ ५ ॥
दिव्यरूपः पृष्ठभागे तेषामुपविवेश ह ।
तं योगमुद्रयाऽसीनं कुमारं सुमनोहरं ॥ ६ ॥
दृष्ट्वोचुः कस्त्वमिति तान् स च प्राह महामतिः ।
अप्रतीतस्वरूपोहमिति कस्ते वदाश्रयः ॥ ७ ॥
निराश्रयो ह्यनाथोऽहं कस्ते योगः कथं क्रिया ।
अक्रियश्चित्रयोगोऽहमिति कस्ते गुरुर्वद ॥ ८ ॥
स प्राह मे गुरुर्नास्ति का ते मुद्रा वदाधुना ।
स प्राह मम मुद्रेयं मायातीता निरंजनी ॥ ९ ॥
किं पश्यसीति यद् दृश्यं तद्वै पश्यामि सर्वतः ।
किं ते ध्येयमिति ध्यानाभावगम्यं यदस्ति तत् ॥ १० ॥
कस्ते मार्गः सुखं येन गम्यते सुशकः शिवः ।
अन्येन येन गंतुं न शक्यं मार्गः स एव मे ॥ ११ ॥
एवं विवदतां तेषां तावदाकाशमार्गतः ।
रुद्राश्च वसवश्चैवादित्याश्च मरुतस्तथा ॥ १२ ॥
महर्षयश्च साध्याश्च यक्षगंधर्वकिंनराः ।
अवसन्ना गतिस्तेषां भूमौ संपेतुरग्रतः ॥ १३ ॥
योगासिद्धिफलं नोऽस्तु यद्देवपतनं भुवि ।
मम सिद्धिफलं चैतन्मम सिद्धिफलं त्विति ॥ १४ ॥

वयं श्रेष्ठा वयं श्रेष्ठा इत्थं विवदिरे मिथः।
तान्दृष्ट्वोवाच सिद्धेशो भगवानत्रिनंदनः ॥ १५ ॥
विवादं मा कृथा व्यर्थं सिद्धाः शृणुत मे मतम्।
यस्यैते वचनादेव पुनर्यास्यंति देवताः ॥ १६ ॥
तेनैव कुंठितास्तस्मात्सर्वश्रेष्ठः स एव हि।
इत्युक्तास्ते तथेत्युक्त्वा प्रोचुः सिद्धाः पृथक् पृथक् ॥१७॥
प्रयांतु खेचरा भूयो ममैव वचनादिति।
न तदा गमनं तेषां बभूवातीव लज्जिताः ॥ १८ ॥
अभूवन्विगतक्रोधा बभूवुर्निरहंकृताः।
निस्तंभांस्तान्समालोक्य दत्तः सिद्धेश्वरोऽब्रवीत् ॥ १९ ॥
प्रयांतु खेचरा भूयो वचसा मे क्षणादिति।
तत्क्षणादेव ते सर्वे विमुक्तगतयः सुराः ॥ २० ॥
सर्वे यथागतं जग्मुर्विस्मिता अभवन् हि ते।
ततस्तं परमात्मानं ज्ञात्वा भक्तिपुरःसराः ॥ २१ ॥
अभिष्टूय महात्मानं नमस्कृत्य पुनः पुनः।
प्रमोदाविष्टमनसः सर्वे देवा ययुर्दिवम् ॥ २२ ॥
तदाश्चर्यं समालोक्य श्रुत्वा देवमुखात्स्तवं।
ज्ञात्वा तं पूर्णपुरुषं दत्तं सिद्धा ववंदिरे ॥ २३ ॥
ततस्तान् स्वपरान् सिद्धान् प्रशांतान्निरहंमतीन्।
स्वस्मिन् भक्तियुतान् दृष्ट्वा दत्तात्रेयोऽब्रवीदिदम् ॥२४॥
अहं सिद्धः परो योगी परमात्माऽऽत्मभूः स्वयम्।
देवदेवो जगन्नाथः कालाग्निशमनो हरिः ॥ २५ ॥
सर्वात्मा सर्ववित्साक्षी मतो वः परमेश्वरः।
शिवं भवतु सर्वत्र सर्वतो मत्प्रसादतः ॥ २६ ॥

प्रसन्नोऽहं प्रवक्ष्यामि यदिष्टं तद् वृणीष्व मत् ।
सर्वसिद्धिप्रदः सोऽहं सिद्धिभूः सकलाश्रयः ॥ २७ ॥
एवं तत्सिद्धराजस्य सुप्रसन्नस्य योगिनः ।
वचनं सिद्धिकामास्ते श्रुत्वा तदिदमब्रुवन् ॥ २८ ॥
यदि नस्त्वं प्रसन्नोऽसि देवदेव जगद्गुरो ।
कृपया परया युक्तः सुपुत्राय यथा पिता ॥ २९ ॥
अनंतसिद्धिदं योगं परसिद्धिहरं परं ।
त्वत्समं ब्रूहि सर्वज्ञ त्वयि भक्तिं सनातनीं ॥ ३० ॥
इत्येवं प्रार्थितः सिद्धैः सिद्धेशो भगवानजः ।
उवाच तानिदं वाक्यं दत्तात्रेयो जगद्गुरुः ॥ ३१ ॥
मत्सामर्थ्यप्रदो योगी न भूतो न भविष्यति ।
परसिद्धिहरश्चैव न तत्सिद्धिकरः पुनः ॥ ३२ ॥
परसिद्धिहरोऽन्ये को मत्तोऽत्र परमात्मनः ।
अनेकशक्तिमान् कर्ता दाता धाताऽक्षरोऽव्ययः ॥ ३३ ॥
सिद्धाः शृणुत मे सर्वे योगं तं कथयाम्यहं ।
यथाऽहमीश्वरः साक्षात् परमानन्दसागरः ॥ ३४ ॥
तथैव मंत्रराजोऽहं नादरूपोऽव्ययः शिवः ।
मदधीनं जगत्सर्वं मंत्राधीनोऽहमेव हि ॥ ३५ ॥
मंत्रोऽहं मंत्रगम्यात्मा मंत्राकारो निरामयः ।
स एव मंत्रराजोऽहमचिंत्योऽनंतशक्तिदः ॥ ३६ ॥
परसिद्धिहरं चात्मशक्तिदं वच्मि वो मनुम् ।
इत्युक्त्वा मंत्रजालं तान् स प्राहानंतशक्तिदम् ॥ ३७ ॥
सरहस्यं सविन्यासं ग्रहणादेव सिद्धिदम् ।
माघमासे पूर्णिमायां मघायां गुरुवासरे ॥ ३८ ॥

दिवैव संगवस्यांतें सिद्धेशस्तानुपादिशत् ।
सिद्धराजागमः सोऽभूत्सांगमंत्रश्च सक्रियः ॥ ३९ ॥

भोगमोक्षप्रदः शीघ्रं न देयोऽनधिकारिणाम् ।
सिद्धराजस्य तां मूर्तिं विचित्रां ध्यानमंगलाम् ॥ ४० ॥

माघे मासि प्रकटितामानर्चुस्ते सुभक्तितः ।
सिद्धराजोयमस्याकं देवतेति सुभक्तितः ॥
संपूज्य विधिवद्दद्युस्त्रीण्यर्घ्याणि महात्मने ॥ ४१ ॥

(अर्घ्याणि) सर्वसिद्धांतसिद्धाय देवाय परमात्मने ।
सिद्धराजाय सिद्धाय कर्मणाऽर्घ्यं ददाम्यहम् ॥ ४२ ॥

संसारदुःखनाशाय सर्वशोकहराय च ।
सिद्धराजाय देवाय कर्मणार्घ्यं ददाम्यहं ॥ ४३ ॥

सवर्णज्ञानदीपाय सर्वशक्तिधराय च ।
सिद्धराजाय शांताय कर्मणार्घ्यं ददाम्यहं ॥ ४४ ॥

एवमर्घ्यत्रयं दत्वा प्रदद्युः पुस्तकं शुभं ।
यथोपदेशं ते सिद्धाः सिद्धराजपरायणाः ॥ ४५ ॥

कालेनाल्पेन ते सिद्धिं प्रापुर्दत्तप्रसादतः ।
एवं यः पूजयेत् सोऽपि तद्वत् सिद्धिं समाप्नुयात्
सिद्धराजावतारोऽयं सप्तमः परिकीर्तितः ॥४६॥

इति श्रीमद्वासुदेवानंदसरस्वतीविरचितसिद्धराजावतारो
नाम सप्तमोऽध्यायः ॥

---

## १५२ अथ अष्टमावतारचरितम् ।

॥ श्रीगणेशाय नमः ॥ श्रीदत्तगुरुभ्यो नमः ॥

कस्मिंश्चिदथ काले स दत्तात्रेयो महामुनिः ।
निरीक्ष्य तांस्तथा सिद्धान्निजात्मनि व्यचारयत् ॥ १ ॥

कामः कारयिता कर्ता मन्युश्चैव तथाऽपरः ।
स्वतंत्रत्वं कुतस्तस्य जनस्यास्य विचारतः ॥ २ ॥

कामाधीनं जगत्सर्वं वर्तते सस्पृहं तथा ।
चिंतया परया व्याप्तं तापत्रयविकंपितम् ॥ ३ ॥

कामो हि नरकद्वारं दुःखदः पापसंग्रहः ।
सर्वानर्थकरः सर्गे भ्रमकः सर्वपीडकः ॥ ४ ॥

कामे पुष्टेऽनर्थपुष्टिः पुष्टेऽनर्थे जगत्क्षयः ।
अतः परं करिष्यामि काममुक्तमिदं जगत् ॥ ५ ॥

मम सायुज्यसंप्राप्तं ज्ञानादेव न संशयः ।
इति मत्वा दयालुत्वात्परमात्माऽत्रिसंभवः ।
तत्पूर्वरूपमासाद्य गुणातीतं स्वभावतः ॥ ६ ॥

ज्ञानयोगयुतं मुक्तस्वभावं सहजस्थितिम् ।
संप्राप्तमिव सादृश्यं ज्ञानिरूपमधारयत् ॥ ७ ॥

फाल्गुने मासि शुक्लायां दशम्यां रविवासरे ।
भास्करस्योदये चैव पुनर्वस्वृक्षसंयुते ॥ ८ ॥

गत्वाऽथ समितिं तेषां सिद्धानां मूर्धसंमिते ।
पुरस्तादुच्चके देशे स्थाने व्योमन्युपाविशत् ॥ ९ ॥

ततस्तमुच्चके स्थाने स्थितं व्योम्नि प्रभाविणम् ।
दृष्ट्वा प्रकृष्य तत्सिद्धिहाने ववृतिरे भृशम् ॥ १० ॥

तथापि तस्य तेनैषन्मुद्राभंगोऽपि नाभवत् ।
ततश्चेश्वरसामान्यसिद्धियोगबलाद्विभुम् ॥ ११ ॥
चालयामासुरीशस्य न किंचिदपि सोऽभवत् ।
यथा वायुविघातेन न चचाल महागिरिः ॥ १२ ॥
इत्युत्कृष्टप्रभावं तं ज्ञात्वा सर्वेऽपि विस्मिताः ।
पप्रच्छुः कस्त्वमित्येवं सोऽब्रवीत्पूर्ववत्पुनः ॥ १३ ॥
अप्रतीतस्वरूपोऽहमिति संस्मृत्य सोथ किम् ।
भवेद्वा नेति संशय्य पुनः प्रपच्छुरादरात् ॥ १४ ॥
कस्तवास्त्याश्रयो नाथो ह्यनाथोऽहमनाश्रयः ।
कस्ते योगः क्रिया का च का च विद्येत्यमूलकाः ॥ १५ ॥
कस्तवास्ति गुरुस्त्राता न मे त्राता तथा गुरुः ।
का ते मुद्रेति मायेति किं पश्यसि यदीक्ष्यते ॥ १६ ॥
किं ते ध्येयमिति ध्यानाभावगम्यं यदस्ति तत् ।
कस्ते मार्गो जना येन न गच्छंति स एव मे ॥ १७ ॥
इत्येतैर्वचनैस्तस्य स एवायं परेशिता ।
इति निश्चित्य तं मत्वा तेऽप्राक्षुर्विचिकित्सितम् ॥ १८ ॥
हे देव सर्वदेवेश दीननाथ जगत्पते ।
त्वत्प्रसादाद्वयं सर्वे तव शक्तिमुपागताः ॥ १९ ॥
तव शक्तिबलात्तस्मान्न विचाल्य स्थिरो यदा ।
तदा हि कथमस्माकं त्वत्समानत्वमच्युत ॥ २० ॥

श्रीदत्तात्रेय उवाच ।

सर्वभूतगतो वायुर्यथा सर्वस्य चेष्टकः ।
सोऽपि संचालने व्योम्नो नैव शक्नोति सर्वथा ॥ २१ ॥

सर्वावयवशून्यत्वात् कारणत्वाद्यथाम्बरम् ।
न चलत्यनिलाघातात्तथाऽहं चात्ममायया ॥ २२ ॥
कारणत्वान्निर्गुणत्वान्निर्विकारो निरामयः ।
सर्वत्रावस्थितो देहे सर्वसंस्पर्शवर्जितः ॥ २३ ॥
अबाध्यः सर्वभूतात्मा मायाधारो निराश्रयः ।
नित्यानंदमयं ब्रह्म सर्वसंगविवर्जितम् ॥ २४ ॥
नैवोत्पत्तौ समुत्पन्नः स्थितौ च न स्थितः कदा ।
न चैव प्रलये नाशः सत्यरूपस्य मे सदा ॥ २५ ॥
ब्रह्मैवाहं परं सत्यं शुद्धमद्वयमक्षरम् ।
सर्वशून्यमशून्यं च माययाऽनावृतं सदा ॥ २६ ॥
ईश्वरत्वमसद्यत्र सिद्धानां तत्र का कथा ।
विफलाभ्याससंसक्ता भवंतः काममोहिताः ॥ २७ ॥
कामो वः कारणं संगे दुःखायैव सुखाय च ।
कामो हि नरकस्येदं द्वारं मोहनमात्मनः ॥ २८ ॥
कामात् क्रोधस्य संचारः क्रोधाच्च स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् दुष्टकर्म ह्यन्याय्यं नरकप्रदम् ॥ २९ ॥
सिद्धियोगबलादेव नरकाराधनं महत् ।
न चैव मम संप्राप्तिर्न सुखं न परा गतिः ॥ ३० ॥
सर्वकामविनिर्मुक्तः सर्वसंकल्पवर्जितः ।
धीरो यथा तथा स्वस्थश्चालितोऽपि न चंचलः ॥ ३१ ॥
आत्माऽहं सर्वभूतस्थः सर्वदा संगवर्जितः ।
धीरो यथा तथा स्वस्थश्चालितोऽपि न चंचलः ॥ ३२ ॥

सिद्धा ऊचुः

गुरो त्रायस्व देवेश देवदेव रमापते ।
न जानीमो यथार्थं त्वन्माहात्म्यं वयमव्ययम् ॥ ३३ ॥

शत्रुः कामो मनुष्याणामज्ञानामल्पमेधसाम् ।
इति ज्ञातं यथार्थत्वं त्वत्प्रसादात् सुवाक्यतः ॥ ३४ ॥
मोचयस्व जगन्नाथ गुरो कामविबंधनात् ।
तदेकं वद निश्चित्य येन मुक्तिर्भविष्यति ॥ ३५ ॥

ज्ञानसागर उवाच ।

ममैवाराधनं कार्यं सर्वेशं नात्र संशयः ।
विहितेन मया पूर्वं मंत्ररूपेण कर्मणा ॥ ३६ ॥
फलसंगपरित्यागात् कामक्रोधादिवर्जनात् ।
मद्भक्त्या मत्पदप्राप्तिर्न युक्त्यैवेति निश्चितम् ॥ ३७ ॥
इति तत्वोपदेशेन त आत्मज्ञानसाधने ।
प्रेरिता मंत्ररूपेण स्वात्माराधनकर्माणि ॥ ३८ ॥
(अर्घ्याणि) सर्वत्राज्ञाननाशाय ज्ञानदीपाय चात्मने ।
सच्चिदानंदबोधाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ३९ ॥
भेदत्रयविनाशाय मोक्षबीजाय चात्मने ।
ज्ञानप्रियाय देवाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ४० ॥
भक्तारिष्टविनाशाय विज्ञानसागराय च ।
दत्तात्रेयाय देवाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ४१ ॥
एकमर्घ्यत्रयं दत्वा कर्तव्यं मंदिरार्पणं ॥ ४२ ॥

इति श्रीज्ञानसागरचरित्रवर्णनं नाम अष्टमोऽध्यायः ॥

---

## १५३ अथ नवमावतारचरितम् ।

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः ।

ततो बहुतिथे काले मंत्रानुष्ठानकारिणां ।
तेषामेवात्मभक्तानां क्रियाः सम्यक्परीक्षितुं ॥ १ ॥

तत्पूर्वरूपमाच्छाद्य मलीमसमिवाऽक्रियं ।
अब्रह्मरूपमपरमवधूतं व्यधारयत् ॥ २ ॥

गत्वा ततस्तत्समाजं मदांध इव दूरतः ।
अपश्यच्चरितं तेषामासीनो ध्यानमुद्रया ॥ ३ ॥

तदा केचिद्गता वृत्तिलयं विक्षिप्तमानसाः ।
केचित्संतोपसंयुक्ता आसंस्त्रस्ताश्च केचन ॥ ४ ॥

ग्राम्यवादरताः केचिद्वृद्धाहंकृतयस्तथा ।
कामक्रोधादिसंदुष्टस्वभावविहताः परे ॥ ५ ॥

पूर्वाभ्यस्तध्यानबलाद् ध्यानस्थाः केचनापरे ।
केचनानेकसंदेहसागरे पतितास्तथा ॥ ६ ॥

तान्दृष्ट्वा परमात्मा स दत्तात्रेयो दयाकरः ।
तेषां योगविरुद्धानि चित्तानि समुपाहरत् ॥ ७ ॥

तेन ते हृतचेतस्काः स्तब्धा आत्मक्रियासु च ।
तत्परित्यागतोऽभूवंस्तदेकतानबुद्धयः ॥ ८ ॥

अन्वासीनास्तमासीनं व्रजंतमनुयायिनः ।
तिष्ठंतमनुतिष्ठंतस्ते छायेव तमन्वगुः ॥ ९ ॥

इत्यात्ममायया तेषां मोहितानां परेशिता ।
बुद्धीरात्मरताः कृत्वा पुनस्ताः प्रमुमोच ह ॥ १० ॥

ततस्ते योगसंभ्रष्टाः सर्व एतेन नो भृशम् ।
मोहितं चित्तमित्येवं ज्ञात्वा संक्षुब्धमानसाः ॥ ११ ॥
छलवादप्रसंगेन जेतुकामास्तमीश्वरं ।
पप्रच्छुः कस्त्वमित्येवं सोऽब्रवीत्पूर्ववत्पुनः ॥ १२ ॥
अप्रतीतस्वरूपोऽहमित्ययं पूर्व एव हि ।
भवेद्वा नेति संदिह्य तमप्राक्षुस्तथा पुनः ॥ १३ ॥
तथैव तद्वचः श्रुत्वा स एवायं परेशिता ।
इति निश्चित्य ते सर्वे प्रणिपेतुर्मुहुर्मुहुः ॥ १४ ॥
जयेति शब्दमुच्चार्य स्तुत्वा सुस्तुतिभिस्तथा ।
श्रद्धया परयोपेतास्तमिदं वाक्यमब्रुवन् ॥ १५ ॥
हे दत्त करुणामूर्ते गुरो संदेहनाशन ।
कृपया पाहि देवेश शरणागतवत्सल ॥ १६ ॥
मंत्रयोगस्त्वया प्रोक्तः साकल्येन सुदुष्करः ।
अस्य योगस्य विक्षेपान्न पश्यामः स्थितिं स्थिरां ॥ १७ ॥
गुणतश्चञ्चलं चित्तं तद्धावति पिशाचवत् ।
देहे बद्धासने बद्धे मुद्रामालापरिग्रहात् ॥ १८ ॥
योगेनानेन सा सिद्धिर्भविष्यति कथं पुनः ।
अतस्त्रायस्व योगेश योगाभ्यासेऽतिदुर्बलान् ॥ १९ ॥
तच्छ्रुत्वा वचनं तेषां दत्तात्रेयः कृपांबुधिः ।
चैत्रशुक्ले पौर्णिमायां चित्रर्क्षे भौमवासरे ॥ २० ॥
द्वितीययामे प्रथमे प्रहरे प्रादुरास सः ।
आच्छाद्य पूर्वरूपं तदात्मानं विश्वरूपिणं ॥ २१ ॥
नानावर्णमनेकांघ्रिं बहूदरकरं तथा ।
बहुवक्त्रश्रोत्रनेत्रग्रीवं सज्योतिषं परम् ॥ २२॥

विश्वस्यास्याप्ययोत्पत्तिस्थित्यधिष्ठानमुत्तमम् ।
दर्शयामास तेनैव रूपेणोवाच तानिदं ॥ २३ ॥

निर्गुणोहं निराकारः सर्वव्यापी निरंजनः ।
नित्यानंदमयं ब्रह्म स्वभावाद् गुणवर्जितः ॥ २४ ॥

अहं मायाश्रयः साक्षी गुणद्रष्टा गुणात्मकः ।
सर्वसंगविहीनात्मस्वभावात्तत्र का क्रिया ॥ २५ ॥

मंत्रागमस्त्वनुष्ठानयोगसंसाधनक्षमान् ।
सुभक्तान् सुकरं त्वेवं भक्तिमार्गमुपादिशत् ॥ ३१ ॥

ममानुस्मरणादेव प्रेमनिश्चयसंयुतान् ।
मुक्तिं दास्यामि भक्तानां नानृतं मे प्रभाषितं ॥ ३२ ॥

इत्थं प्रतिज्ञाय शुभैर्वचोभिराच्छाद्य तद्विश्वमयं स्वरूपं ।
भूत्वा पुनः पूर्ववपुर्महात्मा तत्संनिधावेव तिरोबभूव ॥ ३३ ॥

(अर्घ्याणि) विश्वंभराय देवाय भक्तप्रियकराय च ।
भक्तप्रियाय देवाय कर्मणार्घ्यं ददाम्यहम् ॥ ३४ ॥

सर्वाज्ञानविनाशाय द्वंद्वतापहराय च ।
योगश्रमविनाशाय कर्मणार्घ्यं ददाम्यहम् ॥ ३५ ॥

नामप्रियाय देवाय योगसंस्थापकाय च ।
सर्वोत्तमाय सिद्धाय कर्मणार्घ्यं ददाम्यहम् ॥ ३६ ॥

एवमर्घ्यत्रयं दत्वा कुर्याद्रोदानमुत्तमं ॥ ३७ ॥

इति श्रीविश्वंभरावधूतचरितवर्णनं नाम नवमावतारः ॥

---

## १५४ अथ दशमावतारचरितम् ।

॥ श्रीगणेशाय नमः ॥ ॥ श्रीसद्गुरवे नमः ॥

कस्मिंश्चिदथ काले स भक्तानां परमेश्वरः ।
प्रेमनिश्चययुक्तानां भावं सम्यकपरीक्षितुम् ॥ १ ॥

माधवस्य चतुर्दश्यां शुक्लायां बुधवासरे ।
स्वात्यृक्षयुक्ते माध्यान्हे व्यक्तः स लोकपावनः ॥ २ ॥

अब्रह्मभिक्षुरूपेण नाम्ना शीलस्य धीमतः ।
कस्यचिद् द्विजवर्यस्य श्राद्धकालेऽगमद् गृहम् ॥ ३ ॥

शुद्धकांचनसंकाशो द्विबाहुरतिसुंदरः ।
तारुण्यमदसंपूर्णः कौपीनं छादनं दधन् ॥ ४ ॥

भिक्षापात्रं च दंडं च वामदक्षिणहस्तयोः ।
शुद्धचंदनसंमिश्रभस्मलिप्तकलेवरः ॥ ५ ॥

सहायी यायिना पश्चाच्छुना कृष्णेन वै युना ।
गत्वा तन्मंदिरे तस्थावकस्मात्पात्रमंडले ॥ ६ ॥

तं दृष्ट्वा ब्राह्मणाः सर्वे क्रोधावेशसमन्विताः ।
कस्त्वमित्येव पप्रच्छुर्धिक्कारेणातिनिष्ठुराः ॥ ७ ॥

अप्रतीतस्वरूपोऽहमित्येवं सोऽब्रवीत्तदा ।
तत्तस्य वचनं श्रुत्वा स्मृत्वा पूर्वविचेष्टितम् ॥ ८ ॥

स एवायं भवेद्वा नो इति संदिग्धमानसाः ।
तत्स्वरूपं विनिश्चेतुं शीलः पप्रच्छ पूर्ववत् ॥ ९ ॥

कस्तवास्त्याश्रयो नाथ इत्यादि सोऽब्रवीत्पुनः ।
अनाश्रयो ह्यनाथोऽहमित्यादिवचनं विभुः ॥ १० ॥

तेन तद्वचसा शीलस्तं विज्ञायात्मनो गुरुं।
बहुकृत्वो नमस्कृत्वा स्तुत्वा सम्यगपूजयत् ॥ ११ ॥

संकल्पिताभिरद्भिस्तत्पादौ प्रक्षाल्य धर्मवित्।
कुशपुष्पसमायुक्ता अर्घ्यास्तावा अथाकरोत् ॥ १२ ॥

सुगंधसुमनोधूपदीपप्रभृतिभिर्मुदा ।
उपचारैः समभ्यर्च्य श्राद्धार्थान्नं न्यवेदयत् ॥ १३ ॥

तस्य पात्रेऽथ प्रक्षाल्य मुखपाणिपदांबुजम्।
दत्वा तांबूलमष्टांगं दीपैस्तं निरराजयत् ॥ १४ ॥

तयोस्तच्चरितं दृष्ट्वा क्रोधेन महता युताः।
कृत्वा कोलाहलं विप्रा मंदिरान्निर्ययुर्बहिः ॥ १५ ॥

तान्दृष्ट्वान्येऽपि भूयांसो ब्राह्मणा मिमिलुस्तदा।
आश्चर्यं किमिदं चेति तद्ग्रामेऽन्येऽपि संगताः ॥ १६ ॥

इति ते मिलिताः सर्वे गत्वा तन्मंदिरं शुभं ।
ब्राह्मणास्तं भिक्षुरूपमप्राक्षुस्तीव्रया गिरा ॥ १७ ॥

रे दुष्ट वर्णहीनस्त्वं कथमत्रागतोऽसि वै।
ब्रह्मकर्मविनाशाय कस्ते वद पराक्रमः ॥ १८ ॥

भिक्षुरुवाच

किं तद्ब्रह्म कथं कर्म विप्राः सर्वे वदंतु मे।
तदहं नैव जानामि जानाम्यात्मानमात्मना ॥ १९ ॥

विप्रा ऊचुः

ओमित्येकाक्षरं ब्रह्म वेदरूपेण विस्तृतं।
तेनेदं विहितं कर्म नित्यनैमित्तिकात्मकम् ॥ २० ॥

भिक्षुरुवाच।

वेदं हि नैव जानामि किं तेन विहितं पुरा।
प्रब्रूत मेऽग्रतः सर्वं सांगोपांगं विवेकतः ॥ २१ ॥

विप्रा ऊचुः।

एकश्चतुर्विधः प्रोक्तो वेदोऽयं वेदवादिभिः।
न वेदस्याधिकारस्ते श्रवणे धर्मवर्जित ॥ २२ ॥
वर्णाश्रमविनष्टस्य कर्मभ्रष्टस्य सर्वदा।
न ते वेदाधिकारोऽस्ति वदिष्यामः कथं वयम् ॥ २३ ॥

भिक्षुरुवाच।

न मे वेदेऽधिकारोऽस्ति मायामुक्तस्य सर्वदा।
गुणत्रयात्मकं कार्यं न श्ववत्संस्पृशाम्यहं ॥ २४ ॥
गुणत्रयात्मकः सर्ग एव श्वा कल्पितो मया।
कृष्णो मायामयत्वाच्च न स्पृशाम्येनमात्मवान् ॥ २५ ॥
चतुर्वेदधरश्चायं सर्वकर्मविशारदः।
वेदव्याख्यानविद्वक्ता स तानिह वदिष्यति ॥ २६ ॥
इत्युक्त्वा पुरतः सर्वब्राह्मणानां स दूरगम्।
श्वानं तं चोदयामास पठ वेदान् क्रमादिति ॥ २७ ॥
स वेदान् चतुरः सांगान् सूत्राणि च पृथक् पृथक्।
पपाठ धर्मशास्त्राणि सर्वव्याकरणानि च ॥ २८ ॥
तेन प्रकाशिता वेदाः स्वरवर्गविभागतः।
सूत्रादीनि च सर्वाणि ये लोकमागमन् पुरा ॥ २९ ॥
पितॄन् शीलस्य तत्काले सांक्षिप्यात्मन्यथो पुनः।
संप्रदाये समायुंजन् सशीलायाधिकारिणे ॥ ३० ॥

आत्मज्ञानाधिकारे हि निर्जगाम ततो विभुः।
तद् दृष्ट्वाऽयं पुमान् पूर्ण इति मत्वाऽब्रुवन् जनाः ॥३१॥
देवदेव जगन्नाथ सर्वज्ञ परमेश्वर।
देहि देहि तदस्माकं ज्ञानं दुःखविनाशनम् ॥ ३२ ॥
अस्माकं भवकीटानां कोऽन्यस्त्राता विना त्वया।
त्रायस्व नः पुनः पाहि महात्मन् पुरुषेश्वर ॥ ३३ ॥
अस्माकं सकुटुंबानां क्षेमं देह्यविचंचलं।
यशः प्रज्ञां धनं देहि स्थानं देहि सुखात्मकं ॥ ३४ ॥
अस्माकं कर्मजंतूनामायुरारोग्यदो भव।
सर्वदा सुप्रसन्नस्त्वं भव देव रमापते ॥ ३५ ॥
इति मूढधियो लोका आत्माभिलाषलोलुपाः।
देहि देहीति शब्देन महात्मानं तमन्वगुः ॥ ३६ ॥
तान् दृष्ट्वान्येऽपि भूयांसो ब्राह्मणाः काममोहिताः।
तथाऽन्येऽपि च धावंतः पृष्ठतस्तं न तत्यजुः ॥ ३७ ॥
तान्मूढान् समितान् दृष्ट्वा परितः प्रसृतान् विभुः।
संगत्यागमपेक्ष्याथ तेषां धैर्यं परीक्षितुं ॥ ३८ ॥
प्रजगाम ततस्तूर्णं महारण्यं भयंकरं।
तत्र चैवासने योगी मौनीभूत उपाविशत् ॥ ३९ ॥
(अर्घ्याणि) मायामुक्ताय शुद्धाय मायागुणहराय ते।
शुद्धबुद्धात्मरूपाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ४० ॥
सर्वावयवमुक्ताय सर्वमायाहराय ते।
सर्वसंतापनाशाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ४१ ॥
शुद्धात्मज्ञानदीपाय भक्तारिष्टहराय ते।
मायापाशविमुक्ताय कर्मणाऽर्घ्यं ददाम्यहं ॥ ४२ ॥
एवमर्घ्यत्रयं दत्वा कुर्याद्दध्योदनार्पणम् ॥ ४३ ॥
इति श्रीमायामुक्तावधूतचरितं नाम दशमोऽवतारः

## १५५ अथ एकादशावतारचरितम् ।

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः ।

तेनैव ध्यानयोगेन स्थितं चापि न ते जहुः ।
व्यालव्याघ्राग्निरूपाणि माययाऽदर्शयद्विभुः ॥ १ ॥
तथापि ते महात्मानं नो जहुः काममोहिताः ।
पूर्वरूपं तदाऽऽच्छाद्य मायायुक्तोऽभवत्तदा ॥ २ ॥
ज्येष्ठशुक्लत्रयोदश्यां भृगौ स्वात्यामिनोदये ।
प्रादुर्बभूव स विभुर्मायायुक्तावधूतकः ॥ ३ ॥
शुद्धः श्यामो युवा ध्यानयोगस्थोऽके स्वमायया ।
नारीमादाय कल्याणीमुपविष्टो ह्यभासत ॥ ४ ॥
तं मायासहितं ते न तत्यजुः काममोहिताः ।
विसृज्य ध्यानयोगं तं गीतं सह तया जगौ ॥ ५ ॥
तं गायनपरं चापि ते जना नैव तत्यजुः ।
ततः सह तया देव्या मद्यमांसरतोऽभवत् ॥ ६ ॥
ततस्तं मायया गुप्तं मद्यमांसादिसेवितं ।
शंकामुक्तरतिं दृष्ट्वा भ्रष्टोऽयमिति तत्यजुः ॥ ७ ॥
ततस्तान्निर्गतान्वीक्ष्य स्वगतं प्राह सो विभुः ।
नारीयं दुष्टसंसर्गप्रतिबंधविमोचिनी ॥ ८ ॥
योगानुकूलभूता मे सर्वदा सुखकारिणी ।
विचित्ररूपमय्याशु सर्वसंगनिवर्तकम् ॥ ९ ॥
इदं च मे पानमिदं च मांसप्रसेवनं मे जनसंगमुक्तये ।
इत्थं सदा योगहितं विचार्य तेनैव रूपेण चिरं चचार ॥ १० ॥
श्रुत्वैवमर्जुनः प्राह देवेन्द्रेणार्चितः कथं ।
एवंप्रभावो देवोऽपि श्रद्दधानाय शंस मे ॥ ११ ॥

गर्गमुनिरुवाच

मतावनात्तसुभगव्रतोऽयं परमेश्वरः ।
तल्लीलां शृणु भूपेंद्र यतोऽभीष्टार्थभागभूत् ॥ १२ ॥

स दैत्यो दैत्यराट् जंभो देवेंद्रोपि सदैवतः ।
स्वर्गायायुध्यतान्योन्यं दिव्यवर्षं पुरा भृशम् ॥ १३ ॥

दैत्यैर्देवाः पराभूता गत्वोचुर्जीवमातुराः ।
दृष्टः पराजयो नोऽद्य तत्किं कार्यमतः परम् ॥ १४ ॥

तानाश्वास्याह धिषणो दत्तात्रेयं तपोधनं ।
शरणं यात वरदः स कार्यं वः करिष्यति ॥ १५ ॥

इत्युक्तः सामरः शक्रः प्राप दत्ताश्रमं शुभं ।
तत्र देवं महात्मानमप्रतर्क्यं ददर्श सः ॥ १६ ॥

दिगंबरमपि स्वांके धृत्वा बालां दिगंबराम् ।
अनघां सुदतीं तन्वीं पानासक्तामपि स्थितां ॥ १७ ॥

दृष्ट्वैवमपि ते चक्रुः सेवां सर्वेऽमराः सदा ।
तिष्ठंतमुपतस्थुस्ते प्रणता यान्तमन्वगुः ॥ १८ ॥

भक्त्यैवं बहुकालं ते सेवयामासुरादरात् ।
अथैकदाह भगवान् देवाः किं सेवयेच्छथ ॥ १९ ॥

देवा ऊचुः प्रणम्येशं परमात्मन्जगत्प्रभो ।
सयज्ञभागं त्रैलोक्यं दानवैरखिलं हृतं ॥ २० ॥

वयं हृताधिकाराश्च तिष्ठामो मर्त्यवद् भुवि ।
परित्राणाय नो देव तद्वधे च धियं कुरु ॥ २१ ॥

त्वद्भक्तानां सुराणां नो विना त्वच्चरणांबुजात् ।
गतिर्न विद्यते भूमन् पाह्यार्तान् शरणागतान् ॥ २२ ॥

प्रहस्य प्राह तान्छ्रीमानहमुच्छिष्टदूषितः ।
मद्यासक्तो वशी नैव मत्तः किं भवतां भवेत् ॥ २३ ॥
स्त्रीसंभोगो हि दुःखाय तापाय च पुनस्तु सः ।
दैवादुच्छिष्टतामस्याः प्राप्तोहं किमतो भवेत् ॥ २४ ॥
देवा ऊचुस्त्वमनघो ज्ञानदीपोऽनघाप्यसौ ।
विद्या तव विभो यस्याः प्रसादात्सद्गतिः खलु ॥ २५ ॥
यथाऽर्कस्य प्रभा भूमन् विप्रचंडालसंगिनी ।
पुण्यं पापं च नादत्ते तथेयं प्रकृतिस्तव ॥ २६ ॥
श्रीदत्तः प्राह यद्येवं भवतां संमतं ततः ।
युद्धायाहूयतां दैत्या निहानयत मा चिरं ॥ २७ ॥
ततो हृष्टाः सुरा जग्मुर्दैत्यास्तेऽपि महाबलाः ।
मुंचंतो विविधास्त्रौघान्युयुधुर्मदविह्वलाः ॥ २८ ॥
पलायनपरा आसन् देवास्तेऽसुरपीडिताः ।
पृष्ठतोऽनुव्रजन्तस्ते दैत्या दत्ताश्रमं गताः ॥ २९ ॥
कालयंतः सुरान् दैत्या हन्यमानान्भयातुरान् ।
श्रीदत्तपादसंलग्नान् समस्ताञ्छरणार्थिनः ॥ ३० ॥
ददृशुस्ते महात्मानं दत्तात्रेयं दिगंबरं ।
तन्वीं तां वामपार्श्वस्थां चार्वंगीं प्रमदोत्तमां ॥ ३१ ॥
पद्मपत्रायताक्षीं तां सुदतीं सुस्तनीं शुभां ।
सर्वयोषिद्गुणाढ्यां दृष्ट्वाऽऽसन् काममूर्च्छिताः ॥ ३२ ॥
साभिलाषास्ततो दैत्यास्त्यक्त्वा देवान् वधूं वरां ।
हर्तुं मनो दधुः सर्वे तत्सौंदर्यविमोहिताः ॥ ३३ ॥
वयं स्त्रीरत्नलाभेन कृतार्था इति तेऽसुराः ।
उक्त्वा बलात् स्त्रियं क्षिप्त्वा शिबिकायां च के दधुः ॥३४॥

स्वस्थानाभिमुखा जग्मुः सानुरागाः स्मरातुराः ।
योगींद्रोऽथ प्रहस्याथ दानवान्पश्यतामराः ॥ ३५ ॥
परांगनाभिमर्शोत्थपापेनातिबलीयसा ।
हतश्रीका हतबला जाता एते न संशयः ॥ ३६ ॥
तन्मूर्धगाऽधुनेयं श्रीः शीर्षाण्युत्कृत्य सत्वरं ।
आयास्यत्यत्र नैवात्र शंका ह्येते मृतोपमाः ॥ ३७ ॥
हन्यंतां तन्न भेतव्यं प्राप्तोऽद्य विजयक्षणः ।
भवंतोऽत्र निमित्तं ते हतप्रायाः श्रियार्दिताः ॥ ३८ ॥
इत्युक्तास्ते सुरा गत्वा शस्त्रैर्दैत्यशिरांसि तु ।
फलानीवाशु वृक्षेभ्यः पातयामासुरुद्यताः ॥ ३९ ॥
हतेषु तेष्वजं प्राप्ता श्रीरुत्पत्त्याऽविभागिनी ।
देवा अपि ययुः स्वर्गं पूर्ववच्छ्रीधराज्ञया ॥ ४० ॥
एवंप्रभावः श्रीदत्त ईशस्तं शरणं व्रज ।
इत्युक्तः सोऽर्जुनस्तेन श्रीदत्ताश्रममाययौ ॥ ४१ ॥

इति एकादशावतारे श्रीमायायुक्तावधूतचरिते जंभासुर-
पराजयो नाम प्रथमोध्याऽयः ॥

---

॥ श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥

तदेव रूपमाराध्य कार्तवीर्यार्जुनो नृपः ।
तत्प्रसादाद्योभयर्धिं प्राप्तवान् तत्प्रसादतः ॥ १ ॥

अर्जुन उवाच

मही महेश योगस्य मयास्थेया कथं वद ।
इति पृष्टोऽर्जुनेनाह सांगं योगं ह्यधीश्वरः ॥ २ ॥

मायायुक्तावधूत उवाच

प्रयुंजती यदाऽऽत्मानं बुद्धिस्तत्प्रेरकस्य हि।
मही देवस्य सवितुर्मम कार्या परिष्टुतिः ॥ ३ ॥

यो मद्गतान्तरात्माऽत्र श्रद्धावान्भजते हि मां।
स ममातिप्रियो नूनं सर्वेषामेव योगिनां ॥ ४ ॥

त्वमपि श्रद्धया राजन् योगं युंजन् भजस्व मां।
मत्प्रसादादिहैवाशु मत्सायुज्यं गमिष्यसि ॥ ५ ॥

इत्युक्तः प्रणतो राजा नत्वा प्राह सगद्गदं।
फुल्लास्याब्जो गलन्नेत्रो हृष्टरोमा तदाऽचिरात् ॥ ६ ॥

मोहतमो मम नष्टं त्वद्वचनान्न हि कष्टं।
शिष्टमिदं मयि हृष्टं हृत्परमात्मनि तुष्टं ॥ ७ ॥

क्लेशरुजां हरणेन त्वच्चरणस्मरणेन।
अस्मि कृतार्थ इहेश श्रीश परेश महेश ॥ ८ ॥

प्रेमदुघं तव पादं को न भजेदविवादं।
दैववशाद्धृदि मेयं दर्शितवानसि मेयम् ॥ ९ ॥

आश्रिततापहरं तं पातकदैन्यहरं तम्।
नौमि शिवं भगवंतं पादमहं तव संतम् ॥ १० ॥

गुरो गुरुतरागम्य गुरुगम्य गुणाकर।
गुरूत्तम नमस्तेऽस्तु संनिधो भव सर्वदा ॥ ११ ॥

एवं सुतीर्थः श्रीदत्तस्तीर्थकीर्तिः प्रसादितः।
फुल्लहन्नेत्रवक्त्रश्च प्रेम्णा प्राह परेश्वरः ॥ १२ ॥

विदितं मत्प्रसादेन परं तत्वं त्वयाऽनघ।
यावद् दृढीभवेत्तावदभ्यासं कुरु यत्नवः ॥ १३ ॥

अनुभूय चिरं तेन कृतकृत्यो भविष्यसि ।
इत्युक्त्वा दक्षिणं हस्तं निदधौ तच्छिरस्यजः ॥ १४ ॥
मा भी राजन् कृतार्थस्त्वं सायुज्यं मम यास्यसि ।
इत्युक्तस्तं प्रणम्याशु गुहां गत्वा यथाविधि ॥ १५ ॥
उपविश्यासने दध्यौ प्रसन्नकरणोऽर्जुनः ।
समाहितोऽल्पकालेन सोऽभवत् सुदृढासनः ॥ १६ ॥
उत्थितो द्वादशदिनैः पुनर्मासेन सुस्थिरः ।
पुनः स्थाणुर्निश्चलात्मा त्रिमास्या स समुत्थितः ॥ १७ ॥
उत्थाय शनकैः प्राप्य ववन्दे‍ंघ्र्यब्ज ईशितुः ।
तमालिंग्याह भगवाननुभूतं किमुच्यतां ॥ १८ ॥
प्रहस्याहार्जुनो नत्वा भूमन् कानुभवः पृथक् ।
पृथक् च कोऽनुभविता सर्वत्रास्मीह खे खवत् ॥ १९ ॥
बहुना किमिहोक्तेन निस्तीर्णोऽस्मि भवांबुधेः ।
परमानंदसंदोहनिमग्नोऽस्मि निराकुलः ॥ २० ॥
न किंचिन्मेऽस्ति कर्तव्यं कृतं सर्वमशेषतः ।
ज्ञातव्यमपि विज्ञातं प्राप्तं प्राप्तव्यमप्यहो ॥ २१ ॥
इदं स्वात्मसुखं त्यक्त्वा मनो मे नैति कुत्रचित् ।
न कं कृतेन राज्येन नाकं त्यक्तेन वा पुनः ॥ २२ ॥
यद्याज्ञा भवतो भूयो ध्यानार्थं प्रविशे गुहां ।
ईक्षे भवत्स्वरूपं वा सगुणं नाग्रहो मम ॥ २३ ॥
श्रीशः प्राह नृप स्नात्वा कृत्वा नित्यविधिं सुधीः ।
कृत्वाऽऽहारं समाधिं च श्वोभूते व्रज पूर्णदृक् ॥ २४ ॥
इत्याज्ञप्तस्तथा चक्रे सोऽर्जुनोऽथ समाहितः ।
षण्मासात्पुनरुत्थानं प्राप श्रीदत्तवांच्छया ॥ २५ ॥

ततः पुनर्विशेत्युक्तो भूयो योगी समाहितः ।
वर्षेणोत्थाय चागत्य नत्वाग्रे श्रीगुरोः स्थितः ॥ २६ ॥
तं प्राह प्रणतं शांतं स्वभक्तं भक्तवत्सलः ।
स्वाग्रे तमुपवेश्यांगं त्वया पृष्टं मयोदितं ॥ २७ ॥
किमाचारेण मे कृत्यं तवापि च तथाप्ययं ।
धर्मः सनातनः सेव्यो लोकोपकृतये सदा ॥ २८ ॥
लोकबाधानिरासार्थं विपरीतं क्वचिद्बहिः ।
चरित्वाऽपि न हि त्याज्याः क्रिया वर्णाश्रमोचिताः ॥२९॥
गृहस्थेन त्वया भूप त्रिविधा कर्मचोदना ।
लोकसंग्रहसिध्यर्थं श्रद्धयैव विजानता ॥ ३० ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोऽपि च ।
स यत्प्रमाणं मनुते लोकस्तदनु वर्तते ॥ ३१ ॥
दोषबुध्योभयातीतो निषिद्धान्न निवर्तते ।
गुणबुध्या न विहितं करोति ज्ञोऽपि बालवत् ॥ ३२ ॥
यस्त्वात्मरतिरात्मज्ञः स्वात्मतृप्तः सदात्मवान् ।
स्वात्मन्येवात्मना तुष्टस्तत्कार्यं क्वावशिष्यते ॥ ३३ ॥
कृतेन तस्य नैवार्थो नानर्थोऽप्यकृतेन च ।
अतोऽस्य नैव कुत्रापि कश्चनार्थव्यपाश्रयः ॥ ३४ ॥
द्वावेतौ पुरुषौ लोके परमानंदनिर्भरौ ।
योगयुक्तो द्वयातीतो यश्च बुद्धेः परं गतः ॥ ३५ ॥
पुरीं गच्छावनिं पाहि सप्तद्वीपां भुजार्जितां ।
देवान् यज्ञैर्यज श्राद्धैः पितॄन् दानैर्द्विजानपि ॥ ३६ ॥
विप्रान्संतर्पय स्वर्णगोभूकन्यारथादिभिः ।
भूयो भूयोऽपि मे प्रीत्या दर्शनं च समाचर ॥ ३७ ॥

स्मरणं कुरु राज्येऽपि हृदाऽव्यग्रेण मे सदा ।
परानंदस्वरूपं मे न विस्मरसि कर्हिचित् ॥ ३८ ॥
अंतर्निष्ठः सदा युक्तो बहिर्व्यवहरन्नपि ।
प्रवाहपतितं कर्म कुरु तेन न लिप्यसे ॥ ३९ ॥
जीवन्मुक्तः सदा तिष्ठ यावदारब्धमात्मदृक् ।
ततो विदेहकैवल्यं प्राप्स्यसे मयि निश्चितं ॥ ४० ॥
मयाऽनुशिष्टो गच्छाशु यथोक्तं सम्यगाचर ।
सुखी भवानंदमयः सदैव त्वं निरामय ॥ ४१ ॥

इति एकादशावतारे श्रीमायायुक्तावधूतचरिते कार्तवीर्यार्जुन-चरितवर्णनं नाम द्वितीयोऽध्यायः ॥

---

श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥

प्रविश्याश्रममासीनं दत्तात्रेयं दिगंबरं ।
ददर्शानघयाऽऽश्लिष्टं देव्या रामो महामतिः ॥ १ ॥
अभिवाद्येश्वरं मत्वा प्रार्थयामास भक्तितः ।
कृपां कुरु मयि ब्रह्मन्भक्तवत्सल सर्ववित् ॥
संस्कर्तुं पितरावत्र प्राप्तोस्मि ब्रूहि मे विधिम् ॥ २ ॥

श्रीदत्त उवाच

अनाचारो न जानामि धर्मं वाऽधर्ममच्युत ।
यथेष्टां गतिमाश्रित्य स्थितोऽस्मीह पिशाचवत् ॥ ३ ॥

राम उवाच

योगीश्वरः सर्वगुरुः कर्ता हर्ता जगत्प्रभुः ।
सदानंदो गुणातीतो धर्माधर्मौ कुतस्तव ॥ ४ ॥
रामोऽवदत् करिष्येहं महीं निःक्षत्रियामिति ।
संकल्पितमृतं भूयात् प्रसादाद्भवतोऽधुना ॥ ५ ॥

दत्तः प्राह तमालिंग्य त्वं सखा मेऽसि निश्चितं।
कृतं साधु त्वया राम सत्यसंधो भविष्यसि ॥ ६ ॥
ततः श्रीशाज्ञयाऽऽनीय सर्वतीर्थानि सायकैः।
भित्वाऽद्रिं विधिवत् सस्नौ रामः पश्चाच्च रेणुका ॥ ७ ॥
गुरुणापि समाधाय क्रव्यादाग्निं यथाविधि।
सुमंगला विवेशासौ सह पत्याऽऽहिताग्निना ॥ ८ ॥

## राम उवाच

यज्ञाय ज्ञाय ते दत्त नमस्त्वं मे सखास्यतः।
भूत्वाऽऽचार्यः कारयौर्ध्वदेहिकं विधिवत्तयोः ॥ ९ ॥
इत्यर्थितः स रामेण भूत्वाऽऽचार्योऽप्यकारयत्।
विधिनाऽञ्जलिदानादि पिंडनिर्वापणादि च ॥ १० ॥
श्रीदत्तः प्राह पितरौ क्व गतौ राम वेत्सि किम्।
स प्राह त्वत्प्रसादात्तौ स्वर्गताविति भाति मे ॥ ११ ॥
श्रीशः प्राह मृतौ स्वर्गं गतावित्यज्ञभावना।
न मृतौ न गतावेतौ पश्य लीलाविहारिणौ ॥ १२ ॥
रामोऽपि पितरौ दृष्ट्वा द्योतयंतौ दिशस्त्विषा।
ननाम परया भक्त्या तौ ततोऽदर्शनं गतौ ॥ १३ ॥
प्राहाश्लिष्य प्रभू रामं क्षत्रियाज्जह्यधार्मिकान्।
मच्चिदंशयुतस्त्वं तु सखे जिष्णुर्भविष्यसि ॥ १४ ॥
ततो रामः प्रणीतायां स्नात्वा संकल्प्य सायुधः।
त्रिःसप्तवारं निःक्षत्रां क्ष्मां कृत्वाऽस्रसरांस्यधात् ॥ १५ ॥
पितॄन् संतर्प्य शस्त्राणि प्रक्षाल्याचार्यमत्रिजं।
ऋत्विजः कश्यपमुखान्वृत्वा सोमेन सोऽयजत् ॥ १६ ॥

सर्वे देवा यत्र तृप्ता विप्राश्चान्नधनांशुकैः ।
सर्वां क्ष्मां कश्यपायादाद्विशुद्धात्मा विधानतः ॥ १७ ॥

स्वर्णवस्त्रधनै रामो दत्ताचार्यमपूजयत् ।
तत्सर्वं ब्राह्मणेभ्योऽदाद्भगवान् भक्तिभावनः ॥ १८ ॥

प्राह रामं निवेश्यांके बालेदं दुष्करं कृतं ।
कर्मामी क्षत्रिया दुष्टा दुर्जया अपि ते हताः ॥ १९ ॥

कृतो यज्ञोऽपि विधिवच्छूरोऽसि त्वं हरिः स्वयम् ।
रामः प्राह न शूरोऽहं प्रसादो भवतामयं ॥ २० ॥

साधु साध्विति ते प्राहुर्देवाश्च मुनयोऽपि च ।
रामेण सत्कृता जग्मुः स्वस्वधामाखिला मुदा ॥ २१ ॥

सख्यं कृत्वाऽवसद्रामस्तस्मै तुष्टोऽवदत्प्रभुः ।
रहस्यं त्रिपुरादेव्याः श्रवणान्मुक्तिदं क्षणात् ॥ २२ ॥

सखा मे त्वं चिरं जीव कंचित्कालं वसात्र तु ॥
तपश्चर ततो लोकशर्मणे पश्चिमांबुधौ ॥ २३ ॥

त्वयि तेजोऽद्य यन्न्यस्तमवतारांतरे पुनः ।
आदास्ये त्वं ततो ब्राम्ह्या लक्ष्म्या युक्तस्तपश्चर ॥ २४ ॥

भविष्यसि महर्षिस्त्वं नूनं सावर्णिकेऽतरे ।
ततः प्राप्ते महाकाले मत्सायुज्यं गमिष्यसि ॥ २५ ॥

एवं रामं जामदग्न्यमुक्तवान् भगवान् प्रभुः ।
रामोऽपि स्वाश्रमं गत्वा कंचित्कालमुवास ह ॥ २६ ॥

इति एकादशाऽवतारे श्रीपरशुरामानुग्रहो नाम तृतीयोऽध्यायः

---

(अर्घ्याणि) स्वमायागुणगुप्ताय मुक्ताय परमात्मने ।
सर्वत्राज्ञाननाशाय कर्मणार्घ्यं ददाम्यहम् ॥ २७ ॥ १ ॥

मायास्थाननिवासाय मायामुक्ताय चात्मने ।
भक्तारिष्टविनाशाय कर्मणा० ॥ २८ ॥ २ ॥

योगारिष्टविनाशाय देवदेवेश्वराय ते ।
जंभदर्पविनाशाय कर्मणार्घ्यं० ॥ २९ ॥ ३ ॥

एवमर्घ्यत्रयं दत्वा कुर्यान्मधुसमर्पणं ॥ ३० ॥

इति श्रीमद्वासुदेवानंदसरस्वतीविरचितमायायुक्तावधूत-
चरितवर्णनं नाम एकादशावतारः ॥

---

## १५६ अथ द्वादशावतारचरितम् ।

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः ।

षट्त्रिंशेऽलर्कबोधाय काशिराजसहायतः ।
चक्रेऽलर्कं भ्रष्टराज्यं सुबाहुः सोऽभ्यगाद् गुरुं ॥ १ ॥

अलर्कस्त्वकरोद्राज्यं पितृवत्पालयन् प्रजाः ।
शिक्षां दुष्टेषु शिष्टेषु रक्षां दीनेषु वै कृपां ॥ २ ॥

चकार सोर्थं धर्मेण धर्मं चार्थेन नीतिमान् ।
तयोरेवाविरोधेन दिव्यार्थानभजत्सदा ॥ ३ ॥

सुबाहुस्तादृशं विद्वान् बुबोधयिषुरात्मनि ।
काशिराजसहायार्थी स पुनर्योद्धुमाययौ ॥ ४ ॥

भ्रात्रा रुद्धं पुरं क्षीणान् कोशान् परवशांश्च तान् ।
मंत्र्यादीन् वीक्ष्य सोऽलर्को भीतो दुद्राव पीडितः ॥ ५ ॥

एकाकी सोऽश्वमारुह्य रात्रौ गत्वा वनं स्थितः।
ऋष्याश्रमे स्मरन् मातुरुपदेशं तदा नृपः ॥ ६ ॥
प्रातः स्नात्वा स निष्कास्य मुद्रां कृतसुमंगलः।
वाचयामास त्रिप्रेण मात्रा विलिखितं हितं ॥ ७ ॥
त्याज्यः सर्वात्मना संगः स चेत्त्यक्तुं न शक्यते।
स सद्भिः सह कर्तव्यः संतो दुःसंगभेषजम् ॥ ८ ॥
कामः सर्वात्मना हेयो हातुं चेच्छक्यते न सः।
मुमुक्षां प्रति कर्तव्यः सैव कामार्तिभेषजम् ॥ ९ ॥
इति श्रुत्वा मातृहार्दं बुध्वा सह्याद्रिसंस्थितं।
ज्ञात्वा सत्तममात्रेयं निर्विण्णः शरणं ययौ ॥ १० ॥
आषाढे पौर्णिमायां च दिवाऽऽदिगुरुराबभौ।
आद्ये यामे द्वितीये सन्मुहूर्ते मन्दवासरे ॥ ११ ॥
प्रणम्याह स भो ब्रह्मन् प्रसादं कुरु मे प्रभो।
दैवाद् दुःखं समुत्पन्नं कृपया तदपाकुरु ॥ १२ ॥
भगवांस्तद्वचः श्रुत्वा ज्ञात्वाऽलर्कं महामतिं।
मदालसागर्भरत्नं प्रहस्येदमभाषत ॥ १३ ॥
दुःखं नृप किमर्थं ते कस्त्वं दुःखं च कस्य च।
विचार्याङ्गानि चात्मानं क्व दुःखं सत्यमिद्वद ॥ १४ ॥
इत्युक्तः स चिरं ध्यात्वा विमृश्य च पुनः पुनः।
विहस्याहात्मनाऽऽत्मानं ज्ञात्वा सर्वाकंकारणं ॥ १५ ॥
खं वायुरग्निरंबु क्ष्मा नाहं तज्जानि चेह तु।
सङ्घेऽहमिति मंतुस्तद्भाति दुःखाद्यसद्विभो ॥ १६ ॥
नित्यो मे महिमा नास्य क्षयो वृद्धिश्च यद्यपि।
भौतिके तौ सुखार्थं वा किं पारक्येन तेन मे ॥ १७ ॥

नित्यः सदैकरूपोऽहं परिणामः कुतो मम ।
संगे देहस्य संत्यक्ते दुःखादि कोपलक्ष्यते ॥ १८ ॥

स्थूलेऽत्र भौतिके सूक्ष्मे तन्मात्रावस्थितेऽपि च ।
उत्थितं त्रिविधं दुःखं पश्यतो मम तेन किम् ॥ १९ ॥

मनो मतिरहंकारश्चित्तं च न भवाम्यतः ।
अंतःकरणजैर्दुःखैः संबंधो न परस्य मे ॥ २० ॥

राज्यं करोत्वग्रजोऽत्र किं मे संघाभिमानतः ।
स चाहं देहतोऽन्योऽपि पार्थक्यं न सतो हि मे ॥ २१ ॥

यस्य भूतस्य हस्तादिसंबंधो नात्मनः पुनः ।
केभाश्वकोशराष्ट्राद्यैरसंगस्य चिदात्मन. ॥ २२ ॥

तस्मान्नारिर्न मे मित्रं सुखं दुःखं पुरं बलं ।
पुरोत्पन्नोऽपि मोहोऽयं नष्टो भवदनुग्रहात् ॥ २३ ॥

यथैकमपि खं भाति बहुधोपाधिभेदतः ।
तथाऽहं काशिपो भ्राता न भेदः पारमार्थिकः ॥ २४ ॥

असम्यग्दर्शनाद् दुःखं मतं मे स्वप्नसंनिभम् ।
निर्ममो निरहंकारस्तन्नेक्षेऽद्य सुखाब्धिगः ॥ २५ ॥

यथा तु भक्षिते दुःखं शुकादौ ममतावृते ।
न तथा ममताहीने वृकादौ तद्वदत्र तु ॥ २६ ॥

न दुःखी न सुखी सोऽहं निर्ममः प्रकृतेः परः ।
यो भूताभिभवो भूतैः सुखदुःखात्मकः स च ॥ २७ ॥

श्रीदत्तः प्राह भूपेन्द्र सम्यग् व्यवासितं त्वया ।
दुःखमूलं ममेत्यस्य निवृत्तिर्न ममेति च ॥ २८ ॥

ब्रह्मनिष्ठोत्तमे प्रश्नान् स्वानुभूत्या निराकृता ।
ममता शाल्मलीतूल इव वातेन तेऽधुना ॥ २९ ॥

(अर्घ्याणि) सर्वत्राज्ञाननाशाय गुरवे परमात्मने ।
दत्तात्रेयाय देवाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ३० ॥

चिदात्मज्ञानदीपाय गुरवे ब्रह्मरूपिणे ।
दत्तात्रेयाय देवाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ३१ ॥

भेदतापविनाशाय सच्चिदानंदरूपिणे ।
दत्तात्रेयाय देवाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ३२ ॥

एवमर्घ्यत्रयं दत्वा सुवर्णं च समर्पयेत् ॥ ३३ ॥

इति श्रीमद्वासुदेवानंदसरस्वतीविरचितं आदिगुरुचरित-
वर्णनं नाम द्वादशावतारः ॥

---

## १५७ अथ त्रयोदशावतारचरितम् ।

॥ श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥

कदाचित्पिंगलो नागो दृष्ट्वाऽमुं माहुरस्थितं ।
कृष्णधात्रीतले वेदं पठंतं व्रात्यवेषतः ॥ १ ॥

पप्रच्छ भवतः कोऽयमाश्रमो वर्णगर्हितः ।
वर्णित्वं ते न कौपीनमौंजीदंडादिविवर्जित ॥ २ ॥

न गृहित्वं चाग्निहोत्रद्विसूत्रादिविवर्जित ।
वनित्वं ते न चागंतुसाधनादिविवर्जित ॥ ३ ॥

न भिक्षुत्वं शिखाग्राम्यभोगयुक्त दिगंबर ।
केनोपदिष्टो मार्गोऽयं नग्नस्त्रीमद्यलालस ॥ ४ ॥

प्रभुः प्राह तमुक्तान्यः पंचमोऽयं ममाश्रमः ।
योऽविकल्पेनात्मरूपं विश्वं पश्येदभेददृक् ॥ ५ ॥

वैराग्ययुक्तो वीतारिस्तस्यायं पंचमाश्रमः ।
त्वया श्रुतो न वै तं हि जानीयुर्ब्राह्मणाः समाः ॥ ६ ॥

इत्थं श्रुत्वा सोऽनसूयागर्भरत्नमिदं महः ।
इति मत्वाऽतिखिन्नस्तं प्रार्थयामास दीनवाक् ॥ ७ ॥

शुक्लाष्टम्यां श्रावणस्य विशेषादिंदुवासरे ।
शिवरूपधरं दृष्ट्वा दत्तात्रेयं महामुनिं ॥ ८ ॥

कुत्सिता रुशती धार्ष्ट्याद्वागुक्ता मेऽनयाऽनघ ।
भर्त्सितोऽसीश मां शाधि दौरात्म्यं मे क्षमस्व भो ॥ ९ ॥

इति क्षमाप्य विश्वेशं संप्राप्तानुग्रहो मुनिं ।
अभिवाद्य प्रसन्नात्मा स्वाश्रमं पिंगलो ययौ ॥ १० ॥

(अर्घ्याणि) संसारदुःखनाशाय शिवाय परमात्मने ।
दत्तात्रेयाय देवाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ११ ॥

भेदतापविनाशाय मुख्यबिंबाय चात्मने ।
शिवाय गुरवे तुभ्यं कर्मणाऽर्घ्यं ददाम्यहं ॥ १२ ॥

सर्वत्राभेदरूपाय सर्वत्र विमलाय ते ।
सर्वदानंदरूपाय कर्मणाऽर्घ्यं ददाम्यहं ॥ १३ ॥

एवमर्घ्यत्रयं दत्वा प्रदद्यादुदकं शुभं ॥

इति श्रीमद्वासुदेवानंदसरस्वतीविरचितश्रीशिवरूपचरित-
वर्णनं नाम त्रयोदशोऽवतारः ॥

---

## १५८ चतुर्दशावतारचरितम् ।

॥ श्रीगणेशाय नमः ॥ श्रीदेवदेवाय नमः ॥

मार्कंडेय उवाच ।

अथ व्रजन् दक्षिणाशां दत्तात्रेयो महामुनिः ।
लोकान् पूतानथाकार्षीद्गमनस्नानभोजनैः ॥ १ ॥

ततः कालेन बहुना सह्याद्रिमगमन्मुनिः ।
रम्यपर्वतराजेन्द्रं दृष्ट्वा स्थातुं मनो दधे ॥ २ ॥

दत्तात्रेयो महायोगी योगाभ्यासरतः सदा ।
समः सर्वेषु वेदेषु ऋषिरूपधरो हरिः ॥ ३ ॥

दत्तात्रेयाश्रमो रम्यः सदा पुष्पफलैर्द्रुमैः ।
सेवितो मुनिभिः सिद्धैर्देवैः सेन्द्रैः सकिन्नरैः ॥ ४ ॥

सिंहाश्च नागाश्चैकत्र तत्रैव गतवैरकाः ।
तत्र व्याघ्रा हरिण्यश्च नकुलाः पन्नगास्तथा ॥ ५ ॥

तत्र ध्यानपराः सिद्धा मुनयश्च तपोधनाः ।
लोके च नियतात्मानस्ते सर्वे तत्र संस्थिताः ॥ ६ ॥

देवदेवस्वरूपेण दत्तात्रेयः स्वयं हरिः ।
कृष्णामलकवृक्षस्य मूले तिष्ठति नित्यशः ॥ ७ ॥

तत्र दृष्ट्वाऽच्युतं देवं शंखचक्रगदाधरं ।
अथ प्रजापतिर्देवः सत्यलोकस्थितैर्जनैः ॥
संवृतो ह्यगमत् सद्यो दत्तात्रेयाश्रमं प्रति ॥ ८ ॥

भाद्रे दिवा शुक्लचतुर्दशीतिथौ ।
भृगोर्दिने भे शततारकाख्ये ॥
आद्ये च यामे शुभदे मुहूर्ते ।
दृश्योऽभवत्तत्र स देवदेवः ॥ ९ ॥

पुण्ये कृष्णामलीग्रामे दत्तात्रेयस्य चाश्रमे ।
ददर्श च शतानंदो देवदेवेश्वरं विभुम् ॥ १० ॥
अव्यक्तं व्यक्तयुक्तं तु सगुणं गुणवर्जितं ।
नामरूपादिरहितं नामरूपधरं हरिं ॥ ११ ॥
किरीटेनार्कवर्णेन भासमानं रमापतिं ।
देवदेवेश्वरं देवं योगिनां हृदयंगमम् ॥ १२ ॥
दृष्ट्वा चतुर्मुखो देवं साष्टांगं प्रणिपत्य च ।
कृतांजलिपुटो भूत्वा स्तुतिं चक्रे समाहितः ॥ १३ ॥

ब्रह्मोवाच ।

जय जय सकलानंदकारक । जय भूधरादिभुवनधारक ।
जय वृंदारकवृंदानंददायक ।
जयावनिजलदहनपवननभसां जनिस्थितिमृतिकारक ॥
जय विबुधानंदसंदोहप्रद ।
जय परमहंसपरिव्राजकादिनिष्किंचनजनप्रिय
जय त्र्यंबकादिसुरेशपूजित ॥
जय जितात्मनां जनिस्थितिनिवृत्तिकारक भगवन्
भजनवल्लभ, जय सह्याद्रिमंडन ।

एवं स्तुतो देवदेवः स्तुत्यश्रीतिर्जनार्दनः ।
चतुर्मुखेन लोकानां पतिना जगदीश्वरः ॥ १४ ॥
स्तोत्रावसाने देवेशो जगतां पतिरच्युतः ।
विरिंचिमूचे भगवान् वरं ब्रूहीति भारत ॥ १५ ॥

ब्रह्मोवाच

दुर्लभं मुनिरूपस्य दर्शनं तव दुर्लभं ।
तव लब्धं द्वयं देव किमन्यत् प्रार्थयामि ते ॥ १६ ॥

दृष्टोऽसि जगतां नाथ कृतार्थो दर्शनेन ते ।
कृतकृत्या वयं देव दत्तात्रेयस्य दर्शनात् ॥ १७ ॥
आयातयातं नाद्यापि निवृत्तं मम केशव ।
पुनर्भवो यथा नास्ति तथा कुरु जगत्पते ॥ १८ ॥

देवदेव उवाच ।

मद्दर्शनेन ते ब्रह्मन् निवृत्तं कर्मजं फलं ।
अधुना मत्स्वरूपे त्वं मुनिभिर्लयमाप्स्यसि ॥ १९ ॥
इति प्रादाद्वरं देवस्त्रैलोक्यानंददायकः ।
ब्रह्मणे मुनिशार्दूल ऋषिभिः सह सत्यवाक् ॥ २० ॥
ततो विवेश सगणो देवदेवस्य चक्रिणः ।
निजस्वरूपे देवस्य शतानंदो लयं गतः ॥ २१ ॥
सह्याद्रौ दंडकारण्ये दत्तात्रेयस्य चाश्रमे ।
परमेष्ठी परां मुक्तिमवाप मुनिभिः सह ॥ २२ ॥
( अर्घ्याणि ) देवदेवाय देवाय दुःखशोकहराय च ।
दुरितौघविनाशाय कर्मणार्घ्यं ददाम्यहं ॥ २३ ॥
सर्वापराधनाशाय सर्वपापहराय च ।
देवदेवाय देवाय कर्मणाऽर्घ्यं ददाम्यहं ॥ २४ ॥
भक्तप्रियाय देवाय शुद्धाय परमात्मने ।
दत्तात्रेयाय देवाय कर्मणाऽर्घ्यं ददाम्यहं ॥ २५ ॥
एवमर्घ्यत्रयं दत्वा तांबूलं च समर्पयेत् ।

इति श्रीमद्वासुदेवानंदसरस्वतीविरचितं श्रीदेवदेवावतार कथनं नाम चतुर्दशोऽवतारः ।

---

# १५९ पंचदशावतारचरितम्

श्रीगणेशाय नमः। श्रीदिगंबराय नमः।

आसीद्राजा यदुर्नाम सोमवंश्यो महामतिः।
धर्मात्मा नीतिमान् दक्षः श्रीदत्तार्चनतत्परः ॥ १ ॥

राज्यं शशास बह्वब्दं कदाचित् पर्यटन् स गाम्।
ददर्श निर्भयं दक्षमवधूतं कविं सुधीः ॥ २ ॥

तं नत्वोचे जनः प्रायः श्रयायुःकीर्त्यृद्धिहेतुकः।
पुमर्थानीहते त्वं तु कल्पोऽपि न तथा कथम् ॥ ३ ॥

तप्यमाने जने कामवन्हिनाऽपि न तप्यसे।
निष्कामोऽसि कुतोऽकर्ता रोचते चेद्वद प्रभो ॥ ४ ॥

इत्युक्तस्तं प्रभुः पुंसां श्रेयसे प्राब्रवीत्परम्।
तत्वं बुद्ध्याश्रितगुरुशिक्षितं ज्ञानमात्मनः ॥ ५ ॥

मदर्चकोऽस्यतो राजन् समाधाय मनः शृणु।
चतुर्विंशतिराचार्याः संति मे बुद्ध्युपाश्रिताः ॥ ६ ॥

यच्छिक्षयेदृशो भूमा मुक्तसंगश्चरे महीम्।
वक्ष्ये येभ्यो मया यद्यच्छिक्षितं शीघ्रमुक्तिदं ॥ ७ ॥

न दैवानुगभूतार्तः क्ष्मेव धीरः सृतेश्चलेत्।
सदा परार्थोद्भवेहो नगाच्छिक्षेत् परात्मताम् ॥ ८ ॥

प्राणवृत्याक्षिप्तहृद्वाग्विद्भूक्तुष्येन्न गोप्रियैः।
तद्भुग्दोषगुणास्पृग्निद्धर्मासक्तश्च देहगः ॥ ९ ॥

गुणाश्रयो गुणैर्युज्येन्न गंधैर्वायुवत् स्वदृक्।
कालोत्थगुणतेजोऽब्भूमयभावास्पृगित्पुमान् ॥ १० ॥

वायूत्थाद्वास्पृक्खवच्चान्तस्थेनाभिदसंगती।
भाव्ये सर्वान्वयव्याप्त्या ब्रह्मात्मत्वात्ततात्मनः ॥ ११ ॥

रस्यः स्निग्धः प्रकृत्याच्छो ज्ञोऽब्वद्धाम्ना पुनाति नृन् ।
छन्नः स्पष्टोऽपि काम्यर्चः प्रागुदग्दात्रघं दहन् । ॥ १२ ॥
क्वापि भुंक्ते तपस्तेजोदीप्तोऽक्षोभ्योऽपरिग्रहः ।
मलास्पृक् सर्वभक्षोऽपि ज्ञोऽग्निवद्वेधसीयते ॥ १३ ॥
तत्तद्रूपः स्वमायोत्थोच्चासतस्थेशोऽग्निहेतिवत् ।
कालान्नित्येपि दृश्येते नात्मभूतोद्भवक्षती ॥ १४ ॥
देहः कलावद्विकारी कालेनात्माब्जवद् ध्रुवः ।
भात्यात्मा'तत्स्थवद्व्यक्तो न स्वस्थो बुध्यतेऽर्कवत् ॥ १५ ॥
स्थूलबुध्यार्कवद्गोभिर्गा यथास्वं गुणैर्गुणान् ।
आदत्ते विसृजत्यत्र सदा योगी न युज्यते ॥ १६ ॥
नातिस्नेहप्रसंगाक्तो नश्येद्दीनकपोतवत् ।
काश्चित् कपोतः कपोती क्रीडादौ चेरतुर्वने ॥ १७ ॥
प्रेम्णाशंकं मिथो बद्धध्यक्ष्यंगौ पाति स श्रमात् ।
तर्पयंती साऽसूताभांस्तांस्तौ पुपुषतुर्मुदा ॥ १८ ॥
कदाचिल्लुब्धको नीडाद्बहिस्थांस्ताञ्छिचाऽऽददे ।
क्रोशंतीं पतितान् दुःखार्त्तां तं चापस्मृतिं तथा ॥ १९ ॥
द्वंद्वारामः प्रियाऽशांतो गृहासक्तो त्रिवन्नरः ।
क्रान्तापावृतमुक्तिद्वान्नृजन्मच्युत एव सः ॥ २० ॥
क्वाप्यस्त्यैन्द्रियसौख्यं तन्नेच्छेदाजगरोऽक्रियः ।
यदृच्छयाऽऽप्तं महान्तं ग्रासं वाऽल्पं रसारसं ॥ २१ ॥
भक्षेच्चेन्नाप्तोऽनशनो दैवभुक्सर्पवत्स्वपन् ।
विनिद्रोऽक्रियवल्यंगधृग्गोमानपि नेहते ॥ २२ ॥
पूर्णो हीनोऽप्यजपरो न सर्पाति न शुष्यति ।
ज्ञोऽब्धिवत् सिंधुभिर्निम्नोऽनंतपारो दुरत्ययः ॥ २३ ॥

सदाक्षोभ्यो दुर्विगाह्यः प्रसन्नः स्तिमिताब्धिवत् ।
नाऽवशोऽग्नौ विवन्नश्येत् स्त्रीलीलारूपमोहितः ॥ २४ ॥
गृण्हीयात्सर्वतः सारं रमेन्नैकत्र चाल्पभुक् ।
संग्रहे नाशबीजेऽपि मधुकृद्वन्मुनिः सदा ॥ २५ ॥
बध्येत नांगनास्पर्शात्क्रूरैर्हन्येत वेभवत् ।
अन्योऽकात्संचितं लुब्धैर्न भुक्तं नार्पितं धनं ॥ २६ ॥
भुंक्तेऽकार्जितगृह्यन्नं प्राग् भिक्षुर्मधुहेव च ।
ना बध्येतैणवद्गीतान्नृत्याद्वाऽप्यृष्यशृङ्गवत् ॥ २७ ॥
प्रमाथिजिव्हया नैति बडिशैर्मत्स्यवल्लयं ।
जय्यात्पभुक्त्या साऽसक्त्या जितं सर्वं जिते रसे ॥ २८ ॥
वेश्यैकार्थदकांताशाध्वस्तनिद्रा सुखावहं ।
चिंताहेतुं हि निर्वेदं गत्वाऽऽत्मस्थं रतार्थदं ॥ २९ ॥
रामं हित्वा कुवृत्याऽन्यं भीशुङ्मोहदमध्रुवं ।
कांक्षे धिङ्माऽऽत्मनात्मानं रमे क्रित्वाऽमुनेति सा ॥ ३० ॥
मत्वा तथाभूध्याशाकं नैराश्यं परमं सुखं ।
परिग्रहोऽकाय तज्ज्ञोऽस्वोप्यनंतसुखायते ॥ ३१ ॥
सामिषं कुररं हंति शरोऽतो व्यामिषः सुखी ।
मानावमानचित्तो न स्वक्रीडः स्वरतिः सुखी ॥ ३२ ॥
बालवद्धि जडोऽज्ञोऽर्भश्चात्मानंदो गुणातिगः ।
भंक्त्वैकैकं महारावान् रणन्तौ द्वौ कुमार्यपि ॥ ३३ ॥
पाण्योर्धृत्वैकैकं शंखं रहःकृत्येऽलभत्सुखं ।
कलिर्भूम्नि द्वयोर्वार्ता ह्येकस्तच्छङ्खवच्चरेत् ॥ ३४ ॥
एकचार्यप्रमत्तोऽल्पवाग्गुहास्थोऽगृहो मुनिः ।
एकोऽहिवद्रत्यलक्ष्यो गृहारंभोऽध्रुवात्मनः ॥ ३५ ॥

विफलोऽकाय सर्पोऽन्यकृतधाम्न्येधते सुखं ।
जितश्वासासने नेशे वैराग्याभ्यासबद्धहृत् ॥ ३६ ॥

संयुक्तं वासनां मुक्त्वा सत्त्ववृद्ध्येयत्यनिधनं ।
न्निर्वाणं वेत्यतो नांतर्बहिस्थं सुनिरात्मदृक् ॥ ३७ ॥

यथेष्वितात्मेषुकृन्नो वेदेनं यांतमग्रतः ।
प्रेम्णाऽप्यचलहृद्ध्यानाद्विष्णोः सारूप्यमेति ना ॥ ३८ ॥

प्राग्रूपमुत्सृजन् पेशस्कृत्ध्यानात् कीटवद्धृतं ।
यथोर्णनाभिस्ततोर्णाविहार्यंतेऽत्ति तां तथा ॥ ३९ ॥

प्राक्स्वमायासृष्टमेकः संहृत्याभूत् क्षयेऽद्वयः ।
शक्त्याखिलाश्रयः सर्वेट् कालेनात्मानुभावतः ॥ ४० ॥

साम्येतसत्वादिशक्तिः प्रधानपुरुषेडजः ।
व्युपाधिः परमानंदो मोक्षाख्यः स परावरः ॥ ४१ ॥

गुणात्मिकां स्वमायां स क्षोभयन् स्वानुभावतः ।
तया सृजति सूत्रं सा त्रिगुणा शक्तिरासृजत् ॥ ४२ ॥

विश्वं यस्मिन् प्रोतमेतद्येन संसरते पुमान् ।
देहात् स्तो बोधवैराग्ये पराक्यात्सोद्भवक्षयात् ॥ ४३ ॥

आत्मेष्टभृत्सृष्टबीजः प्रियेच्छुर्नश्यति द्रुवत् ॥
गावः स्वार्थे सपत्नीवत्तं लुनंति हि दुर्लभं ॥ ४४ ॥

मत्वा जन्म तद्विरक्ष्मां चरेन्मुक्तोऽनहंकृतिः ।
तच्छ्रुत्वा समचित्तोऽभून्मुक्तसंगो यदुर्द्रुतं ॥ ४५ ॥

आश्विनस्य सिते पक्षे पूर्णिमायां ज्ञवासरे ।
अश्विन्यामुदिते सूर्ये श्रीदत्तोऽभूद्दिगंबरः ॥ ४६ ॥

नत्वाऽत्रीशं तदादिष्टो यदुः स्वैरं चचार गां ।
तद्रूपं पूजयन्विश्वं सत्तास्फूर्त्यन्वितं मितं ॥ ४७ ॥

दत्तप्रसादात् तद्वंशविस्तरोऽभूदिहाग्रतः ।
कृष्णोऽजः सकलो वृष्णिकुले भूभारहाऽभवत् ॥ ४८ ॥

इति श्रीमद्वासुदेवानंदसरस्वतीविरचिते दिगंबरावतारे
प्रथमोध्यायः ॥

---

॥ श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥

ततः प्रल्हादनामाऽसौ ववृधेऽरिभयंकरः ।
काले काव्येनोपनीतः शिक्षितोऽप्यभजद्धरिम् ॥ १ ॥

आबाल्यं नारदादेशाद्धर्मे भागवते रतः ।
भूत्वाप्यनात्मवित्त्वेन शांतिं न परमां ययौ ॥ २ ॥

औदासीन्येन स वनं पर्यटन् मृगयामिषात् ।
भाग्याद्ददर्श सह्याद्रौ कावेर्यां निद्रितं भुवि ॥ ३ ॥

कर्माद्यैर्वर्णलिंगाद्यैरप्रतर्क्यं रजस्वलं ।
नत्वा प्राहावधूतं तं निगूढामलतेजसम् ॥ ४ ॥

कथं भोगीव धत्तेऽस्वः पीनां तनुमनुद्यमः ।
उद्योगात् स्वं ततो भोगो भोगात्पीना तनुर्भवेत् ॥ ५ ॥

शयानोऽनुद्यमोऽनीहो भवानिह तथाऽप्यसौ ।
पीना तनुः कथं सिद्धो भवान् वदतु चेत्क्षमम् ॥ ६ ॥

विद्वान् दक्षोऽपि चतुरश्चित्रप्रियकथो भवान् ।
दृष्टाऽपीह जनांश्चित्रकर्मणा वर्तते समः ॥ ७ ॥

इत्थं श्रीभगवांस्तेन प्रल्हादेनात्रिनंदनः ।
संपृष्टः प्राह संतुष्टः कृपालुः प्रहसन्निव ॥ ८ ॥

दिगंबर उवाच

श्रीनृसिंहोऽवतीर्णोऽत्र यदर्थं स त्वमेव हि ।
दैत्यजोऽपि मुनिरूछात्र शृणु भागवतोत्तम ॥ ९ ॥

मंदः स्वज्ञो भ्रमंस्तृष्णानद्येमं लोकमागतः ।
कर्मयोगेन मुक्तिस्वर्मोहद्वारं यदृच्छया ॥ १० ॥

निवृत्तोऽस्म्यत्र यततां व्यत्ययं वीक्ष्य शर्मणे ।
आत्मनोऽस्य सुखं रूपं क्लिष्टनष्टं स्वयम्प्रभम् ॥ ११ ॥

ज्ञात्वा संस्पर्शजान्भोगान्दुःखात्स्वप्स्यामि दैवभुक् ।
विस्मृत्यामुं जनः स्वार्थं सन्तं यात्युग्रसंसृतिं ॥ १२ ॥

स्वार्थं मायावृतं त्यक्त्वा तदर्थ्यन्यत्र धावति ।
शैवालछन्नकं त्यक्त्वा यथांब्वर्थी मरीचिकाम् ॥ १३ ॥

अभाग्यस्य क्रिया मोघाः सुखप्राप्त्यै प्रयोजिताः ।
तत्साफल्येऽप्यसद्भिः किं कार्यं मर्त्यस्य कृच्छ्रजैः ॥ १४ ॥

कामार्थेच्छोर्मोहशोकरागद्वेषश्रमादयः ।
यतो जितात्मनो नैति निद्राऽपि भयशंकया ॥ १५ ॥

प्राणार्थेच्छा हि मधुकृच्छिक्षितेन मयोज्झिता ।
राजार्थिहिंस्रचोरद्विट्कालेभ्यो न बिभेम्यतः ॥ १६ ॥

निरिच्छः परितुष्टात्मा यदृच्छालाभतोऽस्मि सन् ।
बहुकालं शये नो चेद्विद्वान् धैर्यान्महाहिवत् ॥ १७ ॥

भूर्यल्पं स्वादु वास्वादु कदन्नं मानवर्जितं ।
समानं क्वापि भुंजेन्हि निशि भुक्त्वाऽपि वा न वा ॥ १८ ॥

हरत्यन्यः पतिं हत्वा कृच्छ्राप्तं मधुवद्धनं ।
शिक्षितं मधुकृत्तोऽतो विरक्तोऽस्म्यपरिग्रहः ॥ १९ ॥
दैवाप्तं चर्म वल्कं वा वस्त्रं क्षौमं वसे न वा ।
कचिच्छयेऽश्मभस्मादौ कशिपौ वाजने वने ॥ २० ॥
कचित्स्नातोऽलंकृतोऽहं स्रग्वी सुवसनो न वा ।
रथेभाश्वैश्वरे कापि मुनिवत्कापि मुग्धवत् ॥ २१ ॥
नाहं निंदे न च स्तौमि स्वभावविषमं नरं ।
एतेषां श्रेय आशास उतैकात्म्यमथात्मनि ॥ २२ ॥
ब्रह्मासक्तो ब्रह्मनिष्ठो ब्रह्मात्मा ब्रह्मधीरहं ।
संस्कृते ब्राह्मणेऽन्त्ये वा समदृग्गात्रि शुन्यपि ॥ २३ ॥
समासमाभ्यां विषमसमे पूजात ओदनं ।
नाद्यादित्यन्नगृहिणो दोषो न समदृग्यतेः ॥ २४ ॥
स्वरूपेऽवासनस्तिष्ठाम्यान्वीक्षिकयानया दिवि ।
योऽमुमिच्छेत्तु तस्यायमुपायो विदुषः सुखः ॥ २५ ॥
जुहुनेद्विकल्पं चित्तौ तं मनस्यर्थभ्रमे तु तत् ।
वैकारिके तं मायायां तां स्वस्मिन् विरमेत्ततः ॥ २६ ॥
शुद्धः सोऽहं परात्मैक इति दार्ढ्ये विमुच्यते ।
हृदयं मे सुगुप्तं ते प्रोक्तं तत्त्वं विचारय ॥ २७ ॥
इतीशेनोपदिष्टः स ज्ञात्वाऽऽत्मानं प्रपूज्य च ।
तदाज्ञप्तो ययौ राज्यं कुर्वन्नपि स दैवभुक् ॥ २८ ॥
राज्यश्रीपुत्रदाराढ्योऽप्यलिप्तः स्वात्मदृक् सदा ।
भुक्त्वाऽऽरब्धं चिरं राज्यं दत्वा पुत्रे विरोचने ॥ २९ ॥
मुक्तसंगश्चचार क्ष्मां समदृक् स गुरूक्तवत् ।

इति श्रीमद्वासुदेवानंदसरस्वतीविरचिते दिगंबरावतारे
द्वितीयोऽध्यायः ॥



---

॥ श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥

तथैव साध्यदेवेभ्यो भगवानाह हृद्धिया ।
धृतिसत्यशमाद्यैर्हृद्ग्रंथिं छित्वा शमं नयेत् ॥ १ ॥
गर्वाक्रोशान्यावमानद्रोहकामादयोऽर्थहाः ।
त्याज्याः क्रूराऽरुंतुदाऽसद्वाक् च सह्या ततोऽव्यथः ॥ २ ॥
तद्वत्सन्मुन्यसच्चोरसंगी रंगात्पटो यथा ।
स्वयं सहिष्णुर्नो कुर्यान्निंदाघातादि दैवभाक् ॥ ३ ॥
वाक्सेव्या—व्याहृत्या सत्या प्रिया धर्म्या च सद्युजा ।
चिंत्यो भावो नान्यरंध्रं नेक्ष्यं देयं प्रतिश्रुतं ॥ ४ ॥
सुहृत्सेव्योऽधमो नैव श्रद्धेयं श्रेय आत्मनः ।
समो निंदाप्रशंसादौ तथोत्कर्षापकर्षयोः ॥ ५ ॥
प्रहृष्टं शोकराहित्यं दुर्वृत्ताच्च निवर्तनं ।
श्रेयोमार्गोऽयमादेय इतीशः प्राह तेऽभजन् ॥ ६ ॥
एवं सुरर्षिप्रमुखा भगवद्भावमद्वयं ।
प्रसादेनैव संप्राप्ता भक्तिगम्यस्य चात्मनः ॥ ७ ॥
परोऽसौ पुरुषो भूमा भक्त्या लभ्यो ह्यनन्यया ।
क्रमेण पुण्यशीलेन सता नान्येन दुष्कृता ॥ ८ ॥
स्मरणेऽस्यार्जुनोऽलर्को वन्दने दास्य आयुरित् ।
सख्ये रामो विष्णुदत्तः सेवने यदुरर्चने ॥ ९ ॥
कीर्तने वेदधर्मा च श्रवणे दीपको हरेः ।
एते चान्ये च बहवः स बः स्वात्मनिवेदने ॥ १० ॥
यो यो यां यां कृती भक्तिं वृणुते तस्य तस्य सः ।
तां तां स्थिरीकृत्य दत्ते हृद्यमर्थं ह्यधीश्वरः ॥ ११ ॥

इति दिगंबरावतारे तृतीयोऽध्यायः ॥

---

(अर्घ्याणि) योगपालाय देवाय दत्ताय परमात्मने।
दिगंबराय शांताय कर्मणाऽर्घ्यं ददाम्यहं ॥ १ ॥
दुःखदुर्गतिनाशाय दत्ताय परमात्मने।
योगारिष्टविनाशाय कर्मणाऽर्घ्यं ददाम्यहं ॥ २ ॥
योगारिष्टविनाशाय योगमायाधराय ते।
दिगंबराय देवाय कर्मणाऽर्घ्यं ददाम्यहं ॥ ३ ॥
अर्घ्यांते वसनं मालाविभूतिं वा समर्पयेत्। ॥ ४ ॥
इति दिगंबरावतारकथनं नाम पंचदशोऽवतारः

---

## १६० अथ षोडशावतारचरितम्।

श्रीगणेशाय नमः ॥ श्रीकृष्णाय नमः ॥
एवं स योगिराजाऽऽद्यैरवतारैर्महीतले।
भक्तिं ज्ञानं च वैराग्यं साष्टांगं योगमुत्तमं ॥ १ ॥
नानारूपधरो भूत्वा नानासाधनसंहतिं।
नानाधिकारिभेदेन प्रकाश्य स्फुटमीश्वरः ॥ २ ॥
कृतकृत्य इव ज्ञानपर्यंके योगनिद्रया।
निद्राण इव संतस्थौ भगवानत्रिनंदनः ॥ ३ ॥
भक्ताः शिष्याश्च ते सर्वे समागत्य जगद्गुरुम्।
कृतकृत्याः प्रणम्येशं ददृशुः पद्मलोचनं ॥ ४ ॥
कार्तिके शुद्धपक्षे तु द्वादश्यां बुधवासरे।
रेवत्यां भास्वदुदयवेलायां जगदाश्रयः ॥ ५ ॥
भक्तानां पश्यतां तत्र प्रादुरासीत्परात्परः।
इंद्रनीलप्रतीकाशः कुर्वन् वितिमिरा दिशः ॥ ६ ॥

अपरो वासरमणिराभातीवोदयं गतः ।
स कृष्णः श्यामकमलनयनो ध्यानमंगलः ॥ ७ ॥
केवलं ध्यानमात्रेण सर्वाभीष्टप्रदो नृणाम् ।
सर्वदेवमयो ध्येयः सर्वतीर्थास्पदः प्रभुः ॥ ८ ॥
सर्वधर्ममयः सर्वसुखरूपाश्चिदात्मकः ।
सत्यरूपः सत्यसंधः सत्यसंकल्प ईश्वरः ॥ ९ ॥
मेघगंभीरया वाचा सर्वेषां शृण्वतां सतां ।
वागीश्वरेश्वरः प्राह शृण्वंतु भजका इदम् ॥ १० ॥
सारात्सारं समुद्धृत्य दत्तं वः शीघ्रमोक्षदम् ।
वैदिकः शाश्वतो धर्म इष्टदोऽनिष्टवारकः ॥ ११ ॥
अस्यैव योगरूढत्वान्नामान्वर्थकमुत्तमम् ।
अस्यैव शब्दमूलत्वान्महत्त्वं नित्यताऽपि च ॥ १२ ॥
अनेनाघं निवार्याशु मद्ध्यानप्रतिबंधकं ।
ततोऽनायासतो ध्यात्वा मत्सायुज्यं गमिष्यथ ॥ १३ ॥
एवमुक्त्वा स भगवान् विरराम तदाऽपि ते ।
अंगीचक्रुस्तथेतीशवचनं शिरसा मुदा ॥ १४ ॥
तं कृष्णं श्यामकमललोचनं शांतविग्रहम् ।
संपूज्य परया भक्त्या दद्यादर्घ्याणि भाविकः ॥ १५ ॥
(अर्घ्याणि) सर्वसिद्धांतसिद्धाय दत्ताय परमात्मने ।
कृष्णाय पद्मनेत्राय कर्मणाऽर्घ्यं ददाम्यहं ॥ १६ ॥
अखंडाद्वैतरूपाय निर्गुणाय गुणात्मने ।
कृष्णाय पद्मनेत्राय कर्मणाऽर्घ्यं ददाम्यहं ॥ १७ ॥
भक्तप्रियाय देवाय योगनिद्रातुराय च ।
कृष्णाय पद्मनेत्राय कर्मणाऽर्घ्यं ददाम्यहं ॥ १८ ॥

एवं संपूज्य देवेशं रौप्यं दद्यात् स्वशक्तितः ।
ब्राह्मणान् भोजयेत्तेन प्रसन्नो भवतीश्वरः ॥ १९ ॥
इत्थं श्रीदत्तदेवस्यावतारा इह षोडश ।
वर्णिताः पूजितास्ते तु जन्ममृत्युभयापहाः ॥ २० ॥
प्रथमो योगिराजोऽत्रिवरदाख्यो द्वितीयकः ।
दत्तात्रेयस्तृतीयस्तु कालाग्निशमनाभिधः ॥ २१ ॥
चतुर्थः पंचमो ज्ञेयः स योगिजनवल्लभः ।
लीलाविश्वंभरः षष्ठः सप्तमः सिद्धराजकः ॥ २२ ॥
अवतारोऽष्टमो ज्ञानसागरो नवमस्तथा ।
विश्वंभरोऽथ दशमो मायामुक्तोऽवधूतकः ॥ २३ ॥
एकादशोऽवतारस्तु मायायुक्तोऽवधूतकः ।
द्वादशस्त्वादिगुरुकः शिवरूपस्त्रयोदशः ॥ २४ ॥
चतुर्दशो देवदेवस्ततः पंचदशः स्मृतः ।
दिगंबरः षोडशस्तु कृष्णः श्यामाब्जलोचनः ॥ २५ ॥
षोडशैतेऽवताराः श्रीदत्तात्रेयस्य योगिनः ।
अथ द्वादशमासानामधिपा मार्गशीर्षतः ॥ २६ ॥
दत्तात्रेयो मार्गशीर्षे मासस्याधिपतिः स्मृतः ।
लीलाविश्वंभरः पौषमासस्याधिपतिः स्मृतः ॥ २७ ॥
माघस्य सिद्धराजस्तु फाल्गुने ज्ञानसागरः ।
विश्वंभरस्तु चैत्रस्य मायामुक्तश्च माधवे ॥ २८ ॥
ज्येष्ठस्य मायायुक्तश्चाषाढस्यादिगुरुर्मतः ।
शिवरूपः श्रावणस्य देवदेवश्च भाद्रपः ॥ २९ ॥
दिगंबरश्चाश्विनस्य कार्तिकस्य च योगिराट् ।
अधिकस्यात्रिवरदो दत्तात्रेयः प्रकीर्तितः ॥ ३० ॥

येन मंत्रो गृहीतोऽत्र दत्तात्रेयस्य योगिनः ।
तेन हि प्रथमे वर्षे मार्गशीर्ष्यां गुरोर्मुखात् ॥ ३१ ॥

दत्तात्रेयेति नामेदं गृहीतव्यं द्वितीयके ।
लीलाविश्वंभराख्यं च तृतीये सिद्धराजकम् ॥ ३२ ॥

ज्ञानसागरकं तुर्ये ततो विश्वंभराभिधं ।
पंचमेऽब्देऽथ षष्ठेऽब्दे मायामुक्तं च सप्तमे ॥ ३३ ॥

मायायुक्तं चादिगुरुमष्टमे नवमे तथा ।
शिवरूपं देवदेवं दशमेऽथ दिगंबर ॥ ३४ ॥

एकादशे द्वादशेऽब्दे योगिराजमिति क्रमात् ।
यस्मिन्वर्षे तु यन्नाम गृहीतं सद्गुरोर्मुखात् ॥ ३५ ॥

परंपराभिज्ञमुखादभावे सद्गुरोरपि ।
भोजनादौ तु तन्नाम कीर्तनीयं प्रयत्नतः ॥ ३६ ॥

एवं द्वादशवर्षांतं कीर्तनीयं यथाक्रमम् ।
ततो द्वादशवर्षोर्ध्वं श्रीदत्तात्रेयकीर्तनम् ॥ ३७ ॥

इति श्रीमद्वासुदेवानंदसरस्वतीविरचितं श्रीदत्तात्रेय-
षोडशावतारचरितं संपूर्णम् ॥

---

## अथ संक्षेपतो दत्तषोडशावतारचरितम्

अत्रिः पित्राज्ञयेच्छुः सुतमथ तपसे संस्थितः संयतोऽद्रौ
के प्राणायामपूर्वं शतसममसुना राजयोगेन नित्यः ।
ज्ञानानंदैकरूपः प्रकृतिगुणपरः पूरुषश्चिंतितो यो
भर्ता योगस्य दाताऽखिलजनसविता योगिराजः स आद्यः ॥ १ ॥

त्यक्त्वा तामात्मसंस्थामगुणसुखमयीमात्रिणाराधितोऽसौ
स्वामालंब्यात्मसुप्तां प्रकृतिमथ तया व्यक्तमाहर्षिमीशः ।

दत्तोऽहं ते मयात्रे वरद इति तदा सैव तस्याभिधाभूत्
षड्बाहुर्यस्त्रिमूर्तिः सकलसुरपतिः सोऽवतारो द्वितीयः ॥ २ ॥

भक्तोद्धारैककृत्ये प्रकृतिगुणयुगं व्यर्थमेवेति मत्वा
त्यक्तां तस्मादभूताममृतकिरणैदुर्वाससौ सत्त्वयोगात् ।
अत्रेः पुत्रत्वमैच्छद्भवति हरिरयं विश्वपाता यदंश-
स्तस्मादुक्तिः पुराणेष्वयमृषितनयो विष्णुरिच्छन्स दत्तः ॥३॥

अत्रेर्भावानुरूपं प्रलयदहनवद्व्यक्त आदौ ततस्तं
तप्तं दृष्ट्वाग्निना च स्वजनकरुणया पूर्णचंद्रः स दत्तः ।
तस्थौ संप्रस्थ वह्निं मुनिहृदि विमलानसूयोदरेऽष्टौ
वारान् संस्थाय कालानलशमन इति प्रादुरासीच्छुभाहे ॥ ४ ॥

अत्रेर्गेहेवतीर्णः परपुरुष इति द्रष्टुकामान् समेताँ-
ल्लेखान् सिद्धर्षिसंघान् निजमतिसुचिरं रूपमैशं च भावम् ।
विश्वात्मा दर्शयित्वा पुनरपि शिशुतां प्रीणनार्थं स्वपित्रो-
राश्रित्यासीदगारे शुभतरचरितो योगिनां वल्लभोऽसौ ॥ ५ ॥

क्रीडार्थं दक्षिणाशां मुनिसुतसहितः संययौ तत्र सृष्टं
तेषां भावेक्षणार्थं वनमतिललितं केऽपि तत्रैव सक्ताः ।
केऽप्येनं नो जहुस्ते न्यविशत जलधिं चित्रलीलाविलासो
लीलाविश्वंभरोऽसौ स्वजनकरुणया प्रादुरासीत्ततोऽब्धेः ॥ ६ ॥

काले काप्यात्मभक्तान् स्वभजनविमुखांस्तुच्छसिद्ध्यातिदृप्तान्
स्वासक्तान् कर्तुकामो मुनिरिव स तदा तेषु तस्थौ ततस्ताम् ।
हृत्वा स्वा योगसिद्धीर्व्यतनुत बहुशो भोगमोक्षैकहेतुं
स्वीयं मंत्रागमं च प्रभुरखिलगुरुः सिद्धराजः स दत्तः ॥ ७ ॥

वेदाः सांगाः सयज्ञा विधिनियमपदं लुप्तमासीत्पुरेदं
तत्सृष्टं येन भूयः सकलतनुभृतां धर्मसंस्था व्यधायि ।

देवो विज्ञानसिंधुः सुविमलमनसां ध्येय ईड्यश्च पुंसां
श्रेयः सोऽस्यावतारोऽष्टम इति कृपया पाति भक्तान् भवाब्धेः ॥८॥

पूर्वं संस्थापितं यत्सुविहितमपि सत्कर्म नर्ते स्वभक्ते-
र्मोक्षस्यापादकं स्यादिति मनसि विचिंत्यैकदा भक्तवृंदे ।
व्यक्तः स्वं भक्तियोगं व्यतनुत भगवानात्मसंप्राप्तिहेतुं
दत्तो विश्वंभरोऽसौ भजनरतिमतां योगसिद्धिं ददाति ॥ ९ ॥

भक्तानामीक्षमाणः प्रणयमतियुवा रुक्मकांतिः प्रसन्नः
संदर्शालापमुख्यैः सुललितनिजसंचेष्टितैः पावयंस्तान् ।
भिक्षो रूपेण मह्यां विचरति सततं द्वंद्वभावव्यपेतो
मायामुक्तोऽवधूतोऽभयदगुणमहाध्वांतधूः सत्प्रकाशः ॥ १० ॥

आसीद्यस्य प्रसादादसदृशमहिमा हैहयोऽनंतशक्ति-
र्जंभोऽपि स्वर्गनाथः सुरपतिरमरैर्यं समाराध्य सर्षिः ।
स्वर्लेभे दैत्यनाशान्नहुषमपि सुतं तत्पिता शक्रतुल्यं
मायायुक्तः स दत्तः परशुभृदभजद्यं च पित्रोः शुभार्थी ॥ ११ ॥

भ्रात्रा निर्वेदहेतोर्विरचितविपदं मातृवाक्यादलर्कं
संतं सम्यग्दिदृक्षुं कृतशुभवसतिं सह्यगोत्रे प्रसन्नम् ।
कस्त्वं कस्यापि दुःखं कथमिति वचसैवाकरोदात्मनिष्ठं
पश्चात्सांगं स्वयोगं गुरुरवददसावादिपूर्वस्तथान्यान् ॥ १२ ॥

भक्तानां योगदाता गुणतिमिरधुनिर्ज्ञानविज्ञानसूर्य-
स्तेषां केषां स्वकार्येऽखिलजननिलये केवलानंदरूपे ।
सायुज्यं कामुकानां मुदितमुनिवरः पिंगलो नागसंज्ञो
लेभे यस्मादिदेवः शिवतनुरगुणः सर्वदा योगनिष्ठः ॥ १३ ॥

द्यां यातानात्मभक्तान् बहुविधभजनैः स्वं समानेतुकामः
सिद्धैरानीय कृष्णामलकनगमये तस्य मूलेऽवतीर्णः ।

श्रीदत्तो देवदेवः ससुरमुनिनरा यस्य संदर्शमात्रा-
द्वेषोद्वासत्पतिः संख्यगमदतिभवां मुक्तिमद्वैतसंज्ञाम् ॥ १४ ॥
प्रह्लादः साध्यदेवा यदुरपि नृवरोऽनुग्रहाद्यस्य चान्ये
योगर्द्धिं प्राप्य तस्थुः सुविमलहृदयाः केवलानंदमग्नाः ।
योगीशो योगपालः प्रकृतिगुणपरः केवलानंदरूपो
दिग्वासा दिव्यमूर्तिः शिखरिनिवसतिः सोऽतिसौंदर्यराशिः॥१५॥
एवं लीलावतारैर्दशभिरपि विभुर्ज्ञानतत्पूर्वयत्नै-
र्दत्वात्मप्राप्तिसिद्धिं परमगतिमयीं भक्तसंघस्य भूम्नः ।
दिव्ये स्थाने समं तैर्निरवधिविभवे संस्थितोऽनंतलीलः
श्रीदत्तः कृष्णमूर्तिः सरसिजनयनो योगनिद्रारतोऽभूत् ॥ १६ ॥
तस्य श्रीकृष्णमूर्तेश्चरितमतिशुभं वेद सम्यक् स एकः
सर्वज्ञः श्रीगुरुर्यो निजपदमतुलं तेन यस्मिन्न्यधायि ।
येनैतद्योत भूयः प्रकटितममलं ज्ञानयोगादि सर्वं
तद्भक्तोद्धारहेतोः स भवति हि तया प्रीयमाणोऽस्य भक्तः॥१७॥
दत्तात्रेयः परात्मा प्रकृतिगुणयुतः सर्वसृष्टेर्निदानं
यत्सत्ताभ्यन्वितोयं सृजति विधिरिदं पाति विष्णुश्च रुद्रः ।
संहर्ता येन भास्वद्विधुमरुदनला धर्मवंतस्तथान्ये
न्यूनं विश्वात्मनोऽस्याचरितमिदमिति प्रोच्यतां किंत्वनंतम् ॥१८॥

श्रीमदादिगुरोरेवं चरितं पुण्यमुत्तमम्
पुराणोक्तकथासंघसूचनार्थं समासतः ॥ १९ ॥
उक्तं वेदाष्टदशभिः श्लोकैः पापौघनाशनं ।
पठतां शृण्वतां भक्त्या तन्याच्छिवमहर्निशम् ॥ २० ॥

इति श्रीमदादिगुरु दत्तात्रेयदिगंबरानुचरविरचिते
श्रीदत्तात्रेयमाहात्म्ये संक्षेपेण सर्वग्रंथतात्पर्यवर्णनं संपूर्णम् ॥

श्रीदत्तगुरवः प्रीयन्ताम् ।

---

# श्रीदत्तात्रेयषोडशावतारजयन्तीनां नामकालादिदर्शकं पत्रकम् ।

| अवतारानुक्रमः | नाम | मासः | पक्षः | तिथिः | वारः | नक्षत्रं | यामः | मुहूर्तः | दानं |
|---|---|---|---|---|---|---|---|---|---|
| १ | योगिराजः ... | कार्तिकः | शुक्ल | १५ | बुधः | कृत्तिका | प्रथमः | प्रथमः | नारीकेलफलम् |
| २ | अत्रिवरदः ... | ,, | कृष्ण | १ | गुरुः | रोहिणी | ,, | द्वि० | कदलीफलम् * |
| ३ | दत्तात्रेयः ... | ,, | ,, | २ | भृगुः | मृगशीर्षे | ,, | सूर्योदये | इक्षुः † |
| ४ | कालाग्निशमनः ... | मार्गशीर्षः | शुक्ल | १४ | बुधः | रोहिणी | द्वि० | द्वि० | पञ्चामृतम् |
| ५ | योगिजनवल्लभः ... | ,, | ,, | १५ | गुरुः | मृगः | चतुर्थः | सूर्यास्ते | मौक्तिकम् |
| ६ | लीलाविश्वंभरः ... | पौषः | ,, | ,, | बुधः | पुष्यं | प्र० | सूर्योदये | अन्नम् |
| ७ | सिद्धराजः ... | माघः | ,, | ,, | गुरुः | मघा | द्वि० | द्वि० | पुस्तकम् |
| ८ | ज्ञानसागरः ... | फाल्गुनः | ,, | १० | रविः | पुनर्वसुः | प्र० | सूर्योदये | मन्दिरम् |
| ९ | विश्वंभरोऽवधूतः ... | चैत्रः | ,, | १५ | भौमः | चित्रा | द्वि० | प्र० | गौः |
| १० | मायामुक्तोऽवधूतः ... | वैशाखः | ,, | १४ | बुधः | स्वातिः | ,, | मध्याह्ने | दध्योदनम् ऽ |
| ११ | मायायुक्तोऽवधूतः ... | ज्येष्ठः | ,, | १३ | भृगुः | स्वातिः | प्र० | प्र० | मधु |
| १२ | आदिगुरुः ... | आषाढः | ,, | १५ | मंदः | उत्तराषाढा | ,, | द्वि० | सुवर्णम् |
| १३ | शिवरूपः ... | श्रावणः | ,, | ८ | चंद्रः | स्वातिः | ,, | प्र० | उदकम् |
| १४ | देवदेवः ... | भाद्रपदः | ,, | १४ | भृगुः | शततारा | ,, | द्वि० | तांबूलम् |
| १५ | दिगंबरः ... | आश्विनः | ,, | १५ | बुधः | अश्विनी | ,, | प्र० | वस्त्रम् |
| १६ | कृष्णश्यामकमलनयनः ... | कार्तिकः | ,, | १२ | ,, | रेवती | ,, | सूर्योदये | रौप्यम् |

याम= प्रहर ( तीन तासांचा ). मुहूर्त=४८ मिनिटें ( अठ्ठेचाळीस ). * केळें. † ऊंस. ऽ दहींभात.

## १६१ श्रीसत्यदत्तव्रतपूजा.

श्रीगणेशाय नमः ॥ श्रीदत्त ॥ व्रती प्रातस्तिलामलककल्केन स्नात्वा व्रतं संकल्प्य कृतोपोषणः सायं पुनः स्नात्वा वाससी परिधाय गोमयोपलिप्ते रंगवल्ल्यादिरंजिते प्रदेशे कल्पितं शुभं पूजास्थानमागत्य संभृतपूजासंभारः आसन उपविश्य आचम्य प्राणानायम्य कृतदेवगुर्वादिवन्दनः सुमुखश्चेत्यादि देशकालौ संकीर्त्य मम आत्मनः०र्थं मम समस्तसंभावितदुरितोपशमपूर्वकसकलमनोरथसिध्यर्थं यथामिलितोपचारैः ( पुरुषसूक्तादिमंत्रैः ) श्रीसत्यदत्तस्य सांगस्य सपरिवारस्य पूजनं करिष्ये ॥ तत्रादौ निर्विघ्नतासि० गणपतिपूजनं कलशाद्याराधनं शरीरशुध्यर्थं षडंगन्यासांश्च करिष्ये ॥ इति संकल्प्य गणपतिपूजनादि कृत्वा अपवित्रः प०॥ ततः पीठे—ॐ मही द्यौरिति भूमिं स्पृष्ट्वा—ओषधय इतिधान्यपुंजं कृत्वा—आकलशेष्विति कलशं संस्थाप्य तत्र इमं मे गंगे इति जलं—कांडात्कांडादिति दूर्वाः—अश्वत्थेव इति पंचपल्लवान्—याः फलिनीरिति फलं—स हि रत्नानि—इति पंच रत्नानि—हिरण्यरूप इति हिरण्यं च प्रक्षिप्य—युवासुवासा इत्यनेन वस्त्रेणावेष्ट्य पूर्णादर्वीति पूर्णपात्रं निधाय तत्र वरुणं संस्थाप्य पंचोपचारैः पूजयेत् । ( ततः आदित्यादिनवग्रहान् लोकपालान्वा आवाह्य पूजयेत् । ) ततः पीठप्राग्द्वारे— ॐ लक्ष्मीनारायणाभ्यां० । दक्षिणे ॐ पार्वतीपरमेश्वराभ्यां० । पश्चिमे ॐ रतिकंदर्पाभ्यां० । उत्तरे ॐ भूवराहाभ्यां० । मध्ये ॐ नमो भगवते दत्तात्रेयाय इति श्रीसत्यदत्तं यंत्रे मूर्तौ गुरुपादुकासु शालिग्रामादिषु वा आवाहयेत् । अथ ध्यानम् । श्रीदत्तं खेचरीमुद्रामुद्रितं योगिसद्गुरुम् । सिद्धासनस्थं ध्यायेऽभीवरप्रदकरं हरिं ॥ इति ध्यानं । ॐ सहस्रशीर्षा०॥ दत्तात्रेयाह्वयाम्यत्र परिवारैः सहार्चने । श्रद्धाभक्त्येश्वरागच्छ ध्यात-

धाम्नांजसा विभो ॥ १ ॥ इत्यावाहनं ॥ ॐ पुरुषएवे० ॥ सौवर्णं रत्नजडितं कल्पितं देवतामयम् । रम्यं सिंहासनं दत्तं तत्रोपविश यंत्रिते ॥ २ ॥ इत्यासनं ॥ ॐ एतावान० ॥ पाद्यं चंदनकर्पूरसुरभि स्वादु वारि ते ॥ गृहाण कल्पितं तेन दत्तांघ्री क्षालयामि ते ॥ ३ ॥ इति पाद्यं ॥ ॐ त्रिपादू० ॥ गंधाब्जतुलसीबिल्वशमीपत्राक्षतान्वितम् ॥ सांब्वर्घ्यं स्वर्णपात्रेण कल्पितं दत्त गृह्यताम् ॥ ४ ॥ इत्यर्घ्यं ॥ ॐ तस्माद्विरा० ॥ सुस्वाद्वाचमनीयांबु हैमपात्रेण कल्पितम् । तुभ्यमाचम्यतां दत्त मधुपर्कं गृहाण च ॥५॥ इत्याचमनीयं ॥ ॐ यत्पुरुषेण० ॥ प्रवचनादिसुदुर्लभताश्रुतेस्त्वथाधिपते त इह श्रुतिविश्रुते । परमभक्तिसुशीतलसज्जलं वपुषि सिक्तमथाप्लुतयेऽस्त्वलम् ॥६॥ इति स्नानं ॥ ॐ आप्याय० ॥ कामधेनु० ॥ १ ॥ इति पयःस्नानं ॥ ॐ दधिक्राव्णो० ॥ चंद्रमंडल० ॥ २ ॥ इति दधिस्नानं ॥ ॐ घृतंमिमि० ॥ आज्यं सुरा० ॥ ३ ॥ इति घृत० ॥ ॐ मधुवाता० ऋक् ३ ॥ सर्वौषधि० ॥ ४ ॥ इति मधुस्नानं ॥ ॐ स्वादुःपव० ॥ इक्षुदंड० ॥ ५ ॥ इति शर्करा० ॥ ॐ गंधद्वारां० ॥ मंदाकिन्यास्तु० ॥६॥ इति गंधोदकस्नानं ॥ ॐ आपोहिष्ठा० ३ ॥ इति शुद्धोदकस्नानं ॥ ततः देवं गंधाद्युपचारैः संपूज्य–उत्तरे निर्माल्यं विसृज्य पुरुषसूक्तरुद्रपवमानश्रीसूक्तादिभिराभिषेकं कुर्यात् । (ॐ कनिक्रद० इति अभ्यंगः ।) देवं पीठे संस्थाप्य ॐ तंयज्ञं० ॥ भक्त्या दिगंबराचांतजलेदं दत्त कल्पितं । काषायपरिधानं तद्गृहाणैणेयचर्म च ॥ ७॥ इति वस्त्रं ॥ ॐ तस्माद्य० संभृतं० ॥ नानासूत्रधरैते ते ब्रह्मसूत्रे प्रकल्पिते ॥ गृहाण दैवतमये श्रीदत्त नवतंतुके ॥ ८ ॥ इति यज्ञोपवीतं ॥ ॐ तस्माद्य० ऋचः० ॥ भूतिमृत्स्नासुकस्तूरीकेशरान्वितचंदनं । रत्नाक्षताः कल्पितास्त्वामलंकुर्वेऽथ दत्त तैः ॥ ९ ॥ इति चंदनं अक्षतांश्च ॥ ॐ अहिरिव० ॥ हरिद्रारांजि० ॥ इति हरिद्रां ॥ कुंकुमं कामदं० इति कुंकुमं नानापरिमल-

द्रव्याणि च समर्प्ये ॥ ॐ तस्मादश्वा० ॥ सच्छमीबिल्वतुलसीपत्रैः सौगं-
धिकैः सुमैः ॥ मनसा कल्पितैर्नानाविधैर्दत्तार्चयाम्यहम् ॥ १० ॥ इति
पुष्पाणि ॥ ( ततः सति संभवे अष्टोत्तरशतनामभिः पुष्पतुलसीपत्र-
बिल्वपत्रादिभिः पूजयेत् ) अथावरणपूजनम् ॥ अद्येत्यादि० श्रीसत्य-
दत्तव्रतांगत्वेनावरणदेवतापूजनं करिष्ये इति संकल्प्य गंधाक्षतपुष्पैः
देवताः पूजयेत् ॥ ॐ शिक्षायै नमः ॐ कल्पाय० ॐ व्याकरणाय० ।
ॐ निरुक्ताय० । ॐ ज्योतिषाय० । ॐ छंदसे० । ॐ वह्नये० ।
ॐ ईशाय० । ॐ रक्षसे० । ॐ वायवे० ॥ १ ॥ दयाब्धे त्राहि
संसारसर्पान्मां शरणागतं । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥
इति साक्षतं जलमुत्सृजेत् ॥ एवं सर्वत्र ॥ ॐ ऋग्वेदाय० । ॐ यजु-
र्वेदा० । ॐ सामवेदा० । ॐ अथर्वणाय० ॐ इतिहासपुराणेभ्यो० । ॐ
मीमांसायै० । ॐ न्यायाय० ॥ २ ॥ दयाब्धे० २ ॥ ॐ सरस्वत्यै० ।
ॐ गणपतये० । ॐ शुकाय० । ॐ सुमंतवे० । ॐ जैमिनये० । ॐ
वैशंपायनाय० । ॐ पैलाय० । ॐ गोभिलाय० ॥ ३ ॥ दयाब्धे० ३ ॥
ॐ कश्यपाय० । ॐ अत्रये० । ॐ भरद्वाजाय० । ॐ विश्वामित्राय०
ॐ गौतमाय० । ॐ जमदग्नये० । ॐ वसिष्ठाय० । ॐ व्यासाय०
॥ ४ ॥ दयाब्धे० ॥ ॐ अणिमाय० ॐ महिमायै० । ॐ गरिमायै० ।
ॐ लघिमायै० । ॐ प्राप्त्यै० । ॐ प्राकाम्या० । ॐ ईशित्वाय० ।
ॐ वशित्वाय० ॥ ५ ॥ दयाब्धे० । ॐ नंदनाथाय० । ॐ मत्स्येंद्राय० ।
ॐ दलेंद्राय० । ॐ गोरक्षाय० । ॐ गोगणेश्वराय० । ॐ नागार्जुना०
। ॐ मेघनादाय० । ॐ भुजंगाय० । ॐ कुरुनायकाय० । ॐ भैर-
वाय० ॥ ६ ॥ दयाब्धे ॥ ॐ इंद्राय० । ॐ अग्नये नमः । ॐ यमाय० ।
ॐ निर्ऋतये० । ॐ वरुणाय० । ॐ वायवे० । ॐ सोमाय० । ॐ
ईशानाय० ॥ ७ ॥ दयाब्धे० अनेन आवरणदेवतापूजनेन श्री० ॥
ॐ यत्पुरुषं व्य० ॥ लाक्षासिताभ्रश्रीवासश्रीखंडागरुगुग्गुलैः ॥ युक्तो-

ऽग्नियोजितो धूपो हृदा स्वीकुरु दत्त तम् ॥ ११ ॥ इति धूपं ॥ ॐ ब्राह्मणोस्य० ॥ स्वर्णपात्रे गोघृताक्तवर्त्तिप्रज्वालितं हृदा ॥ दीपं दत्त सकर्पूरं गृहाण स्वप्रकाशक ॥१२॥ इति दीपं ॐ चंद्रमा०॥ सषड्रसं षड्विधान्नं नैवेद्यं गव्यसंयुतम् । कल्पितं हैमपात्रे ते भुंक्ष्व दत्तांबु वदः पिब ॥ १३ ॥ इति नैवेद्यं ॥ त्रीश तेऽद्य परभक्तिवीटिका पंचमैक पुरुषार्थसाधिका ॥ निर्विकल्पकसमाधितःपुरा रंजिकाऽस्तु भवभंजिका वरा ॥ इति तांबूलं ॥ हिरण्यगर्भेति दक्षिणां ॥ इदंफलमिति फलानि ॥ ॐ श्रियेजातः श्रिय० कर्पूरपूरेण मनोहरे० ॥ इतिनीराजनं ॥ ॐ नाभ्या०॥त्वं त्रीशाहमहं त्वमित्यवगते स्थेम्ने निदिध्यासनात्मानस्ते परिदक्षिणा हि विहिता यद्यच्च मे क्रीडितम्॥ तद्ब्रह्मास्तु चिदन्वयेक्षितुरथो त्वानुस्मरन् व्याहरेतारंतारकमेकमात्मनि यथा शार्दूलविक्रीडितम्॥ १४॥ इति प्रदक्षिणाः॥ ॐ सप्तास्या०॥ नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः ॥ आचार्यसिद्धेश्वरपादुकाभ्यो नमोऽस्तु लक्ष्मीपतिपादुकाभ्यः ॥ १५ ॥ इतिनमस्कारान् ॥ ॐ यज्ञनयज्ञ० ॥ राजाधि० ॥ ॐ दिगंबराय विद्महे अवधूताय धीमहि । तन्नो दत्तः प्रचोदयात् ॥ मंत्रवन्निहितो मूर्ध्नि दत्त ते कुसुमांजलिः ॥ कल्प्यंते मनसा गीतवाद्यनृत्योपचारकाः ॥१६॥ इति मंत्रपुष्पांजलिं राजोपचारांश्च ॥ अथ प्रार्थना ॥ त्वत्प्रेमभक्त्यैव सदा मदात्मा धिया धियं दृष्टिमपीश दृष्ट्या ॥ अंगैः सदांगानि दृढं दयाब्धे हरे निबध्नंत्विति मेऽस्ति याञ्चा ॥१॥ यः सर्वहृत्स्थोऽस्व यतः स्मृतिर्विद्वेदांतकृद्योऽपि च वेदवेद्यः ॥ समौ यदंशौ सयुजौ सुपर्णौ वृक्षाश्रितौ भुक्त्यवलोकनोत्कौ ॥ २ ॥ स त्वं परात्मा पुरुषोत्तमः श्रुतिख्यातः समाविश्य जगत्त्रयं सदा ॥ ईशाव्ययानंत बिभर्षि दत्त ते पादाब्जयुग्माय नमोऽस्तु सर्वदा ॥३॥ असकृदभिहिता तेऽनेकजन्माप्तपुण्यैः प्रणतिविततिरेषोऽद्वैतशेषाऽविशेषा ॥ त्वयि विनिहितमेतन्मेऽद्य सर्वं स्वकीयं त्र्यधिप

जयतु पूजा त्वद्यशोमालिनीयम् ॥ ४ ॥ मंत्रहीनं० ॥ ५ ॥ अन्यथा० ॥ ६ ॥ यस्य स्मृत्या० ॥ इति प्रार्थना ॥ अनेन यथा० श्रीसत्यदत्तः सांगः सपरिवारः प्रीयताम् ॥ इतिपूजाविधिः ॥

---

# ॥ श्रीसत्यदत्तव्रतकथा ॥

॥ श्रीगणेशाय नमः ॥ श्रीदत्त ॥ दीपक उवाच ॥ दत्तात्रेयाभिधः कोऽयं देवः सिद्धेशवन्दितः। वर्णयन्ति महात्मानो यच्चरित्रमनुत्तमम् ॥ १ ॥ वेदधर्मा उवाच ॥ धन्योऽसि कृतकृत्योऽसि सौभाग्योऽसि धरातले। श्रीदत्तात्रेयमाहात्म्ये यस्य ते मतिरुत्तमा ॥ २ ॥ योगीशस्य परं वक्ष्ये माहात्म्यं पापनाशनम्। सद्यः सिद्धिप्रदं नृणां सत्यदत्तव्रताश्रयम् ॥ ३ ॥ कलिमागतमाज्ञाय शौनकाद्या महर्षयः। सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥ ४ ॥ त एकदा तु मुनयः प्रातर्हुतहुताग्नयः। सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात् ॥ ५ ॥ ऋषय ऊचुः ॥ सूत सूत महाबुद्धे सर्वशास्त्रविशारद। वासुदेवस्य माहात्म्यं दत्तदेवस्वरूपिणः ॥ ६ ॥ परमानंदजननं सर्वसंपत्प्रदं नृणाम्। सदानंदस्य नो ब्रूहि योगाख्यानानि सर्वतः ॥ ७ ॥ ऐश्वर्यमतुलं प्रापुस्तद्भक्ता इति शुश्रुम ॥ ८ ॥ सूत उवाच ॥ शृण्वन्तु मुनयः सर्वे वेदवेदाङ्गपारगाः। भवतां परितोषाय दत्तदेवप्रसादतः। माहात्म्यं श्रावयिष्यामि निबोधत यथाश्रुतम् ॥ ९ ॥ कुलाद्रिमृक्षं ब्रह्मज्ञवरीयाँश्च विधीरितः। पत्नीयुतोऽत्रिः पुत्रार्थं त्र्यधीशोपास्तये ययौ ॥ १० ॥ तार्क्ष्यासनस्थोऽब्दशतं संयतात्माऽनिलाशनः। त्रिर्द्वन्द्वः सुतरां दध्यावेकं तादृक्प्रजाप्तये ॥ ११ ॥ प्रापुरत्रिं कविष्ण्वीशाः स्वस्वचिह्नान्वितास्ततः। तपसा तस्य संतुष्टा वरदानोत्कमानसाः

॥ १२ ॥ ऊचुस्त ऋषे सत्संकल्प न तेऽसत् हृद्यं हि य एको ध्यातःस इतः कः ॥१३॥ मादृक्सुतलब्ध्यै वृत्तश्रमासिद्ध्यै। दत्तोऽद्य मयाऽऽत्मा-ऽयं ते सकलात्मा ॥ १४ ॥ एवं दत्वा वरं सद्यो देवा अन्तर्हितास्त्रयः। अथावतरदग्नेऽत्रेर्दत्तात्रेयश्चतुर्भुजः ॥ १५ ॥ आप्तकामोऽपि भगवान् श्रीदत्तो योगमायया। दर्शयन् भक्तवशतां संतोष्य पितरौ स्थितः ॥ १६ ॥ अथ कश्चिद्द्विजवरस्सर्वसंस्कारसंस्कृतः। अधीतवेदवेदाङ्ग-श्चरिताश्रमसत्क्रियः ॥१७॥ चतुःसाधनसम्पन्नो दैवीसम्पत्समन्वितः। एवं सन्नपि नो शान्तिं प्राप्तो नानाश्रुतभ्रमात् ॥ १८ ॥ "गुरूक्तार्थाकल्पनया हृत्स्थैर्याद्बोध उद्भवेत्"। इत्यौपनिषदं दत्तं ध्यात्वा संपूज्य यत्नतः ॥ १९ ॥ तिष्ठन्तं खिन्नहृदयं विषीदन्तं शुचान्वितम्। त्रातुमाविरभूच्छ्रीमान्दत्तात्रेयो दिगम्बरः ॥ २० ॥ मनोहरे मार्गशीर्षे शुक्लपक्षे गुरोर्दिने। प्रदोषे पूर्णिमायां भे मृगशीर्षाभिधे शुभे ॥ २१ ॥ प्राह विप्र किमर्थं त्वं दुर्मना इव लक्ष्यसे। वद सर्वं ममाग्रे त्वं दौर्मनस्यस्य कारणम् ॥२२॥ तं प्रत्युवाच तद्भक्तियन्त्रितो नतकन्धरः ॥ विमुक्तो मुच्यतेऽनर्थादिति श्रुत्वा तदीहया। प्रवृत्तस्य ममाज्ञस्य भ्रमदोऽभूच्छ्रुतार्णवः ॥ २३ ॥ एतेषां कतमः श्रेयान् शिवः पंथाऽभयोज्झितः। सुगमो मेऽद्य कृपया संप्रदर्शय सद्गुरो ॥ श्रीदत्त उवाच। समीचीनः कृतोऽयं हि प्रश्नोऽतोऽवहितः शृणु ॥ श्रुत्या युक्त्यानुभूत्या च यत्सत्यं तद्ब्रवीमि ते ॥ २५ ॥ ईश्वराराधनधिया स्वधर्माचरणात्सताम्। ईशप्रसादस्तद्रूपस्सुलभश्चात्र सद्गुरुः ॥ २६ ॥ सद्गुरोस्संप्रसादेऽस्य प्रतिबन्धक्षयस्तथा। दुर्भावनातिरस्काराद्विज्ञानं मुक्तिदं क्षणात् ॥ २७ ॥ सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये। सत्यस्य सत्यमुत सत्यनेत्रं सत्यात्मकं मां खलु विद्धि सत्यम् ॥ २८ ॥ द्विपैकदेशमालम्ब्य यथान्धा द्विपवेदिनः। अन्योन्यं कलहायन्ते शास्त्रौघोऽयं तथाल्पदृक् ॥ २९ ॥ विज्ञाय तत्त्वं

भवता मदुक्तेर्बुद्ध्वा सदैवोपनिषन्मतं सत् । स्थेयं तदालोचन एव तेन मुक्तिः कृतार्थत्वमिहैव तेऽस्तु ॥ ३० ॥ इति श्रीहृत्पुण्डरीकाधिष्ठित-श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवानंदसरस्वतीयतिमतिकलिते श्रीसत्यदत्तव्रताख्याने प्रथमोऽध्यायः ॥ १ ॥ श्रीगुरुदेवदत्त ॥

श्रीदत्त ॥ सूत उवाच ॥ इति दत्तोदितं ज्ञानं श्रुत्वा संतुष्टमानसः । नमः श्रीसत्यदत्तायेत्युक्त्वा नत्वावदच्च तम् ॥ १ ॥ द्विज उवाच ॥ विराडादिस्थावरान्ता ईश्वरा बहवः श्रुताः । एतेषु कतमोऽर्च्योऽत्र मोक्षसिद्धिप्रदश्च कः ॥ २ ॥ श्रीदत्त उवाच ॥ मच्चिदंशयुतास्ते तु फलदाः स्वाधिकारतः । किंतु मद्भजनात्कामक्रोधाद्यन्तर्मलक्षतिः ॥ ३ ॥ मत्प्रसादात्ततश्चान्तस्तमोनाशस्ततोऽमृतम् । निर्गुणोपास्तितः सर्वान्कामानाप्त्वाऽमृतो भवेत् ॥ ४ ॥ तस्मात्त्यक्त्वाऽखिलान्धर्मान्मामेहि शरणं द्विज । मत्प्रसादाद्विशुद्धोऽतो मोक्ष्यसे शान्तिमृच्छसि ॥ ५ ॥ स्वस्त्यस्तु ते मदुक्तेस्त्वं सारमाधत्स्व शोधितम् । मद्भक्तेष्वपि योगोऽयं प्रकाश्यो यत्नतस्त्वया ॥ ६ ॥ इत्युक्त्वा भगवान्दत्तो लीलया द्राक् तिरोदधे । स द्विजः कृतकृत्योऽभूत्तदुक्त्यर्थविलोकनात् ॥ ७ ॥ सूत उवाच ॥ आजीवितं त्रयः सेव्या, वेदान्तो गुरुरीश्वरः । पूर्वं ज्ञानाप्तये पश्चात्कृतघ्नत्वनिवृत्तये ॥ ८ ॥ महानुशासनं चेत्थं मनस्यानीय स द्विजः । व्रतं श्रीसत्यदत्तस्य चकार प्रेमनिर्भरः ॥ ९ ॥ पौर्णमास्यां च संक्रान्तौ शुभे काले गुरोर्दिने । समुपोष्योक्तकाले वै समाहृतसमर्हणः ॥ १० ॥ सप्तावरणसंयुक्तं दत्तात्रेयं मुनीश्वरम् । कल्पोक्तेन विधानेन सत्यदत्तमपूजयत् ॥ ११ ॥ सितां गोधूमचूर्णं च घृतमेतत् त्रिकं समम् । समादाय सपादं च सम्यक् क्षीरे विपाचितम् ॥ १२ ॥ संस्कृतं चैलाद्राक्षाद्यैस्स संयावं न्यवेदयत् । ब्राह्मणैर्बान्धवैः सार्धं प्रसादं जगृहे ततः ॥ १३ ॥ एवं श्रीसत्यदत्तस्य व्रतं कुर्वन् द्विजोत्तमः । सद्भक्त्योपास्तयोगीन्द्रस्त्यक्तसर्वैषणो वशी ॥ १४ ॥

दत्तोक्तज्ञानमाहात्म्यात्पुनरावृत्तिदुर्लभम् । जगामान्ते द्विजश्रेष्ठाः सहसा महसां निधिम् ॥ १५ ॥ इति श्रीहृत्पु० श्री० प० प० श्रीवासुदेवानंद० सत्यदत्तोपा० द्वितीयोऽध्यायः ॥ २ ॥ श्रीदत्त ॥

॥ श्रीदत्त ॥ ऋषय ऊचुः ॥ सूत सूत महाबुद्धे वद नो वदतां वर । माहात्म्यं सत्यदत्तस्य यतः शुश्रूषवो वयम् ॥ १ ॥ सूत उवाच ॥ कश्चिद्राजा सोमवंश्य आयुर्नाम महामतिः । सम्राट् दाता वशी धन्यः सोऽनपत्यत्वदुःखितः ॥ २ ॥ श्रीदत्तात्रेयमाहात्म्यं श्रुत्वा मुनिसमीरितम् । गुरुं शौनकमानम्य पुत्रार्थी शरणं ययौ ॥ ३ ॥ राजेंद्र सत्यदत्तस्य व्रतं कुरु यथाविधि । तद्व्रतस्य प्रभावेण सुपुत्रं प्राप्स्यसि ध्रुवम् ॥ ४ ॥ श्रुत्वेत्थं स गुरोर्वाक्यं व्रतं चक्रे समाहितः । प्रसादं जगृहे भक्त्या भार्याबन्धुजनैस्सह ॥ ५ ॥ अथास्य महिषी स्वप्ने महापुरुषलक्षणम् । मुक्ताफलं चार्पयन्तं क्षीरपूर्णेन कम्बुना ॥ ६ ॥ स्वात्मानमभिषिंचंतं दृष्ट्वा पत्ये शशंस तत् ॥७॥ प्रातर्नृपोऽपि संशुद्धः स्वप्नं शौनकमब्रवीत् ॥ शौनक उवाच ॥ अनसूयागर्भरत्नदत्तात्रेयार्पितं फलम् ॥ ८ ॥ धर्मात्मा वैष्णवः पुत्रः श्रीसोमान्वयभूषणः । भविष्यतीति स्वप्नेन सूचितं नात्र संशयः ॥ ९ ॥ अत्रान्तरे तु हुण्डस्य तनया नन्दनं वनम् । वयस्याभिर्गता तत्र चारणानां परस्परम् ॥ १० ॥ भाषतां वचनादायोः पुत्रो हुण्डासुरान्तकः । भविष्यतीति सा श्रुत्वा गत्वा पित्रे शशंस तत् ॥ ११ ॥ दुरात्मा दानवो दुष्टः श्रुत्वैवं चकितोऽभवत् । नूनं शत्रुर्ममैवैष हंतव्यो मे प्रयत्नतः ॥ १२ ॥ इति निश्चित्यैंदुमत्यै स दुःस्वप्नानदर्शयत् । श्रीदत्तरक्षितो गर्भो नैव बभ्रंश भाग्यवान् ॥ १३ ॥ ततः सुशोभने काले तुंगस्थे ग्रहपञ्चके । असूर्यगे महाभागमसूतेंदुमती सुतम् ॥ १४ ॥ दृष्ट्वा तं सुभगं बालं ननन्देन्दुमुखी सती । आयू राजा च तं श्रुत्वा पुत्रोद्भवमहोत्सवम् ॥१५॥ जातकर्माऽकरोत्प्रेम्णा ददौ दानानि भूरिशः । काचिदत्रान्तरेऽरिष्टाद्वाःस्थेका

बहिरागता ॥ १६ ॥ हुण्डासुरोऽपि मायावी तस्या अङ्कं प्रविश्य सः। नेतुकामो जजापेष्टां लघुप्रस्वापिनीं विधेः ॥ १७ ॥ तत्र सुप्तेषु सर्वेषु देव्या संमोहितेष्वथ। प्रादुर्भूय स्वरूपेण दैत्यो बालं जहार सः ॥ १८ ॥ अपहृत्याथ तं बालं काञ्चनाख्यं पुरं स्वकम्। गत्वा प्रियां समाहूय तस्यै दत्वाऽसुरोऽब्रवीत् ॥ १९ ॥ प्रिये समक्षमेव त्वं घातयित्वार्भमप्यमुम्। तन्मांसं प्रातराशाय सास्रं मे देहि पाचितम् ॥ २० ॥ तथेत्युक्त्वाऽसुरस्त्री सा बालमादाय निर्दयम्। प्राहैकलाख्यां सैरंध्रीं हत्वैनमविचारतः ॥ २१ ॥ पक्त्वोत्तमं प्रदेहि त्वं प्रियभोजनहेतवे इत्युक्त्वाऽदाच्छिशुं सापि सूदहस्ते तथा ददौ ॥ २२ ॥ विश्वासेनैव हुण्डस्य प्रिया दत्वार्भकं स्वयम्। जाता कार्यान्तरासक्ता सैरंध्र्येकाऽत्र संस्थिता ॥ २३ ॥ दिव्यं सद्योजातमपि दृष्ट्वा बालं स निर्दयः। चिच्छेद सुशितास्त्रेण तथापि स न विव्यथे ॥ २४ ॥ श्रीदत्तचक्रगुप्तत्वाच्छस्त्रं भग्नं स नो हतः। भाविबालसुदैवेन शान्ता क्रूरापि सैकला ॥ २५ ॥ सूदं प्राह त्वया बालो न वध्योऽयं महामते। तथेत्युक्त्वा कृपाविष्टा तदैवादाय तं द्रुतम् ॥ २६ ॥ द्वाराद्बहिर्निधायर्षेर्वसिष्ठस्यागतो पुनः। मृगशावं निहत्यैकं पक्त्वा सूदः सुसंस्कृतम् ॥ २७ ॥ तन्मांसं दैत्यराजाय धूर्तो विश्वासयन् ददौ। तदाऽसुरो हृष्टतरो भूत्वा मूढस्तदामिषम् ॥ २८ ॥ भुक्त्वाऽऽत्मानं कुधीर्मेने कृतकृत्यं हतान्तकम्। ततः प्रभाते विमले वसिष्ठो ज्ञानिनां वरः ॥ २९ ॥ बहिरेत्यार्भकं द्वारि ददर्श मुनिवृंदयुक्। दृष्ट्वा विस्मयमापन्न उवाचारुन्धतीपतिः ॥ ३० ॥ मुनयः पश्यतात्रैष बालः कस्यास्ति सुंदरः। रात्रौ केन समानीय स्थापितस्तन्न विद्महे ॥ ३१ ॥ मुनयस्तं शिशुं दृष्ट्वा विस्मिता अपि तेऽभवन्। वसिष्ठस्तु तदा ध्यात्वा योगी प्राह त्रिकालवित् ॥ ३२ ॥ आयोस्तु सोमवंशस्य दत्तसेवाफलोद्भवः। श्रीदत्तगुप्तः पुत्रोऽयमायुष्मान्राजलक्षणः ॥ ३३ ॥ हुण्डेन स्वान्तकं मत्वा हृतो

दैवादिहागतः। मैत्रावरुणिरित्युक्त्वा ज्ञानीशोऽपि विमोहितः ॥ ३४ ॥ कराभ्यां दययाऽऽदाय स्वाश्रमं तमनीनयत्। वसिष्ठ आह श्रीदत्तप्रसादादमरान्नरान् ॥ ३५ ॥ शीघ्रं विपद उध्दृत्य सम्राड् जिष्णुर्भविष्यति। इति ब्रुवति मौनीशे पुष्पाणि ववृषुः सुराः ॥ ३६ ॥ ननृतुश्चाप्सरोवर्गा गन्धर्वाः सुस्वरं जगुः। ऋषयोऽपि तदा हृष्टाः कुमाराशिषो ददुः ॥ ३७ ॥ दीर्घायुरस्तु सततं सहओजोबलान्वितः। नामकर्माऽथ विधिवद्वासिष्ठस्तस्य चाकरोत् ॥ ३८ ॥ न क्वापि बालभावैस्ते दूषितं यन्नराधिप। तस्मान्नहुषनाम्ने ते स्वस्त्यस्त्वमरपूजित ॥ ३९ ॥ अरुन्धती सती सापि बालमौरसवत्सदा। ररक्ष दैवनाथं तं वात्सल्याल्लालनादिना ॥ ४० ॥ प्राप्तेऽथैकादशे वर्षे यथाविध्युपनीय तम्। वेदमग्राहयत्साङ्गं शास्त्राणि च यथार्थतः ॥ ४१ ॥ सरहस्यं धनुर्वेदं सविधानं विशेषतः। ज्ञानशास्त्रं राजनीतिं सेतिहासपुराणकम् ॥ ४२ ॥ बहुशोऽपि विनीतात्मा शिष्यत्वेन यथाविधि। सिषेवे श्रीगुरुं भक्त्या मनोवाक्कायकर्मभिः ॥ ४३ ॥ इत्थं सर्वगुणापूर्णो नहुषो गतमत्सरः ॥ श्रीवसिष्ठप्रसादेन सर्वा विद्यास्ततार सः ॥ ४४ ॥ इति श्री० श्री० प०प० श्रीवासुदेवानन्दसरस्वतीयतिमतिमकलिते० ने तृतीयोऽध्यायः ॥ ३ ॥ श्रीदत्त ॥

॥ सूत उवाच ॥ प्राक्कृतात्पाह्यघादित्थं सकृद्ये प्रार्थयन्त्यपि। तान्पात्यतो नित्ययुक्तभक्तोपेक्षा कथं हरेः ॥ १ ॥ नीते हुण्डासुरेणार्भे प्रातःकाल उपागते। प्रस्वापिन्यां गतायां च जनः सुप्तोत्थितोऽभवत् ॥ २ ॥ वीतनिद्रेन्दुमत्यर्भमपश्यन्ती समन्ततः। विललाप तदा तन्वी सा हाहाकारपूर्वकम् ॥ ३ ॥ केन मे सर्वलक्ष्माढ्यः सुतो देवसुतोपमः। दत्तो दत्तेन गुप्तश्च कथं कस्माध्दृतस्त्वितः ॥ ४ ॥ हा पुत्र वत्स हा बाल हा गुणाकर सुन्दर। क्वासीति विलपन्ती सा मूर्च्छिताभून्मृतोपमा ॥ ५ ॥ राजाप्यप्रियमाकर्ण्य प्राप्यारिष्टं ददर्श ताम्।

भूत्वातिविह्वलो दीनो विलपन्निदमब्रवीत् ॥ दत्तात्रेयप्रसादस्य श्रुतं मे फलमक्षयम् । लब्धोऽपि सुगुणः पुत्रस्तत्र विघ्नः कथं त्वयम् ॥७॥ इह धर्मफलं नास्ति नास्ति वै तपसः फलम । नास्ति दानफलं नष्टे सुपुत्रे निश्चिनोम्यदः । दीनवत्सल मां पाहि श्रीदत्तानन्यमातुरम् ॥८॥ अथ दत्तेरितः प्राप नारदो दिव्यदर्शनः । प्रत्युद्गम्याभ्यर्च्य नृपस्तस्मै दुःखं न्यवेदयत् ॥ ९ ॥ नारद उवाच ॥ किं नश्वरेण पुत्रेण गृहेणाङ्गेन वा तव । लोकः सुखोऽस्ति ह्यात्मा दत्तोऽमुं शरणं व्रज ॥१०॥ यं तु शोचसि हुण्डेन हन्तुं नीतोऽपि दैवतः । कस्यचिन्मुनिवर्यस्य गृहेऽस्ति स सुरक्षितः ॥ ११ ॥ विद्वान् हत्वाऽसुरं सार्द्धं पत्न्या गत्वाऽऽशु शत्रुहा । भुक्त्वेह राज्यमैन्द्रं च पदं मर्त्योऽपि भोक्ष्यसि ॥१२॥ इत्युक्त्वाऽथ मुनौ याते भार्यायै तच्छशंस सः । देवर्ष्युक्तिः प्रिये सत्या वरः सत्योऽपि चेशितुः ॥ १३ ॥ प्रसादो नान्यथा तस्माच्छोकं जह्यंगशोषणम् । एवं मुनिप्रत्ययात्तौ स्मृत्वा माहात्म्यमीशितुः ॥१४॥ श्रीसत्यदत्तमभ्यर्च्य सुखमासतुरन्वहम् ॥ तद्व्रतस्य प्रभावेण प्रेरितो मुनिपुङ्गवः । वसिष्ठोऽप्येकदाहूय नहुषं तत्र तं जगौ ॥ १५ ॥ आयोः सुतस्त्वं नहुष इन्दुमत्यात्मजो विधेः । चारणानां भाषणतस्त्वत्तो मृत्युभयार्दितः ॥ १६ ॥ हन्तुं कृतमतिर्दुष्टो हुण्डोऽरिष्टादपाहरत् । सूदायादात्र हन्तुं त्वां स तु दैवादिहानयत् ॥१७॥ पालितोऽसि मया वत्स सोमवंशविभूषण । क्षत्रोऽसि त्वमतो हिंस्रान्निहन्तुं मृगयां चर ॥ १८ ॥ तत्रायुष्मन् महाबाहो धनुर्विद्याविशारद । दत्तात्रेयाभिगुप्तस्त्वं गत्वा हुण्डासुरं जहि ॥ १९॥ ब्राह्मणाः पितरो देवा दुरितात्पान्तु रोदसी । पूषा च मा प्रभवतु दुःशंसः सर्वथा जय ॥ २० ॥ इति प्रस्थापयामास लब्धाशीः सोऽपि तं गुरुम् । भक्त्या प्रणम्य श्रीदत्तं संस्मृत्य नहुषोऽब्रवीत् ॥ २१ ॥ यो निषेकप्रभृत्यद्ययावत्स्नेहाद्ररक्ष माम् । स चात्रिनन्दनो युद्धे जयं दत्वाऽवतु प्रभुः ॥२२॥ एवमुक्त्वा

प्रतस्थेऽसौ हन्तुं हुण्डासुरं तदा। पुष्पाणि ववृषुर्देवा आशीर्वादान्मुनीश्वराः ॥ २३ ॥ अत्रान्तरे सहायार्थं शक्राज्ञप्तस्तु मातलिः। नहुषं प्राप्य देवेन्द्रप्रेरितोस्मीऽत्युवाच च ॥ २४ ॥ रथमारथाय हर्यश्वं दिव्यं हुण्डासुरं जहि। तच्छ्रुत्वा नहुषो हृष्टो भूत्वा नत्वारुरोह तम् ॥२५॥ वायूक्तमन्त्रैः सन्नद्धो ययौ हन्तुं महासुरम्। तत्राथ तत्सहायार्थं वापुर्दैत्यारिसैनिकाः ॥ २६ ॥ सिद्धगुह्यकगन्धर्वयक्षविद्याधरोरगैः। कृतं कलकलाशब्दं श्रुत्वा भीतोऽसुरोऽब्रवीत् ॥ २७ ॥ दूत गच्छ कुतः शब्दस्तज्ज्ञात्वैहि पुनर्द्रुतम्। गत्वा दूतोऽपि यत्नेन ज्ञात्वैत्याहायुनन्दनः ॥ २८ ॥ शूर इन्द्ररथारूढो नहुषोऽजेय आगतः। इत्याकर्ण्यासुरः क्रुद्धो भार्यां दासीं च बल्लवम् ॥२९॥ हतो न वार्भो ब्रूतेति पप्रच्छ स पुनः पुनः। ते हतो भवता लीढः सत्यमित्यूचुरासुरः ॥ ३० ॥ दैवं हि बलवन्मत्वा दैत्यान् प्राहोग्रशासनः। सर्वैर्योध्दुं हि गन्तव्यं भीरून्हन्मि क्षणादिह ॥ ३१ ॥ इत्यादिश्यासुरान्योध्दुं सन्नद्धोऽगात्स तैः सह। क्रुद्धो हुण्डः समभ्येत्य नहुषं प्राह भीमवाक् ॥ ३२ ॥ मा गर्ज गर्ज मर्त्योऽत्थ हुण्डोऽस्मीह प्रतापवान्। जीवन्नैष्यसि पश्चात्त्वं सह देवैर्ममाग्रतः ॥ ३३॥ राजाह सोमवंशयस्य चरितं क्वापि नेदृशम्। शूरोऽसि यदि युध्यस्व वावदूकतयात्र किम् ॥ ३४ ॥ मां हन्तुमुद्यतस्यापि तव प्राणहरोऽस्म्यहम्। दत्तात्रेयाभिगुप्तोऽस्मि को मूढो मां प्रधर्षयेत् ॥ ३५ ॥ इत्युक्त्वा निष्ठुरं चापमुद्यम्याकर्णमाशुगान्। सन्धाय च ससैन्यौ तौ युयुधाते परस्परम् ॥ ३६ ॥ न दिवा न निशा यत्र भ्राजते तुमुले तराम्। हस्तिनो वाजिनो विद्धा मृता भग्ना रथा अपि ॥ ३७ ॥ असुराणां ववू रक्तस्रवंत्यो मांसकर्दमाः। गुरुं प्रणम्य नहुषः स्मृत्वा चैवात्रिनन्दनम् ॥ ३८ ॥ ऐन्द्रीं शक्तिमुमोचास्मै तया भिन्नो ममार सः। अथैत्य जयिनं सार्द्धं रंभयाऽशोकसुन्दरी ॥ ३९ ॥ प्राहास्मि धर्मपत्नी ते नहुषोपयमस्व माम्। स

प्राहाग्रे वरिष्यामि गुरोर्मे यदि रोचते ॥ ४० ॥ तथेत्युक्त्वा रथे तस्य सा रंभा चास्थिता मुदा । नहुषोऽभ्येत्य गुरवे नत्वा सर्वं न्यवेदयत् ॥ ४१ ॥ हृष्टो वसिष्ठ उद्वाहं सुलग्नेऽकारयत्तयोः । द्रष्टुं प्रस्थापयामास पितरौ नहुषं मुनिः ॥ ४२ ॥ नत्वा गुरुं रथारूढः प्रभयार्क इव श्रिया । पितरावेत्य तच्छोकं जहार परिसान्त्वयन् ॥४३॥ सरथं मातलिं रंभां स्वर्गाय प्रेरयन्नतः । प्रभोर्वरं गुरोर्वाक्यं श्रुत्वायुश्चेन्दुमत्यपि ॥ ४४ ॥ रतिस्मरोपमौ दृष्ट्वा स्नुषापुत्रौ ननन्दतुः । पित्राभिषिक्तो विधिवत् पित्र्यं राज्यं शशास सः ॥ ४५ ॥ सम्राट् चैन्द्रं पदं भेजे चिरं तेनैव वर्ष्मणा । वानप्रस्थविधानेन महिष्यायुः समं वनम् ॥४६॥ उषित्वाऽत्रिसुतं ध्यायन् लेभे सायुज्यमक्षयम् ॥ श्रीसत्यदत्तमर्थार्थी भजन्नेवं क्रमान्नृपः । मुक्त एवं तन्महिमा कोऽपि भक्तो न नश्यति ॥ ४७ ॥ इति श्री० श्री० प० प० श्रीवासुदेवानन्दसरस्वतीयतिमतिकलिते श्रीसत्यदत्तोपाख्याने चतुर्थोऽध्यायः ॥ ४ ॥ श्रीदत्त ॥

॥ श्रीदत्त ॥ सूत उवाच ॥ नतावनात्तसुभगव्रतोऽयं परमेश्वरः । तत्प्रभावं मुनिश्रेष्ठाः पुनः शृणुत सादरम् ॥ १ ॥ गोदावासी द्विजः कश्चिद्धरिशर्मा तदात्मजः। द्विदशाब्दो यस्य जन्या गुल्मोऽष्टाब्दः क्षयोऽभवत् ॥२॥ त्र्यब्दो जलोदरो जीर्णज्वर एकाब्द आग्रनः । अतिसारः सकासश्च चातुर्मास्यो भगन्दरः ॥ ३ ॥ त्रिदोषेणापि संक्रान्तं प्रेक्ष्य मृत्युन्मुखं पतिम् । तद्भार्या षोडशाब्दाऽगाच्छरणं विष्णुदत्तमित् ॥४॥ सौभाग्यं देहि मे ब्रह्मन् भर्ता मे रोगपीडितः । अत्युत्कटाः प्रतीकारा दैवाज्जाता निरर्थकाः ॥ ५ ॥ इत्यर्थितो दयालुः स साध्व्या तद्गृहमेत्य तम् । दृष्ट्वा कर्मविपाकं च पत्न्या व्रतमकारयत् ॥ ६ ॥ क्रमेणाशु क्षयं प्राप तत्तद्रोगः प्रतिव्रतम् । द्विजोऽथ तं हृदि स्पृष्ट्वा जजापोपमिषन्मनुम् ॥ ७ ॥ नीरुग्लेभे द्विजस्तेन भूतिमायुः प्रजा यशः । दिव्यां गतिं दत्तभक्तिमिहामुत्र च सद्गतिम् ॥८॥ एवं श्रीसत्यदत्तस्य व्रतं

पापप्रणाशनम् । तुष्टिदं पुष्टिदं नृणां भुक्तिमुक्तिप्रदायकम् ॥ श्रीदत्तानुग्रहेणैव कथितं च समासतः॥९॥वेदधर्मा उवाच॥एवं सूतमुखाच्छ्रुत्वा नैमिषेया महर्षयः । श्रद्धया सत्यदत्तस्य व्रतं चक्रुः सुसंहताः ॥ १० ॥ सत्रधर्मेण ते वत्स कांक्षन्तो दर्शनं विभोः । दध्युरेकाग्रमनसो दत्तदेवपदाम्बुजम् ॥११॥ अथ वायुः सुखस्पर्शः पुण्यगन्धवहो ववौ । तमनु ज्योतिषां राशिराविर्भूतः स्वमायया ॥१२॥ तेजोमण्डलमध्यस्थमुद्यन्तमिव भास्करम्। श्रीसत्यदत्तं द्रष्टुं तमशक्ताश्चर्मचक्षुषा ॥१३॥निमील्याक्षीणि ते विप्राश्चिन्तयन्तो हरिं हृदि । प्रार्थयामासुरव्यग्राः कथं नो दर्शनं भवेत् ॥ १४ ॥ इति चिन्तयतां तेषां वागासीन्मेघनिस्वना । उन्मीलयत नेत्राणीत्यनन्तेनेरिता द्विजाः ॥ १५ ॥ ततो ददृशिरे सर्वे शुद्धचित्ताश्च तष्टुवुः ॥ ऋषय ऊचुः ॥ नूनं भवानृषिर्नैव न वर्णाश्रमलिङ्गभाक् । निर्मितं भवतैवेदं विश्वं स्वांशांशतोऽखिलम् ॥ १६ ॥ न जानन्ति भवन्मायामोहिता दिव्यमुत्तमम् । भवद्धामात एवैते भ्रमन्त्यसुरभावगाः ॥ १७ ॥ कर्ता भर्तासि हर्ता त्वं प्रत्यक्षं तत्त्वमस्यपि । भो सर्वं खल्विदं ब्रह्म त्वमस्यात्मासि केवलम् ॥ १८ ॥ त्वदुदेति रमत्येतद्विश्वं त्वय्येव लीयते । अष्टमूर्तिभिराभिस्त्वमाभासीव जगन्मयः ॥ १९ ॥ निगूढतत्त्वं ते ज्ञातं यत्किञ्चिल्लोकदुर्ग्रहम् । चेष्टितं, ते प्रसादोऽयं प्राक्पुण्यैरनुभूयते ॥ २० ॥ वेदधर्मा उवाच ॥ एवं स्तुतस्तदा तुष्टो विश्वं स्वस्मिन्नदर्शयत् । उवाच च मुनीन्देवो मेघगम्भीरया गिरा ॥ २१ ॥ जानीतमागतं विप्राः प्रसादाय भवत्स्विह । तपसा ब्रह्मचर्येण यमेन नियमेन च ॥ २२ ॥ यज्ञादिना च बहुभिर्जन्मभिस्तोषितो ह्यहम् । सत्यदत्तव्रतेनातो वरं वृणुत माचिरम् ॥२३॥ ऋषय ऊचुः ॥ ज्ञापयास्मान्महादेव स्वभक्तान्कुरु निर्वृतान् । येन त्वमस्यात्मसाक्षी किं ब्रूमोऽनुग्रहं कुरु ॥ २४ ॥ श्री सत्यदत्त उवाच ॥ यद्यूयं श्रद्धया स्तोत्रं कृतवन्तश्च मे प्रियम् । योगसिद्धिकरं नृणां भुक्तिमुक्ति-

प्रदायकम् ॥२५॥देहान्ते मत्परानन्दस्वरूपं परमं पदम् । मनोवाचामविषयं यास्यथात्रैव सुव्रताः ॥२६॥ सन्निपाताक्षिरुङ्मेहकुष्ठश्लेष्मक्षयज्वरान् ॥ वातपैत्तिकगुल्माद्यान् देशाद्युत्थान् हरेदिदम् ॥ २७ ॥ पुत्रं वन्ध्याऽभयं त्रस्तो निःस्वः स्वं रोग्यनामयम् । मुमुक्षुः सद्गतिं यद्यद्यस्येष्टं स लभेद्व्रतात् ॥२८॥ वेदधर्मा उवाच ॥ इत्युक्त्वान्तर्दधे देवः सहसा महसां निधिः । स्वप्नदृष्ट इव स्वार्थो मुनयो विस्मयं ययुः ॥२९॥ एवंप्रभावं श्रीदत्तं शरणागतवत्सलम् । स्मर्तृगामिनमीशानं सम्पूज्य परमाप्नुहि ॥ ३० ॥ इति श्रीहृत्पुण्डरी० श्री० प० प० श्रीवासुदेवानंदसरस्वतीयतिमतिकलिते श्री सत्यदत्तोपाख्याने पञ्चमोऽध्यायः ॥ ५ ॥ श्रीदत्तात्रेयार्पणमस्तु ॥ श्रीदत्त ॥

---

## १६२ श्रीदत्तात्रेयप्रातःस्मरणस्तोत्रम्

प्रातः स्मरामि करुणावरुणालयं तं ।
श्रीदत्तमार्तवरदं वरदंडहस्तम् ॥
संतं निजार्तिशमनं दमनं विनीत-
स्वांतर्गताखिलमलं विमलं प्रशांतम् ॥ १ ॥
प्रातर्भजामि भजदिष्टवरप्रदं तम् ।
दत्तं प्रसादसदनं वरहीरदं तम् ॥
कांतं मुदात्रितनयं भवमोक्षहेतुम् ।
सेतुं वृषस्य परमं जगदादिहेतुम् ॥ २ ॥
प्रातर्नमामि प्रयतोऽनसूया- ।
पुत्रं स्वमित्रं यमितोऽनसूयाः ॥
भूयांस आतास्तमिहार्तबंधुं ।
कारुण्यसिंधुं प्रणमामि भक्त्या ॥ ३ ॥
लोकत्रयगुरोर्यस्तु श्लोकत्रयमिदं पठेत् ।
श्रीदत्तात्रेयदेवस्य तस्य संसारभीः कुतः ॥ ४ ॥

इति श्री. प. प. श्रीवासुदेवानंदसरस्वतीविरचितं
श्रीदत्तात्रेयप्रातःस्मरणस्तोत्रं संपूर्णम् ॥

---

## १६३ भूपाळी

उठी उठी मुनिनंदना । भक्त पातले दर्शना । त्यांची पुरवी तूं कामना । पाही नयन उघडूनी ॥ ध्रु० ॥ उघडूनियां करुणादृष्टी । दासा धरीं आपले पोटीं । नको येवूं देवूं हिंपुटी । घाली कंठीं मिठी

हर्षे ।। १ ।। हर्षे तुझे पदीं रंगले । दारागारा विसरले । निज देहा न भुलले । निवटले निजभावें ।। २ ।। निजभावें येतां शरण । लपविसी कां बा चरण । जेणें तरती दुष्टाचरण । मग मरणभय कैचें ।। ३ ।। नको करूं निष्ठुर मन । शीघ्र देई आश्वासन । तूं असशी करुणाघन । ताप शमन करि शीघ्र ।।४।। उठी उठी बा सद्गुरुराया । उठी उठी करुणालया । उठी उठी बा चिन्मया । निज माया आवरी ।।५।।

---

## १६४ भूपाळी

पहाटेसि उठोनि भक्त हर्षुनियां चित्तीं । दत्तगुरूप्रति भेटूं येती सह्याद्रीवरती ।। ध्रु० ।। कृतवीर्यात्मज सहस्रबाहू अर्जुन तो पुढती । कयाधुसुत जो भागवतोत्तम प्रल्हाद सुमती ।। १ ।। ययातिसुत यदु ज्याच्या वंशा देवहि वंदीती । मदालसेचा नंदन चौथा अलर्क ज्या म्हणती ।। २ ।। सुतपानामक भूसुर मुनिवर विष्णुदत्त सुमती ।। अन्यहि येती सुरमौनितती करिती ते प्रणती ।।३।। अनसूयेच्या बाळा दत्ता करितों तुज विनंती । उठा उठी विमला अरुण उदेला सरली हे राती ।। ४ ।। मंगलधामा घनश्यामा उठी उठी तूं निगुती । अरुण उदेला प्रकाश पडला पक्षी गलबलती ।। ५ ।। कुंकुम माखुनि प्राचिकामिनी हर्षुनि आत्मपती । येतो म्हणुनि ये लगबगुनी लाटी तम पुढती ।। ६ ।। द्विजाति उठती वेदा पढती वासुदेव प्रार्थी । उठीं उठी दत्ता श्रीगुरुनाथा दावी मुखदीप्ती ।। ७ ।।

---

## १६५ भूपाळी

उठि उठि बा आत्मया चिन्मया दत्तात्रेया ।। सोडुनियां गुणमय शय्या जागृत हो अपसय्या ।। ध्रु० ।। झाली बा प्रबोध पहाट विवेक हा अरुण ।। आला उजळित आशा आतां उगवे चित्किरण ।। १ ।।

फिकट पडला व्यवहारेंदू वैरि निशाचर। कामादिक हे लपले पाहुनि प्रकाश हा थोर ॥ २ ॥ दुस्तर्कादिक दिवाभीत दडले ते ह्या वेळीं। दुर्वृत्ती ह्या तारा गगनीं मावळल्या सकळी ॥ ३ ॥ शमादि विप्र पुढें सादर राहती सांडुनिया दर। उठि उठि बा तूं निजरूपा दावी ह्यां सादर ॥ ४ ॥ रागद्वेषमलोत्सर्गा करुनी आला पुढतीं। वासुदेवा भेट दे ह्याकरितां हे प्रणती ॥ ५ ॥

---

## १६६ प्रातर्भजन

( चाल—भूपाळीची. उठीं उठीं बा० राग विभास )

जागेपणीं सौख्याकरितां। आचरूं यत्नशता। श्रमलीं इंद्रियें मीळतां। दुःखप्राय सुख दत्ता ॥ ध्रु० ॥ दत्ता आम्हां कां परदेशी। करूनि तूं लपलासी। पुढें गती आमुची कैसी। व्हावी या समयासी ॥ १ ॥ तया सुखाही टाकुनी। शर्चींद्राच्या व्यवसानीं। बहिरंतर व्यवहृती सोडुनी। सुखी केलें मज कोणी ॥ दत्ता० ॥ २ ॥ विषय-सुख दुर्लभ असें। बालिशां क्षणभर भासे। घेतां घेतां केव्हां च नासे। शेवटीं होतें जें विषसें ॥ दत्ता० ॥ ३ ॥ अतितरसुलभात्युत्तमा। अतींद्रिय सुख हें श्रमा। हरूनि बा मंगलधामा। निजरूपीं दिल्हें आम्हां ॥ दत्ता० ॥ ४ ॥ अतिगहनीं निबिडानंदीं। कांहींच नेणों या तव पदीं। निरतिशय सौख्यास्पदीं। नेउनी कां देसी आधी ॥ दत्ता० ॥ ५ ॥ पृथुलघुप्रपंच हरुनी। इंद्रियोपरमा करुनी। सुख दिल्हें परी एक उणी। त्वत्स्वरूपज्ञानाची ॥ दत्ता० ॥ ६ ॥ आणी दुजें प्राक्संस्कारें। फिरविलें कां माघारें। हरुनी संस्कारचि सारे। निज-रूपीं स्थिर करा ॥ दत्ता० ॥ ७ ॥ वासुदेवा निजपद दावी। तळमळ व्यर्थ नसावी। निजसख्यें मज जीववीं। आतां त्वां न लपावें ॥ दत्ता आम्हां कां परदेशी० ॥ ८ ॥

---

## १६७ श्रीदत्तप्रबोधस्तवः

नित्यो हि यस्य महिमा न हि मानमेति।
स त्वं महेश भगवन्मघवन्मुखेड्य ॥
उत्तिष्ठ तिष्ठदमृतैरमृतैरिवोक्तै-
र्गीतागमैश्च पुरुधा पुरुधामशालिन् ॥ १ ॥

भक्तेषु जागृहि मुदाहि मुदारभावं।
तल्पं विहाय सविशेषविशेषहेतोः ॥
यः शेष एष सकल. सकलस्वगीतै-
स्त्वं जागृहि श्रितपते तपते नमस्ते ॥ २ ॥

दृष्ट्वा जनान्विविधकष्टवशान्दयालु-
स्त्रयात्मा बभूव सकलार्तिहरोऽत्र दत्तः ॥
अत्रेर्मुनेः सुतपसोऽत्र फलं च दातुम्।
बुध्यस्व स त्वमिह यन्महिमानियत्तः ॥ ३ ॥

आयात्यशेषविनुतोऽप्यवगाहनाय।
दत्तोऽधुनेति सुरसिंधुरपेक्षते त्वाम् ॥
क्षेत्रे तथैव कुरुसंज्ञक एत्य सिद्धा-
स्तस्थुस्तवाचमनदेश इनोदयात्प्राक् ॥ ४ ॥

संध्यामुपासितुमजोऽप्यधुना गमिष्य-
त्याकांक्षते कृतिजनः प्रतिवीक्षते त्वाम् ॥
कृष्णातटेऽपि नरसिंहसुवाटिकायां।
सार्तिकः कृतिजनः प्रतिवीक्षते त्वाम् ॥ ५ ॥

गंधर्वसंज्ञकपुरेऽपि सुभाविकास्ते
ध्यानार्थमत्र भगवान्समुपैष्यतीति ॥
मत्वास्थुराचरितसंनियताप्रबाधा
उत्तिष्ठ देव भगवन्नत एव शीघ्रम् ॥ ६ ॥

पुत्री दिवः खगगणान्सुचिरं प्रसुप्ता-
नुत्पातयत्यरुणगा अधिरुह्य तूषाः ॥
काषायवस्त्रमपिधानमपावृणूद्यन्
तार्क्ष्यांग्रजोऽयमवलोकय तं पुरस्तात् ॥ ७ ॥

शाटीनिभाभ्रपटलानि सुरेंद्रकाष्ठाभागं यतीन्द्र रुरुधुर्गरुडाग्रजोऽतः ॥
अस्माभिरीश विदितो ह्युदितोऽयमेव चंद्रोऽपि ते मुखरुचिं चिरगां जहाति ॥ ८ ॥

द्वारेऽर्जुनस्तव च तिष्ठति कार्तवीर्यः प्रह्लाद एष यदुरेष मदालसाजः ॥
त्वां द्रष्टुकाम इतरे मुनयोऽपि चाहमुत्तिष्ठ दर्शय निजं सुमुखं प्रसीद ॥ ९ ॥

एवं प्रबुद्ध इव संस्तवनाद्भूत्स मालां कमंडलुमथो डमरुं त्रिशूलं ॥
चक्रं च शंखमुपरिस्थकरैर्दधानो नित्यं स मामवतु भावितवासुदेवः॥ १० ॥

इति श्री० प० प० श्रीवासुदेवानंदसरस्वतीविरचितः
श्रीदत्तप्रबोधस्तवः संपूर्णः ॥

---

## १६८ काकडे आरती

काकडे आरती दत्ता तुजला ओवाळूं ॥ प्रेमभावें तुझे चरण हृदयीं कवळूं ॥ ध्रु० ॥ माया अविद्या एकत्र वळुनी काकडा केला ॥ स्वरूपानुस्मरणस्नेहामाजीं भिजवीला ॥ १ ॥ विवेकज्ञानाग्निज्वाळे-वरि सहसा पाजळिला ॥ पेटुनियां झगझगीत उजेड हा पडला ॥ २ ॥ द्वैतध्वांता समूळ ग्रासुनि मनोन्मनी शोभा ॥ फांकली तेव्हां पळ सुटे कामादिक शलभा ॥ ३ ॥ धावुनि आपोआप येती कामादिक शलभ ॥ जळती ज्यांचा अंत योग्यां दुर्लभ ॥ ४ ॥ काकडे आरती ऐसी उजळूं सोज्ज्वळ ॥ मीतूंपण हें हरपुनि होऊं केवळ ॥ ५ ॥ काकडे आरती० ॥

---

### १६९ भजन ( चाल—कटावाची )

सदाप्रमेया दत्तात्रेया, श्रुतिगणगेया दत्तात्रेया, अनसूयातनया दत्तात्रेया, सुरगणपूज्या दत्तात्रेया, मुनिगणगेया दत्तात्रेया, भवभयविलया दत्तात्रेया, संकटविलया दत्तात्रेया, मंगलनिलया दत्तात्रेया, प्रहर्षनिलया दत्तात्रेया, आपद्विलया दत्तात्रेया, संस्मरदभया दत्तात्रेया, सुंदरकाया दत्तात्रेया, अर्जुनवंद्या दत्तात्रेया, प्रल्हादेड्या दत्तात्रेया, अलर्कपूज्या दत्तात्रेया, यदुनृपवंद्या दत्तात्रेया, निजहृन्निलया दत्तात्रेया, भाविकदृश्या दत्तात्रेया, त्रिमूर्तिकाया दत्तात्रेया, नमोऽखिलेड्या दत्तात्रेया, वासुदेवगेया दत्तात्रेया ॥ १ ॥

---

## पूजेनंतर आरत्या

### १७० आरती गणपतीची

( चाल—आरतीभुवन सुं० )

आरती ओवाळूं गणेशा। गिरिशात्मजा विघ्ननाशा ॥ ध्रु० ॥ भयसंकटाघसंहरणा। शरणा ऱ्हस्वपाणिचरणा ॥ करुणाघना विघ्नहरणा। अरुणारम्यशूर्पकरणा ॥ चाल ॥ अरुणालेपपुष्पवसना। विघ्नवनामल, हतदानवकुल, त्राताभरकुल, कलिमलभंजना मतीशा ॥ विपदा वारिं मम गणेशा ॥ १ ॥ सिंदुरचर्चिताऽखिलांगा। सिंदुरासुरापहा अभंगा ॥ परिहृतभक्तदुःखरोगा। भजकाहिताभीष्टभोगा ॥ चाल ॥ आखुगा मत्तकुंजरांगा द्वैमातुरदरहर, लंबोदर सेवकसादर, तो तूं रक्षिं मज गुणेशा। पुरवी भक्ताच्या आशा ॥ २ ॥ नववारणस्वरूपातें। धरुनी रक्षी जगतातें ॥ यास्तव प्रार्थी मी तूंतें। सर्वथा नित्य रक्षिं मातें ॥ चाल ॥ मागें पुनरपि भक्तपते। स्मरण तुझें मम,

नित्य असावें, भावें तव गुणगण म्यां गावे, मंगलमूर्ते तव पद ध्यावें॥ द्यावें हेंचि वरदान ॥ आशापूरका सिद्धिबुद्ध्यधीशा । गिरिशात्मजा विघ्ननाशा ॥ ३ ॥

## १७१ आरती सरस्वतीची

आरति ओवाळूं शारदे । सुरवरवंदितपादे ॥ आरति ओवाळूं ॥ ध्रु० ॥ शुद्धस्फटिकमयी वरमाला । पुस्तक शुक सितकमला । वाग्जाड्या हरुनी । शुभमति दे देवि सरस्वति वरदे ॥ १ ॥ हंसावरि बसुनी सत्वर ये । श्रीमति भारति अभये । मन्मुखिं वास करी श्रुतिगेये । विजये निहताऽपाये । वारितनिजखेदे पारदे । भास्वति परमामोदे ॥ २ ॥ होती मूक हि ते वाचाळ । नलगे क्षणभरि काळ । तूं जरि करुणेनें केवळ । पाहतां एक वेळ । म्हणुनी वासुदेव शारदे । प्रार्थित परमानंदे ॥ ३ ॥ आरति ओवाळूं शारदे । सुरवरवंदितपादे ॥

## १७२ आरती २

जयजय भगवति भास्वति भारति सन्मतिदे ॥ नीराजये सरस्वति प्रतिमतिदे प्रपदे ॥ जयजय वरवरदे ॥ ध्रु० ॥ विधिहरिहरमुखलेखर्षभगीते महिते ॥ वाणीश्वरि वेदनुते श्रितजनकल्पलते ॥ उत्तमशीले विमले कांते सर्वमते ॥ परिपालय नो भीतेरनिशं दिव्यगते ॥ १ ॥ वाग्जाड्यबुद्धिमांद्यप्रभृतिकुदोषहरे ॥ बुद्धिप्रकाशके सति सद्गतिदेऽकहरे ॥ कृपया परयाऽऽलोकय भजकान्नोऽघहरे ॥ विद्यामेधासन्मतिधृतिदे पापहरे ॥ २ ॥ या शारदाब्दकांता मालाबुजहस्ता ॥ या शुकपुस्तकसहिता ब्राह्मी हंसगता ॥ या नरमुनिसुरविनुता त्रैलोक्यप्रथिता ॥ सा वासुदेवगीताऽवतु नः श्रुतिमाता ॥ ३ ॥

## १७३ आरती त्रिपुरसुंदरीची

जय जय बाले बालेंदुद्योतितभाले। भालेंद्वनुमितलीले पाह्यस्मान् विमले ।। ध्रु० ।। सृष्टिस्थितिलयलीले स्वाश्रितजनपाले। समस्तमंगलमूले खलदानवकाले। नीराजयामि ते पदकमले विमले। प्रालेयाचलबाले बाले शुभलीले ।। १ ।। कृतिजनमानसहंसे कृतदुष्टध्वंसे। वारितभक्तत्रासे मंदस्मितहासे। मुनिजनमानसवासे मुक्ताभातनसे। आस्तिकजनविश्वासे चागमनिश्वासे ।। २ ।। वेदशिरोगीते त्रिपुरसुंदरी ललिते। त्रिबीजमंत्राराधितपीठे देवनुते। यतिवासुदेवनमिते निजजनकल्पलते। विद्याधिराजदयिते मयि तेऽस्तु दृगार्ते ।। ३ ।।

---

## १७४ आरती लक्ष्मीची

( चाल——सुंदरमुख० )

आरति करूं विष्णुपत्नि क्षीरसिंधुजे। करविरपुरिं रुचिरगात्र देखुनी तुझें ।। ध्रु० ।। सुंदर तव मंदिर चव दे मदीक्षणीं। बहु जंव जंव पाहुं तंव तंव जे क्षणोक्षणीं ।। दिसे अभिनव पिसे होति भव देखुनी क्षणीं। सार जणूं देवकारागिरि लवमात्र ना उणी ।। चाल ।। तेथें मोठें गोमटें रूप तुझें पाहुनि माझें स्वांत मजेदार हें साजे ।। आरति० ।। १ ।। मस्तकिं भगलिंग नाग चांग विलसती। खेटगदामातुलिंगपात्र शोभती ।। चारि करीं दीप्ति बरी लाजवी खरी। चंद्राइना चंद्र मना भुलवि हे हरी ।। चाल ।। रमणी हरिणी चिमणी वासुदेवि कुलदेवी महादेवि तारि अब्धिजे ।। आरति करूं० ।। २ ।।

---

## १७५ आरती यक्षिणीची

ओवाळूं यक्षिणि तुज विमले। विज्ञान दे मज पहिलें ।। ध्रु० ।। कार्तिकमासीं वैशाखमासीं। होती उत्सव भले ।। ओवाळूं० ।। १ ।।

शरदिं वसंतीं नवरात्र होती। उत्सव तुझे चांगले ॥ ओवाळूं० ॥ २ ॥ आश्विनीं दसरा होतां वाटे। दुसरा आला नाक येथें वत्सले ॥ ओवाळूं० ॥ ३ ॥ फाल्गुनिं शिमगा होका दावी। रंगा तुझे गांविं शिवमाहिले ॥ ओवाळूं० ॥ ४ ॥ वळखुनि भावा तुवां वासुदेवा। भवा हरुनि तारिलें ॥ ओवाळूं यक्षिणि तुज विमले० ॥ ५ ॥

---

## १७६ आरती रेणुकेची

जय जय रेणुक ईश्वरि जमदग्नेर्दयिते ॥ मयि तेजस्विनि करुणांशो भूयाद्दयिते ॥ ध्रु० ॥ शंकररूपस्य मुनेर्या साध्वी कांता ॥ गौरी साक्षाज्जाता रेणोर्या दुहिता ॥ पातिव्रत्यप्रथिता रामस्य च माता ॥ माता जगतां नोऽव्यात् त्रिभुवनविख्याता ॥१॥ भूभारभूतदुष्टक्षत्रिय-कुलनाशे ॥ कृत्याऽभूद्या हेतुर्विश्वोद्भवनाशे ॥ नीराजयामि तां त्वां पूरितसुजनाशे ॥ तारय मृत्युमुखान्मां शिक्षितकीनाशे ॥ २ ॥ दत्तात्रेयं कृत्वाऽऽचार्यं सह्यतटे। पत्यनुगमनं चक्रे माहुरपुरनिकटे ॥ याऽद्यापि तत्र माता जागर्ति प्रकटे ॥ तद्रूपेऽस्तु सदा मे चित्तं सन्निकटे ॥ ३ ॥ जय जय रेणुक ईश्वरि जमदग्नेर्दयिते ॥ मयि तेज-स्विनि करुणांशो भूयाद्दयिते ॥

---

## १७७ आरती श्रीकृष्णेची

आरति ओवाळूं श्रीकृष्णे। तुजला वारिततृष्णे ॥ ध्रु० ॥ जी पातकवार्ता न च उरवी। सेवककामा पुरवी। त्रिभुवनिं सत्कीर्ती जी मिरवी। भजतां दैन्या नुरवी। बरवी गति दे जी। श्रीकृष्णे तूंची परिहृततृष्णे ॥ १ ॥ जीच्या उभयतटीं अपरिमित। तीर्थें असती शस्त। स्नानें पानें जीं पुनीत। करिती ऐसी मात। व्यासें वर्णियली

श्रीकृष्णे। तूंची प्रशमिततृष्णे ॥ २ ॥ अपार तव महिमा न च सीमा। लागे ती तूं परमा । पुर्विसि निजकामा निजनामा । घेतां देसी धामा। म्हणुनी वासुदेव श्रीकृष्णे। तुजला प्रार्थि अनुष्णे ॥ ३ ॥ आरति ओवाळूं० ॥

---

## १७८ आरती श्रीकृष्णेची

जय जय भगवति कृष्णे परिहृतजनतृष्णे ॥
नीराजयामि कृष्णे शमितत्रिविधोष्णे ॥ ध्रु० ॥
त्रिविधं पापं हर्तुं भवतीह समर्था ॥
त्रिविधं तापं हर्तुं महतीह समर्था ॥
विविधं रिष्टं दातुं कान्यात्र समर्था ॥
विविधं हीष्टं दातुं कान्यात्र समर्था ॥ जय० ॥ १ ॥
लत्तामर्पय भगवति कलये खेदहरे ॥
मत्तान्घातय दुर्मतिविलये भेदहरे ॥
वित्तां मेऽर्पय सन्मतिनिलये भेदहरे ॥
सत्तां द्योतय भास्वति निलये वेदपरे ॥ जय० ॥२॥
भगवति कृष्णेऽनुष्णे कलये त्वामघदे ॥
स्वागमतृष्णे तृष्णे कलये त्वं मघदे ॥
शिक्षापर्यत्यततं स्मरणं ते वरदे ॥
निजवासुदेवदण्डिनि तिष्ठतु खलु परदे ॥ जय० ॥ ३ ॥

---

## १७९ आरती श्रीअनसूयादेवीची

जय जय भगवति भास्वति मतिमति वन्द्यसति ॥
अनसूये सद्व्रतये तेऽस्तु नमोहमति ॥ जय देवी जय० ॥ १ ॥

या देवहूतिदुहिता कर्दममुनिजाता ।
अत्रिमहर्षेर्दयिता त्रिभुवनविख्याता ॥
श्रीदत्तदेवमाता कान्ता श्रुतिगीता ।
पातिव्रत्ये निरताऽऽतिथ्येऽप्यासक्ता ॥ जय देवी जय० ॥ २ ॥
धर्मानुभावतो या सत्या मृतकान्तं ।
कौशिकमजीवयत्स्वयमपि लोकाकान्तं ॥
कृत्वा लेभेऽनंतं च सुतं खलु कान्तं ।
कुर्यादनसूया सा भजतां नोऽकान्तम् ॥ जय देवी जय० ॥ ३ ॥
अनुजस्तनुजश्चाभूद्यस्या हरिरेषा ।
साक्षाच्चैतन्यकला जगति स्त्रीवेषा ॥
दोषानाशु स्मरतां हरतु शुभाशेषा-।
ननसूया गतरोषावतु नो हरिपोषा ॥ जय देवी जय० ॥ ४ ॥

---

## १८० आरती नर्मदेची

जय जय नर्मद ईश्वरि मेकलसञ्जाते ॥
नीराजयामि नाशिततापत्रयजाते ॥ जय जय० ॥ १ ॥
वारितसंसृतिभीते सुरवरमुनिगीते ॥
सुखदे पावनकीर्ते शंकरतनुजाते ॥
देवापगाधितीर्थे दत्ताग्र्यपुमर्थे ॥
वाचामगम्यकीर्ते जलमयसम्मूर्ते ॥ जय जय० ॥ २ ॥
नन्दनवनसमतीरे स्वादुसुधानीरे ।
दर्शितभवपरतीरे दमितान्तकसारे ॥
सकलक्षेमाधारे वृतपारावारे ।
रक्षास्मानतिघोरे मग्नान्संसारे ॥ जय जय० ॥ ३ ॥

स्वयशःपावितजीवे मामुद्धर रेवे।
तीरं ते खलु सेवे त्वयि निश्चितभावे ॥
कृतदुष्कृतदवदावे त्वत्पदराजीवे।
तारक इह मेऽतिजवे भक्त्या ते सेवे ॥ जय जय० ॥ ४ ॥

---

## १८१ आरती सूर्याची

जय भगवन् जय सवितर्ज्योतिर्मय भानो ॥
आरती तव धीदीपक पञ्चेन्द्रियभानो ॥ ध्रु० ॥

सृष्टिस्थितिलयकारण जगतां त्वं वन्दे ॥
आत्मा त्वं जीवानां चालक भो देव ॥
पालक सर्वज्ञस्त्वं साक्षी धीदेव ॥
मयि करुणालेशं ते मुदमर्पय देव ॥ १ ॥

निमिषादिप्रलयान्तः कालस्त्वदधीनो- ॥
ग्रहगणतारानक्षत्रेशस्त्वदधीनः ॥
लोकालोकगिरीशो परिकृतपरिचलन- ॥
त्वां नौमि सदाहं भूसुरसुरसुमनः ॥ २ ॥

यदृग्यजुःसामसु गीतं त्वत्तेजोरूपम् ॥
सर्वोपनिषद्भिस्ते संस्तुतचिद्रूपम् ॥
सत्यज्ञानदयाघन सुखसागररूपम् ॥
दर्शय मां तारय मां नय मां तव रूपम् ॥ ३ ॥

श्रीसूर्य त्वं चक्षुर्जगतस्त्वां स्तुत्वा ॥
त्वत्तो ज्ञानं लब्ध्वा बुद्ध्वा तद्भूत्वा ॥
श्रीयाज्ञवल्क्य ऋषिवर्यपदं जित्वा ॥
जनकं मैत्रेयीं संविदो हृद् भित्वा ॥ ४ ॥

सविता मे पश्चात्तात्सविता पुरतश्च ॥
सवितोत्तरतो मे स्यात्सविताऽधस्ताच्च ॥
सविता भूमानीशो रक्षतु नमनाच्च ॥
वासुदेवमुपात्रं कुरु मां छात्रं च ॥ ५ ॥

इति श्री० प० प० श्रीवासुदेवानन्दसरस्वतीकृत-
सूर्यनारायण आ० संपूर्णा ॥

---

## १८२ आरती महादेवाची

( चाल—साधी )

जय सुखकारक तारक तारकजिज्जनक। जनकलुषांतक शंभो शंभो कुर्वधिक ॥ ध्रु० ॥ शुद्धस्फटिकप्रतिभ प्रतिभटदर्पहर। हर शिव परममुदर्पक दर्पकदर्पहर ॥ हर मदघं गंगाधर धरशय देववर। देववरापत्पावक पावकदृक्प्रवर ॥ जय सुखकारक० ॥ १ ॥ स्थित्युद्भवलयकारक कारकशक्तिधर। शक्तिधर द्वैमातुरमातुरभीष्टकर। करकलितपरश्वधमृग मृगधरतिलक हर । हर निजभक्तहितादर दरहर शक्तिवर ॥ जय सुखकारक० ॥२॥ स्वीकुर्वार्तिक्यं शिव शिवयेदं विदश। दशकर पंचानन हर हर मदघं धीश ॥ धीशयनान्यो मत्तो मत्तो यदि पापः। पापहरोऽन्यो भवतो भवतोषदनेश ॥ जय सुखकारक तारक० ॥ ३ ॥

---

## १८३ आरती शंकराची

( चाल—आरती भुवन )

आरती ओवाळूं ईशा। तव पदा आपदाविनाशा ॥ ध्रु० ॥ कर्पूर-दुग्धफेनधवला। स्थिरचरभूततपाला ॥ धाकें दवडिसि तूं काळा।

हस्तीं धरिसी नृकपाळा ॥ चाल ॥ नीळा गळा मुंडमाळा शोभवि ज्याचा नाथ गणांचा जो भूतांचा ईश उमेचा कांत शांत आमुचा महेशा ॥ तो तूं देव भावनाशा ॥ आरती० ॥ १ ॥ वर्णूं काय तुझी लीला । त्वत्पदिं ठेवि एक वेळां ॥ बाणासुर शिर त्या वेळा । त्यावरि करितां तूं डोळा ॥ चाल ॥ लाजवि ज्याची भूती विपुला । देवैश्वर्या जो सुरवर्या दमवि अनार्या आर्य करिसि तूं महेशा । तो तूं पुरविं माझि आशा ॥ आरती० ॥ २ ॥ रावण एक ख्याल तुजला । ऐकवि सर्व देसि त्याला ॥ दक्षें दुष्टपणा केला । अजशिर योजिसी तयाला ॥ चाल ॥ होतां दुष्ट बुद्धि विधिला व्याधचि होउनि तूं करिं धरुनी शर धनु अजुनी गगनीं दिससी दुष्टनाशा ॥ त्वद्यशा कोण वर्णि ईशा ॥ आरती० ॥ ३ ॥ बगिच्या श्मशान हो ज्याचें । सहचर थोर भूत ज्याचे ॥ लेपन चिताभस्म ज्याचें । भूषण रुंडमाल्य ज्याचें ॥ चाल ॥ उपवीत तोही ज्याचें । गजचर्मांबर जो नंदीश्वरवाहन महेश्वर जो सुरवरकिन्नरांचि आशा ॥ पुरवी त्या नमूं महेशा ॥ आरती० ॥ ४ ॥ त्वत्पदीं सर्वभाव धरुनी । प्रार्थी एकचित्त करुनी ॥ मागें हेंचि साच जननी-। जनका घेयिं हेंचि कार्नीं ॥ चाल॥ न मनी इहामुत्रभोगा । आणी पाणी जोडुनि चरणीं क्लेशोद्धरणीं प्रार्थी त्वत्पादभक्ति ईशा । दे मज नाहि अन्य आशा ॥ आरती ओवाळूं ईशा० ॥ ५ ॥

---

## १८४ आरती शिवाची

( चाल—सुंदरमुख तुं० )

व्योमकेश त्रिभुवनेश अमरकुंजरा ॥ नीराजनमुररीकुरु गुप्तनिर्जरा ॥ ध्रु० ॥ त्रिपुरासुरसमरधीर वीर वरहरा ॥ अभयंकर जयशंकर असुरवरहरा ॥ सर्वेश्वर करुणाकर त्रिपुरसुंदरा ॥ धरवरपुर शशि-

शेखर रुचिरदशकरा ॥ तारा माराऽपहरा भय हरुनी कर धरुनी वर करुनी मज परावरा ॥ १ ॥ गंगाधर उरगहार अहिपरिष्करा ॥ चर्मांबर गांगनीरपूरसच्छिरा ॥ पंचवक्त्र भो त्रिनेत्र पार्वतीवरा ॥ काशीपुरकृतविहार तारकेश्वरा ॥ रुद्रा निद्रा तंद्रा-परिहरुनी निज-भजनीं स्थिर करुनी ठेविं मम हरा ॥ व्योमकेश० ॥ २ ॥ सर्वोत्तम मोक्षधाम तूंचि पशुपती ॥ शिवाधवा वासुदेवा देयिं सन्मती ॥ मंद अज्ञ अलस मी कसि करूं स्तुती ॥ स्तवुनि वेद पाउनि खेद शेषि करि न्ती ॥ तेव्हां शर्वा सर्वा अविषयचि असासि हेंचि जाणुनि साचि नति करूं वरा ॥ व्योमकेश० ॥ ३ ॥

---

## १८५ आरती महादेवाची

जय जगदीश्वर शंकर हर गौरीवर भो । नीराजये पदं तव भव-द्वदव शंभो ॥ ध्रु० ॥ देव यद् जगदुद्भवशेषे शक्तिधव । सदसद्यदा सदाशिव न न चोभयमे भव ॥ कारकशास्त्राद्यपि भव नो न च कालजव । आकृष्य सर्वमेव त्वं च सीदेव ॥ १ ॥ स त्वं पर्यालोचक एतस्यास्येकः ॥ उत्पत्तिस्थित्यंतक ईशकृतालोकः ॥ अव्यक्तजीव-मूलक आविष्टात्रिकः ॥ अंतर्यामी पालक आसेवितनाकः ॥ २ ॥ पंचमुखो दशहस्तो मस्तकधृतसोमः ॥ सोमार्यमाग्निनेत्रस्त्वहिसूत्रः सोमः॥ सोमादियज्ञभोक्ताऽवितसाधुस्तोमः ॥ सोमव्रतप्रियोऽवतु निज-हृद्वासोमः ॥ ३ ॥ ज्येष्ठं सद्गुरुपीठं साधिष्ठ गोष्ठं ॥ श्रितपूर्वो-त्तरकाष्ठं सर्वजनश्रेष्ठं ॥ आश्रितनंदिकपृष्ठं श्रेष्ठं शितिकंठं । अहि-भूषितप्रकोष्ठं वंदे बिंबोष्ठं ॥ ४ ॥ हतमायश्रितगेयं निहतेच्छापायं ॥ सत्पदवीगाविधेयं दर्शितमूपायं ॥ भक्त्यादेयममेयं निर्जितदैतेयं ॥ नीराजयेष्टकायं गणेशसुतगेयं ॥ ५ ॥

---

## १८६ आरती श्रीविष्णूची

( चाल—सुंदरमुख तुंदि० )

पंचारति धरुनि हातिं म्हणुनि आरती। ओवाळिन मधुसूदन देयिं सन्मती ॥ ध्रु० ॥ नारायण भक्तशरण कमलजापती। अजित कृष्ण विजिततृष्ण आर्यगोपती ॥ जन्ममरणपाशहरण भुवनसत्पती। दरकर्षण संकर्षण मुक्तसद्गती। तो हा, अघहा, मुरहा, दामोदर, निहतासुर, हो सुखकर पाहुनि आरती ॥ पंचारति० ॥ १ ॥ हरुनि अका निजभजका पाळिसी हरे। कधिं तवका आधि न मुखा सेविती सारे। तरि हरि कां त्या तवका दुःख गांजि रे। श्रीच्या धवा वासुदेवा रूप तव बरें ॥ दावीं ठेवीं ठेवीं वरकर शिरिं करिं मजवरि करुणा, देयिं पदिं रती ॥ पंचारति० ॥ २ ॥

---

## १८७ आरती श्रीरामाची

श्रीराम जयराम जयजयराम पदे ॥ नीराजयामि तेऽच्युत परिहृत-नतखेदे ॥ ध्रु० ॥ दशरथराजकुमारं विष्णोरवतारं ॥ कौशिकमख-गोप्तारं चोध्दृतमुनिदारं ॥ शिवकार्मुकभङ्क्तारं सीताभर्तारं ॥ परिहृत-भार्गवसारं वंदे श्रुतिपारं ॥ १ ॥ येनाश्रुत्य गुरूक्तं राज्यमपि त्यक्तं ॥ वनमाश्रित्य विरक्तव्रततो बहु कृत्तं ॥ रक्षोवृंदं छंदं सीतायाः परित्यक्तं॥ पूरयतो मारीचाभिधरक्षोमुक्तं ॥ २ ॥ सीताविरहार्तोऽदादूगृध्रा-यापि गतिं ॥ कबंधहादात्प्रेम्णा शबरीतोऽपचितिं ॥ सुग्रीवेष्टकरोऽहन्वालीमतिनीतिं ॥ सीतावार्तां हनुमत्तो वै चास्य कृतिं ॥ ३ ॥ बध्वा भीताब्धिनुतोऽश्माभिरब्धौ सेतुं ॥ लंकामेत्य सवंशं पृथिवीभर-हेतुं ॥ रावणमाजौ हत्वा सकपिः कृतमंतुं ॥ लंकां तद्भ्रात्रेऽदात्तं नौम्यविकेतुं ॥ ४ ॥ नलनीलर्क्षांगदसुग्रीवार्यानुजयुतः ॥ सीता-लक्ष्मणवातात्मजहनुमत्सहितः ॥ सहितः श्रीरामो नौ भवतु सदा-महितः ॥ यतिवासुदेवविनुतोऽयोध्याराज्यरतः ॥ ५ ॥ श्रीराम० ॥

## १८८ आरती परशुरामाची

भार्गवकुलावतीर्णो जमदग्नेस्तनयो । यः पंचमोपि षष्ठो ह्यवतारो स्विनयः । श्रीरेणुकात्मजः शिवशिष्यो, वरविजयः । सोस्मान् भार्गव-रामोऽवतु सुंदरकायः ॥१॥ जय जय भृगुकुलदीपक भजकाभीष्टकर । करकलितपरश्वधशरपीठानिष्टहर ॥ ध्रु० ॥ त्रिसप्तवारं जित्वात्युद्ध-त्वमत्तरसा—पालान् खलान् प्रदत्ता संपूर्णापि रसा । कश्यपमुनये येनार्जुनबाहूंस्तरसा । चिच्छेद योत्र लीला यस्यास्ते सरसा ॥ २ ॥ कौंकणदेशस्थेभ्यो विप्रेभ्यो भक्त्या । कौंकणदेशान् प्रददौ सम्पाद्य च शक्त्या । रामः प्रसीदतूत्तमवीर्योस्मन्नत्या । सत्या ध्यायेम सदा तस्य पदं मत्या ॥ ३ ॥

---

## १८९ आरती पंचायतनाची

जय सवितर्गजमुख नगतनये ईश हरे ॥ भेदावलिमपनेतुं ध्याये हृत्कुहरे ॥ ध्रु० ॥ बुद्धिप्रेरक सवितुर्नः सिद्धं रूपं ॥ ध्याये ह्यघहृत् श्रेष्ठं देवस्य च रूपम् ॥ प्राणेंद्रियहृद्बुद्धिप्रसिद्धगणरूपं ॥ रक्षति तस्माद्गणपतिरिति विश्रुतरूपम् ॥ १ ॥ मानसमुखजडजातं यद्भासा रूपं ॥ भाति श्रुतिरिति देवी नगतनयारूपं ॥ एकादशमुखभासक-मीशस्य हि रूपं ॥ श्रुतिसिद्धं शंकर इति भवहारकरूपम् ॥२॥ मानस-सुखदुःखानां हारकमजरूपम् ॥ हरिरिति वेदो ह्यवदत्सच्चित्सुखरूपम् ॥ ईशाद्यनेकनाम्नां भासक तद्रूपं ॥ सत्यं मम मनसि हि कुरु सच्चित्सुखरूपम् ॥ ३ ॥ जय सवितर्गज० ॥

---

## १९० आरती दक्षिणामूर्तींची

जय जय दक्षिणमूर्ते वेदशिरोगीते । नीराजयामि ते पदकमले सत्कीर्ते । ध्रु० ॥ चिन्मुद्रितकरकमलं चिंतितदं विमलं । चित्तप्रेरक-

मीडे चिन्मात्रं ह्यकलं। चित्रक्रियमविकारं क्षालितनिजशमलं। शमलं ददातु नोऽसौ हृत्वाघं सकलं ॥ १ ॥ कर्पूरगौरभासं कैलास-निवासं। स्वोद्धृत्या अवतीर्णं भूमौ मृदुहासं। दर्शनमात्रेण हृतस्वीय-जनत्रासं। वटतरुमूलनिवासं नौम्युद्धृतदासं ॥ २ ॥ मौनव्याख्या-प्रकटितपरतत्त्वं रिपुहं। योगिजनप्रियमघहं हृतनतजनमोहं। तं वासुदेवयतिरहमत्रिजमिव भवहं। वंदे दक्षिणमूर्तिं वारितसन्देहम् ॥ ३ ॥

---

## १९१ आरती दक्षिणामूर्तीची

भगवन्नमोस्तु तेऽगतये। दक्षिणामूर्तये स्वगतये ॥ ध्रु० ॥ सनकादीनां संदेहं। हर्तुं जग्राह सुदेहं। यस्तं हृतनतसंदोहं। साक्षाच्छंकरं विदेहं ॥ (चाल) ॥ प्रणमामि हापितस्वमोहं। चिन्मुद्रितकरकमलं दुस्तरभवसागरहरमाचार्यवर्यमुद्गतये। तस्मै नमोऽस्तु सन्मतये ॥ १ ॥ मौनं यस्य व्याख्यानं। प्रवयःशिष्यमोहशमनं। वर्षिष्ठवेष्टितं युवानं। मुद्रां चिन्मयीं दधानं ॥ (चाल) ॥ अंगुष्ठतर्जनीयोगव्याजेन तु यो जीवेश्वरयोरभेदमनयोरेवासूचयद्धि कलये। तं त्वां नमोस्तु जित-कलये ॥ २ ॥ कैलासवासिनं सोमं। भूमाववतीर्णं सोमं। दक्षिणमूर्तिं प्रियसोमं। तमहं वन्दे धृतसोमं ॥ (चाल) ॥ यो मंदरागमपि भक्तं, कृपया रक्षति शीघ्रं, संसृतिभीतिं हरति, प्रणतिं करोमि सत्पतये तस्मै सद्विद्यापतये ॥ ३ ॥ करधृतपुस्तकाचिन्मुद्रं। वन्दे देवं जितनिद्रं। भक्तावनार्थमस्ततंद्रं। वाहनमाश्रितं सुभद्रं ॥ (चाल) ॥ भद्रं राति भक्तिमद्भ्यो, यो निखिलेशो, विद्याधीशो, निर्वाणेशो, देवस्तस्मै यतिपतये, नम आद्याय महागतये ॥ ४ ॥ वैराग्यतैलसंसिक्तं। श्रद्धा-भक्तिवर्तियुक्तं। चंचद्बुद्धिपात्रनिहितं। विद्दीपमर्पये दीप्तं ॥ (चाल) मोहध्वांतहरादमुतः, हृद्ग्रंथिलयः, संशयविलयः, कर्मप्रलयः, प्रभवति तेऽर्पये स्वगतये, दीपं सर्वतत्त्वगतये ॥ ५ ॥ शेमुष्येव दाक्षिणास्या।

अभिमुखमस्य मूर्तिरस्याः । संचिंतनाद्दूरीयस्याः । मुक्तिः सहापि यन्नमस्या ॥ ( चाल ) ॥ संसारसागरोद्धर्त्री, स वासुदेवानन्दयतीडथः, साक्षाच्छंभुः, सुरमुनिवंद्यो, दाक्षिणामूर्तिरार्तिहृतये, सेव्यः श्रद्धया सुगतये ॥ ६ ॥

## १९२ आरती आचार्यांची

जय जय शंकर भगवत्पूज्यपदाचार्य । आर्यवरार्तिक्यमिदं तेऽस्तु जितानार्य ॥ ध्रु० ॥ त्यक्ते वैदिकधर्मेऽधर्मेरितमतिभिः । मतिभिद्भिः कृतिभिन्नैर्जैनैर्दुर्मतिभिः । व्याप्ते भारतवर्षे वर्षे सुमनोभिः । कृत ईशो योऽवातरदंशैः सुमनोभिः ॥ १ ॥ मंडनजयेन मंडनमकरोन्निजकीर्तेः । परकायावेशाद्यैरनवद्यैर्जूर्तेः । हर्ता जगतश्चरितैर्दुरितघ्नैरार्ते-। र्भेत्ता ध्यानाद्गतिदो यो निजसन्मूर्तेः ॥ २ ॥ अरुणेनेव ध्वांते विजिते स्वलवेन । प्राग्दुष्टजनेऽर्क इव प्रादुरभूद्येन । प्रस्थानद्योतेन प्रभुणा सुनयेन । विजितं द्वैततमस्तं वंदे विनयेन ॥ ३ ॥ श्रीपद्मपादवार्तिक-कृत्तोटकहस्ता-। मलकप्रमुखच्छात्रेणानंता विजिता । शिथिलीभूता वृषसृतिरपि दृढतां नीता ॥ वाचां श्रीपीठस्थितिरपियेनोपात्ता ॥४॥ व्यक्तीकृत्य सतीं सति-सूक्तिं यः स्वमुदे । सत्यवतीसुतसूक्तिं यश्चाद्वैतविदे । चतुरो व्यधान्मठान्यो दिक्ष्वाम्नायभिदे । तं वासुदेव-दंडयहमात्रिजमिव वंदे ॥ ५ ॥ जय जय शंकर भगवत्पूज्यपदाचार्य । आर्यवरार्तिक्यमिदं तेऽस्तु जितानार्य ॥

## १९३ श्रीगुरुव्यासपीठदेवार्तिक्यं

जय जय सद्गुरुमूर्ते करुणामृतमूर्ते ॥
श्रीव्यास कृष्ण शंकर सच्चित्सुखमूर्ते ॥ ध्रु० ॥

श्रीव्यासकृष्णशंकरभगवत्पूज्यपदं ।
भूध्दृतनतजनसज्जनतारकगुरुपादं ॥
वेदपुराणसुगीतं प्रत्यग्ब्रह्मपदं ॥
दातारं त्रातारं वन्दे श्रुतिपादम् ॥१॥

आद्यगुरुं आद्यकविं चाद्यशिवं वन्दे ॥
श्रुतिसारं मतिसारं धीसारं वन्दे ॥
श्रुतिपारं धीपारं परपादं वन्दे ॥
शुद्धाद्वैतं हार्दं बोधं तं वन्दे ॥ २ ॥

भूभाराज्ञसुतारं त्रिगुणात्मकरूपं ॥
धृत्वा कालिमलहारकस्वांगं निजरूपं ॥
योऽर्पयतीशो भजकं स्वसुखं निजरूपं ॥
तं व्यासकृष्णगुरुं वन्दे शिवरूपम् ॥ ३ ॥

वन्दे सनकचतुष्कं कपिलं गुरुमूर्तिम् ॥
ऋषभं दत्तात्रेयं शुकनारदमूर्तिम् ॥
वन्देऽहं संवर्तनपंचकगुरुमूर्तिम् ॥
तारय मां स्वात्मसुखं दर्शय हर जूर्तिम् ॥ ४ ॥

सुश्वेतकेतुदुर्वासोजडभरतं च ॥
रैवतसुवामदेवौ वन्दे स्वसुखं च ॥
द्रविडाचार्यं वन्दे गोविन्दपदं च ॥
गौडपादवित्ररणगुरुरूपाचार्यं च ॥ ५ ॥

सर्वब्रह्मसुविद्याचार्यानपि वन्दे ॥
श्रीगुरुपरमगुरून् परमेष्ठिगुरून्वन्दे ॥
वन्दे परात्परान्गुरुगुरुरूपान्वन्दे ॥
अखिलब्रह्मसुविद्यानिधिदांस्तान्वन्दे ॥ ६ ॥

आत्मानमन्तरात्मानं वन्दे सततम् ॥
वन्दे परमात्मानं सर्वात्मसु ततम् ॥
ब्रह्म परं वन्देऽहं देशिकदृग्विततम् ॥
दशदिक्पालकरूपं हृद्दिशि मेऽस्तु ततम् ॥ ७ ॥

वन्दे सुभद्रपीठाधीशान्ब्रह्मेशान् ॥
दिक्पालान्वसुरुद्रादित्यान्विश्वेशान् ॥
यक्षान्भूतान्नागान् गन्धर्वाप्सरसान् ॥
साश्विनिपितृकान्वन्दे भक्त्याहं वरदान् ॥ ८ ॥

स्कन्दं ऋषभं शूलं कालं च महान्तम् ॥
दक्षादिगणांस्तां दुर्गां विष्णुं तम् ॥
वन्दे स्वधां च मृत्युं रोगान्देहस्थान् ॥
गणपतिमपश्च मरुतो देवान् दिक्संस्थान् ॥ ९ ॥

पृथिवीं गंगादिनदीः सप्तसमुद्रांश्च ॥
वन्दे मेरुं च गदां त्रिशूलं वज्रं च ॥
वन्दे शक्तिं दण्डं खड्गं पाशं च ॥
वन्दे चाङ्कुशमेतत्सोमादीनां च ॥ १० ॥

वन्दे गौतमभारद्वाजौ ऋषिवर्यौ ॥
विश्वामित्रं कश्यपजमदग्नी चार्यौ ॥
वसिष्ठमत्रिमरुन्धतिं सप्तर्षिं सभार्यं ॥
वन्देऽहं परममुदप्रदमुदवर्याचार्यम् ॥ ११ ॥

कौमार्यै सुब्राह्म्यै वाराह्यै च नमो ॥
वैष्णव्यै चामुण्डायै देव्यै च नमः ॥
माहेश्वर्यै च नमः सत्यै सततं नमो ॥
वैनायक्यै देव्यै चास्तु नमः ॥ १२ ॥

आधारशक्तिकूर्मानंतं पृथिवीं च ॥
वन्देऽहं क्षीराब्धिं श्वेतद्वीपं च ॥
मणिमण्डपं च वन्दे सुकल्पवृक्षं च ॥
सुरत्नवेदिं सुरत्नं सिंहासनं सच्च ॥ १३ ॥
सर्वस्वशक्तिं कमलासनमेतद्वन्दे ॥
वन्दे गणपतिमीशं वागीशं वन्दे ॥
दुर्गां च क्षेत्रपालं ब्रह्माणं वन्दे ॥
वन्दे रुद्रं स्वीकुरु पूजां नो वन्दे ॥ जय० जय० ॥१४॥

इति श्री० प० प० श्रीवासुदेवानन्दसरस्वतीकृत-
श्रीगुरुव्यासपीठदेवार्तिक्यम् ॥

---

## १९४ आरती श्रीमौनिस्वामींची

जय जय मौनिस्वामी आरति पदकमळा। तुमच्या भावें ओवाळूं हृतभजकमळा ॥ ध्रु०॥ सोलापूरीं देशस्थद्विजविप्रकुळीं। प्रगटुनि सेउनि वीरव्रत भावेंकरुनी। श्रीमद्दत्तात्रेया आराधुनि ध्यानीं। अनन्यवृत्त्या ठेवी लोकीं हो मौनी ॥ १ ॥ सेवुनि पंचाग्न्यादिक दुश्चर तप करुनी। देहा दंडुनि नाना तिर्थाटन करुनी। घेउनि चातुर्थाश्रम वाडिस राहूनी। लावी नाना लोकां दत्तात्रेयभजनीं ॥ २ ॥ कलियुगिं गुरूभक्तीची कमाल दावूनी। होवुनि विजितेंद्रिय जो हिंडे साध्ववनीं। लोकानुग्रह करुनी पवित्र करि अवनी। श्रीमद्दत्तगुरूची भक्ती पसरूनी ॥ ३ ॥ ठेवी प्रीती बाळावरि जो भूतखळां। दंडी दंडी होउनि उद्धरि शिष्यकुळा। सेवुनि परहंसाश्रम अश्रम करि विमळा। भजका भजकार्तिहरा नमुं तत्पदकमळा ॥ ४ ॥ बांधी दत्तालय जो उज्जयिनीनगरीं। पंढरपुरिं पुण्यपुरीं जो सोलापूरी। धर्मसवापरि

करवी सव वाडीक्षेत्रीं । रामकवीशाकरवीं पाळी पूजारी ॥ ५ ॥ आजानुबाहु मूर्ति सुविशालचि छाती । ज्याची तो हा मौनी पसरुनि सत्कीर्ति । ऱ्यधिकशताब्दीं सोडी वाडीवरि मूर्ति । तो संतत निवसे। निजभक्तांच्या चित्तीं ॥ ६ ॥

---

## १९५ आरती श्रीदत्ताची

जय तत्त्वज्ञाननिदान। अनसूयात्रिनंदन । त्वत्पदपद्मावरून। पंचप्राण ओवाळीन ॥ ध्रु० ॥ करिं कृपा मायबापा । वारी सर्व पापा तापा। निजमार्ग करी सोपा। अनुकंपा पूर्ण करून ॥१॥ जें अत्यद्भुत तव रूप। तें ह्या चित्तीं आपो आप। राहो जें काम कोप। उपशमवी प्रगटून ॥ २ ॥ तपश्चर्या हे आमुची। त्वत्स्मृती नित्य होवो साची। दुर्वासना मनाची तुठवी हेंचि देईं दान ॥ ३ ॥ गुण भावें तुझे गावे। अनासक्तिनें मीं वागावें। सत्संगा आदरावें। मज द्यावें हें वरदान ॥ ४ ॥ अनुरक्ती त्वत्पदीं व्हावी। विषयीं विरक्ति व्हावी। कष्ट येतां धृति व्हावी। सेवा बरवी घे हातून ॥ ५ ॥ तार तत्सतूब्रह्मार्पण। असो संपूर्णाचरण। दृढ धरूं तव चरण। न मला त्वदन्य शरण ॥ ६ ॥ जय तत्त्वज्ञाननिदान० ॥

---

## १९६ आरती श्रीदत्ताची

( चाल—आम्हांवरि कां सखे )

ओवाळूं आरती यतिपतिला । ध्रु० ॥ अत्रिसदनीं वनीं भिक्षुसे होउनी स्वांगनाप्रार्थनासाठिं विधिविष्णुहर कोटिरविभासुर आले ते बाळ झाले भले हे तयाला ॥ आरती यतिं० ॥ १ ॥ तो त्रिमूर्त्यात्मक लोकसंरक्षक कर्ता हर्ता भर्ता दत्त भवभी हरी चित्तशुद्धी

करी वारि निजभजकभीती हरी तयाला ॥ आरती यति० ॥ २ ॥ भिक्षु होउनि मठीं बससि कृष्णातटीं संकटीं देसि मिठी शेवटीं भाविकां सेवकां वासुदेवा न कां हा न ये प्रत्यय न्याय कैसा हा बोला भला ॥ आरती यतिप० ॥ ३ ॥

---

## १९७ आरती श्रीदत्ताची

( चाल—होयीं सावधान० राग हमीर कल्याण )

ओवाळूं आरती । आतां विषयीं ठेवुनि उपरति दत्ति ठेवुं रती॥ध्रु०॥ निर्गुणरूपा दत्तात्रेया देहत्रयवाती ॥ वासनाघृतयुत पेटवुनी संविद्दीपीं करूं आरती ॥ ओवाळूं० ॥ १ ॥ जीवें भावें ही करितां आरती रमली निजरूपें मती ॥ द्वैतध्वांता दडपुनि निगुती भासली स्वयंज्योती० ॥ ओवाळूं ॥ २ ॥ सच्चित्सुखमय वासुदेव हर्षुनि करितां आरती ॥ परिपूर्णचि दे निजरूपधनतति ठेवुनी प्रीती ॥ ओवाळूं० ॥ ३ ॥

---

## १९८ आरती श्रीदत्ताची

अनसूयानंदना तुज ओवाळूं आरती ।
अनसूयानंदना मज निज चरणीं दे रती ॥ ध्रु० ॥
सर्वात्मा तूं असोनि वससी बा माहुरीं ।
निजदासा भेट द्याया भिक्षा कोल्हापुरीं ।
बससी बा विश्वावासा सह्याद्रिगिरिवरी ॥ अनसूया० ॥ १ ॥
निजभजका भेट देसी निजनामोच्चारणें ।
कलिमाजीं बाहती तुज दत्ता या कारणें ।
जाणुनि हें तुजपाशीं केलें म्यां गाऱ्हाणें ।
निजचरणा दावि याहुनि नच दुसरें मागणें ॥अनसूया० ॥२॥

यतिरूपा घेउनी तूं वससी कृष्णातटीं।
निजदासा भेट द्याया जागृत तूं संकटीं।
प्रत्यक्ष गाणगापुरीं दिससी दासा मठीं।
समजुनि हें वासुदेव तुज जोडी करपुटी ॥ अनसूया० ॥ ३ ॥
करिसी तूं स्नान नित्य प्रेमें काशीपुरीं ॥

## १९९ आरती श्रीदत्ताची

जय जय दत्तात्रेया जय आत्मारामा।
वाढविसी तूं भक्ती देउनि निजमहिमा ॥ ध्रु० ॥
नवविध भक्ती केवळ होय वशीकरण।
होतां प्रणयाख्य गुणें बद्धचि तव चरण ॥
क्षणभर न जाशी यास्तव सोडुनि भक्तजन ॥
तुझ्या स्वातंत्र्याला खास असो नमन ॥ १ ॥
संपद्वार्ताहि नको आम्हां भुक्ति नको ॥
प्रौढी गुरुत्वहि नको पूज्यपणाहि नको ॥
लोकोत्तरगुणगणयुत भगवान् चित्तिं टिको ॥
यासाठीं हा जीव त्रिकरण तेंहि विको ॥ २ ॥
जय जय दत्तात्रेया जय आत्मारामा ॥
वाढविसी तूं भक्ती देउनि निजमहिमा ॥

## २०० आरती श्रीदत्ताची

(चाल—सुंदरमुख०)

नीराजन ओवाळिन अत्रिकुमरा। भयभंजन मनरंजन जय दिगंबरा ॥ ध्रु०॥ भयमार्जन नयदर्शन तूं कृपाकरा ॥ भवतर्जन अघ-

भर्जन पाहि मां हरा ॥ पिशुनार्दन रिपुमर्दन अभयवरकरा ॥ दत्ता मत्ता चित्ता भवहरणीं तव चरणीं ध्रुव करुनीं ठेविं सुरवरा ॥ नीराजन० ॥ १ ॥ कृष्णातटिं रम्य मठीं वससि सुंदरा । जे संकटिं बाहति मिठि देसि त्यां बरा । मी हिंपुटि झालों पोटिं भिवुनि संसारा ॥ मूर्खा रंका ह्या कां पाहसिना बाहसिना धावसिना सकलमलहरा ॥ नीराजन० ॥ २ ॥ दत्त सदा मत्तमदा हरुनि रक्षितो । त्यक्तमदा व्यक्तपदा सतत दावितो । भक्त पदासक्त सदा वासुदेव तो ॥ तरि कां सुमुखा न सुखा पावतसे कां हो असें व्हात्रें कसें बोल सुखकरा ॥ नीराजन० ॥ ३ ॥

---

## २०१ आरती श्रीदत्ताची

करितों प्रेमें तुज नीराजन स्थिरवुनियां मन ॥ दत्तात्रेया सद्गुरुवर्या भावार्थेंकरुन ॥ ध्रु० ॥ धरणीवर नर पीडित झाले भवरोगें सर्व ॥ कामक्रोधादिक रिपुवर्गें व्यापुनि सगर्व ॥ योग याग तप दान नेणती असतांहि अपूर्व ॥ सुलभपणें निजभजनें त्यासी उद्धरि जो शर्व ॥१॥ अत्रिमुनीच्या सदनीं तीनी देव भुकें येती ॥ भिक्षुक होउनि अनसूये- प्रति बोलति त्रयमूर्ती ॥ नग्न होउनी आम्हां प्रति द्या अन्न असें वदती ॥ परिसुनि होउनि नग्न अन्न दे तंव ते शिशु होती ॥ २ ॥ दुर्वासाभिध मौनी जाहला शंभुप्रमथेंद्र ॥ ब्रह्मदेव तो झाला चंद्र तो उपेंद्र ॥ दत्तात्रय जो वीतनिद्र तो तारक योगींद्र ॥ वासुदेव यच्चरण चिंतुनी हो निश्यातंद्र ॥ ३ ॥ करितों प्रेमें तुज नीराजन स्थिरवुनियां मन । दत्तात्रेया सद्गुरुवर्या भावार्थेंकरुन ॥

## २०२ आरती दत्ताची

आरति करूं भवदवदव भाविक निज भजकां। अनुकंपी जो उद्धरि नरहरि दत्तात्रय लोकां ॥ ध्रु० ॥ निज भजकांचा आमुचा साचा असती कनवाळू॥ तुजसम मंगलधामा परमा नेणोंचि कृपाळू॥ तूं अघहारक तारक कारक गणपाळू॥ परम कृपाळू तूं स्नेहाळू तारिसि निजलोकां॥ १ ॥ अत्रिमुनीच्या भावा भुलुनि होउनि तदधीन॥ अनसूयेचे उदरीं जो धरी अवतार संपूर्ण ॥ दत्तात्रेय यतीश्वर ऐसें मिरवी अभिधान ॥ वासुदेव यच्चरण चिंतुनी पावन करि लोकां॥ २ ॥ आरति करूं भवदवदव भाविक निज भजका॥ अनुकंपी जो उद्धरि नरहरि दत्तात्रय लोकां॥

---

## २०३ आरती दत्ताची

आरती दत्तात्रेया। ओवाळूं तुझिया पायां। जय जय योगिवर्या। करुणासिंधो गुरुराया ॥ध्रु०॥ अत्रीला वर देवोनी। गुणातीत तूं असोनी त्रिगुणात्मक तूं होवोनी। वारिसि भजकांची माया॥१॥ कृतवीर्यात्मज अर्जुन। भावें धरी तव चरण। योगर्द्धि त्या देऊन। केला पावन त्वां तया॥२॥ प्रऱ्हादें धरितां पाद। त्याचा वारिसि खेद। यदुराजाचाही भेद। वारिसि वेदसुगेया ॥ ३ ॥ भाविक जो विष्णुदत्त। तव पदिं ठेवी दृढ चित्त। त्या देशी अक्षय वित्त। अनियत्तगुणा तूं आर्या ॥ ४ ॥ सोडूनि भववैभव। जोडूनि भाववैभव। पदीं रंगे वासुदेव। त्यावरि करी बरी दया ॥ ५ ॥ आरती दत्तात्रेया। ओवाळूं तुझिया पायां। जय जय योगिवर्या। करुणासिंधो गुरुराया ॥

## २०४ उपनिषद् आरती

ईशावास्यमिदं भवता त्यक्तेनात्मसुखं नित्यं ॥ भुंजीयाद्यदिहानित्यं नेक्षे कस्य स्विदसत्यं ॥ कुर्वन् वर्षशतं कर्मासक्तो जीवतु चात्महनस्तु भ्रमं ॥ प्रयांतु कोऽपि समुच्चिनोतु कृत्यं कांक्षे ते पदं हि सत्यं ॥ १ ॥ केनेषितं त्वदन्येन मन आधीश धीशयेन ॥ भवता करणकरणेन व्यापृतिरेषा संगेन ॥ घटतेऽविदितविदित पर ते उशन् ह वै पर ॥ मेऽत्र तु पामर आद्य परात्पर शरणं त्वमेव मे सत्यं ॥२॥ यो हि सुकेशाद्यैः पृष्टो ब्रह्मा देवानामीष्टे तत उदिता विस्पष्टा श्रेष्ठा यद्विद्या प्रेष्ठा ॥ॐ मित्येतदस्य रूपं शिक्षाभिज्ञः कोशपरज्ञो यो वेत्ति ज्ञः स त्वं प्रत्यगभिन्नः सत्यज्ञानाद्यात्मासि हि तथ्यः ॥ ३ ॥ आत्मा वा एतदीरसर्वं प्रज्ञानात्मा त्वमपूर्वं यं श्वेतकेतवे वेदपूर्वं आरुणिरूचे गतगर्वं यं त्वां जनको वैदेहो याज्ञवल्क्यतः शब्दयुक्तितस्त्वां विनतो नीराजयामि नित्यं श्रुतिशिरोरत्नैरिह सत्यं ॥ ४ ॥

---

## २०५ आरती श्रीदत्ताची

जय मायामय कायत्रयपर यतिवर्या ॥ वाक्यान्वेष्या ध्येया सच्चिरसुखनिलया ॥ ध्रु० ॥ ज्यानें पाहति ऐकति जाणति हे हुंगती । कर्में करिती ज्याला प्रज्ञानचि म्हणती । ब्रह्मादिक चेतनिं चिति जें ब्रह्मवदती । तें प्रज्ञान ब्रह्मचि मयि तूं त्रयमूर्ती ॥ १ ॥ परिपूर्णात्मा राहुनि जो विद्वन्मूर्ती । धीसाक्षित्वें स्फुरतो अहमिति ज्या वदती । जो स्वत एव सुपूर्ण ब्रह्म जया म्हणती । तो मी ब्रह्म असें हें ठरवा मच्चित्तीं ॥२॥ सन्नामरूपवर्जित अद्वय एक सदा । जो ज्या तद्वोलति जो श्रोत्यासचि वरदा । देहाद्यतीत ज्याला त्वं म्हणति अभेदा । तो तूं आहेस असें लक्षूं आनंदा ॥ ३ ॥ स्वप्रभ अपरोक्षत्वें हा असें ज्या वदती । अभिमानादि प्रत्यग् आत्मा जो म्हणती । जें दृश्य

जगत्तत्त्व ब्रह्म असें कथिती । तो हा आत्मा ब्रह्मचि तूं देवज्योती ॥४॥ फिटले संशय तुटले हृद्ग्रंथी खुटले । कर्मौघपाश हटले विटले क्लेश भले । लपले मृतिशोकादिक तूं शिष्या कळलें । जेव्हां अद्वय एक ब्रह्मज्ञानबळें ॥ ५ ॥ जय मायामय० ॥

## २०६ आरती श्रीदत्ताची

आरति ओवाळूं अनसुया-। तनया दत्तात्रेया ॥ आरति ओवाळूं ॥ ध्रु० ॥ सर्वांतरिचें जें निजगूज । साक्षीभूतचि तेज । संसार-वृक्षाचें आदिबीज । तो हा सद्गुरुराज । विरजब्रह्म जया म्हणति तया । श्रीगुरुदत्तात्रेया ॥१॥ सात्विक हृदय हें आरती । निजकर्मांच्या वाती । विवेकस्नेहानें त्या निगुती । भिजवुनि ज्ञानज्योती । पाजळुनि पेटविल्या । ओवाळाया श्रीगुरुदत्तात्रेया ॥ २ ॥ आरति उजळीतां ह्या चित्ता-। मध्यें तिळभर ध्वांता । वावहि नच मिळतां दृश्यता । आलि निमेष न जातां । सोहं प्रकाश हा हो सखया । श्रीगुरुदत्तात्रेया ॥ ३ ॥ प्रकाश आरतीचा हा थोर । सबाह्य अभ्यंतर । मीतूंपण हाचि अंधकार । जाळुनि झळके फार । वेगळा वासुदेव तेथुनियां । नोहे दत्तात्रेया ॥४॥ आरति ओवाळूं अनसूया-। तनया दत्तात्रेया ॥

## २०७ वेदान्तपरनीराजनम्

नीराजयामि तेऽमाये दत्तात्रेयपदे अभये ॥ ध्रु० ॥
यस्मिन्क्षणप्रभालोका लोकोत्पादके न भाति ।
भासिततारको मृगाङ्को नार्को भासितोऽपि भाति ॥
(चाल) नत्वा महानुभाव तं त्वां । तिमिरवारणं, दीप्तिकारणं, द्योतितेक्षणं, दीपं दर्शयामि गतये नमस्ते साधूनां पतये ॥नीरा०॥१॥

सोपाधिको यदालोको, नात्र स पावको विभाति ॥
लोकप्रकाशकोऽयमर्कोऽप्येको यत्र नैव भाति ॥
(चाल-) अनुभात्येतमेव भातं। निखिलं जगति, श्रुतिरिति वदति, स्मृतिरपि च सती तस्मै नमोऽस्तु जितकलये ॥ नीरा० ॥२॥
ईदृश एव तव ब्रह्मन् हृद्वाङ्मार्गातिगमहिमन् ॥
स्वप्रभ चात्मरते भगवन्, दीपैःस्तवैश्च किं भूमन् ॥
(चाल-) भक्त्याथाप्यमेयधामन्, जलधय आपो, रवये दीपो, नृभिरिव तापोपशमोऽयमर्प्यते हरये, तुभ्यं संसृतेररये ॥नीरा० ॥३॥
न त्वं प्रवचनतो लभ्यस्त्वं न च मेधयापि लभ्यः ॥
बहुना श्रुतेन नो लभ्यस्त्वितरैर्योगैर्न हि लभ्यः ॥
(चाल-) स त्वं ह्येकभक्तिलभ्यः। श्रुतिरिति वदति, स्मृतिरपि भवति, प्रमितिर्भवति, ह्येकान्तभक्तिमेवमभये,चेत्थं प्रार्थये सुगतये ॥नी०॥४॥
एषु त्वमेव भूतेषु स्थिरचरजङ्गमात्मकेषु ॥
गूढोऽस्यात्मा त्वं तेषु श्रेष्ठेषु चापि मानवेषु ॥
(चाल-) स्पष्टं प्रकाशसे नातः। सूक्ष्माग्र्यमतिः, संज्ञकवृत्ति, व्याप्ता वासुदेवहृदये, मदीये दीप्त एध्यमाये ॥ नीरा० ॥ ५ ॥

इति श्री० प० प० श्रीवासुदेवानन्दसरस्वतीविरचितं
वेदान्तपरनीराजनं संपूर्णम् ॥

---

## २०८ आरती भोजनपात्राची (शिरोळ)

जय जय सद्गुरुभोजनपात्रा सुपवित्रा। नीरांजन उररीकरि करि शुचि मम गात्रा॥ ध्रु०॥ मध्यान्हीं द्विजसदनीं श्रीगुरु येवोन। शिरोळग्रामीं कामीप्सितदाते अन्न। मागति तेंव्हां भोजनपात्र नसे म्हणुन। ब्राह्मणि वदतां गुरु तुज घेती आदरुन॥ १॥ प्रणवें

